ते स्थाने २ निरमिमताथयशिविराणि, अक्षमन्त च सप्त-विंशति-सहस्राणि पदानामाक्रान्तुम् । परं सहसा समरवेलः शैत्यातिशयकृतेन श्वासेन पीडितः, नार्टनश्च तिमिरदोषादेकमपि वस्तुद्वित्वेन लक्षयितुं प्रवृत्त इति षोडश शतोत्तराष्टाविंशतिसहस्राणि पदानां गतोऽपि मृत्युभयात् परावर्तनाय बाध्यतामगात् । मलेरीः एकविंशति-वर्ष-देशीय इर्विनश्च सहोपजनौगतावन्येद्युरारोढुं परं सहसैव नीहारपाताद् घनागमनाच्च मृतौ मार्गे एव । तदा द्वितीयमहासमरावधि कृताः सकला अपि प्रयासाः विफलतामेवाभजन् ।

द्विपंचाशदुत्तरैकोनविंशतितमेऽब्दे स्विट्जरलैण्ड-देशात् पुनरेकमभियातृदलं समागच्छत् मार्गदर्शकत्वेन च तेनसिंहं शेरपाजातीयमवृणात् । स रैमेन्ट-लेम्बर्ट-संज्ञकेनान्यतमेन सदस्येन सह प्राभवदष्टाविंशति सहस्राणि पंचदशोत्तरं शतपद्वयं च चरणानामधिरोढुम्, ऐच्छच्च शिष्टमपि लंघयितुम् । परं हा रे मात्सर्य ! येन वशीकृतो दलाध्यक्षो नानुजानादिमं भारतीयं शिखर-विजयश्रेयोभाजनं भवितुम् ।

दुर्मना अनेन व्यवहारेण तेनसिंह आगामिनि वर्षे आंग्लदेशयाभियानदलाध्यक्षेण सेनान्या हण्टेन भूयः साहाय्यायामन्त्रितः सत्यावश्यकत्वेऽनुमतिमेवाचिनोऽपि शिखराधिरोहणाय सममकरोत् । नेता च सहर्षमिदं स्वीकृत्याधिकृतसदस्यता तस्यान्यमनुत पर नास्य चर्चां भूटनीतया व्यधात् । अन्ततो हिलेरी-संज्ञकेनान्यतमेन सदस्येन सह तेनसिंहः त्रिपंचाशदुत्तरैकोनविंशतितमे हायने गिरिशिखरमजित-पूर्वमिदं विजित्यैव व्यश्राम्यत् ।

नेपालाभिजनोऽपि दार्जिलिंग-वासात् तेनसिंहो भारतस्यैव नागरिक इति तस्य विजयो भारतस्यैव मानं वर्धयतितमाम् । कस्य नाम सत्कारस्य भाजनता न सोऽगमत्तदवधि ? भारतराजधान्यामितरस्थानेषु चाधिगतातिमान आंग्लदेशाधीश्वर्या सपरिजनो लन्दन-नगरे निमन्त्रितः पुरस्कृतश्चाभूत् । अधुना भारतीय-पर्वत-रोहण-गोष्ठ्या निर्देशकः सन् भारतीयान् शैलाभियान शिक्षयति ।

किं न कर्तुं शक्ता भारतीया उत्साहेरंश्चेद् ? युवकानां प्रेरणादायकमिद कर्म तेनसिंहस्य । अस्मिन्वर्षेऽपि दलद्वयेनैतदभियानं कृतम् । तत्र चीनाः स्वसाफल्याय विकत्थन्ते पर न ज्ञायते, किमत्र सत्यम् ।

# कल्पिता विमान-यात्रा

आसीत् तापसी निशा दीर्घतरदिवसकृत-सविभागेव तनीयसी, स्थवीयसी चासक्ति समीरणे, पटीयसी मुहुस्ताम्यमानरसरसातृपोद्बोधने, लघीयसी च निद्राणशिशुरुदित-विहित-कर्णज्वरे । अध्यास्त गगनशयनं सकल-दिशा-प्रसारित-करश्चन्द्रिका-धवलितजगतीतलो मज्जयन् भुवन धवलिम-सागरे तारा-सनाथो निशापतिः । स्तिमित-गुणे नभसि, कुलायकवलिते विहगकुले, निर्मक्षिके भपणंपर-कौलेयक-कृत-जागरे च जनपथे, भुजगगणपीत-शेष इव दूरागमन-जनित-श्रान्ति-हृतगतामिव च मन्दं वातिवाते, विसर्जित-सकलकरणीयः सपरिजनोऽहं हर्म्यपृष्ठमध्यासिषम् । पतित एव चास्तृतास्त रणीये शयनीये, विगत-तापानुकलिते चिराभिलषिते जडिमनि विलय-काम इव सपद्येव प्रतीक्षमाणयेव निद्रयाऽऽलिंगितोऽभवम् । सुखसुप्तश्चाहं नाज्ञासिष क्व वर्त इति ।

अथातीते निशीथे शयान एवान्वभवम् कस्यापि मसृणतो पहसित-नलिनीदलस्य रमणीकरस्य जनितरोमहर्ष स्पर्शम् । आलोकयं च कामपि निशाधिदेवतामिव प्रफुल्ल-तारका, प्रहसितामिव शुचिस्मिता, चन्द्रिकामिव विकचकुमुदकर्णपूरां लावण्यापहसित-सुररमणीरामणीयका शनैः शनैस्तनौ स्पृशन्ती प्रमदाम् । दृष्ट्वैव च चकित इव, स्तब्ध इव, जडित इव, तन्द्रित इव, विसंज्ञ इव न प्राभवं किमपि प्रतिपत्तुं निभालयन्, केवलं विस्फारितेन चक्षुषा मूर्तिमतीमिव सुन्दरताम् । न जाने क्व गता तदा सदागतिमपि परिभवन्ती मनसश्चपलता, विलीना कस्मिन्नपि महा-मोहाम्बुधाविन्द्रियाणा स्फुरणा, कृतकृत्यतामलभत दृष्टैकदर्शनीयं नयनयुगलम् । तया स्थितं च विस्मयसागरे निमज्जन्तम्, पिबन्तं चाकण्ठं तदीयरूपसुधा मा स्नपयन्तीव स्मितरसवृष्टिभि, उज्ज्वलयन्तीवोन्मुद्रितमुखकमल-संपुटाद् विगलितेन विद्युद्द्युतिसखेन दन्तरोचिषा, प्रक्षालयन्तीव च नयनसितिम-सरित्-स्रोतसा, मलकण्ठ-काकली-मधरयता मधुरतया मम श्रवण-कुहरयोर्वचोऽमृतमुदगिरत्—किमिति सखे ! न परिचिनोषि मां श्वेत-द्वीपैव-निलया तव बालसखी मंजुलाम् ? चिरात् स्मरन्त्या अपि न भवान् नयनगोचर इति मनोज्वरं जुषाणाऽद्य प्रणिधानेनेह स्थितं भवन्तमबोधिषं रणरणक-प्रवणिता च सज्जित-नमोरथोदचलम् अमुं देशं प्रति । अपि कुशलिनी

ते लोक-यात्रा ? किमिति जोषमास्से ? एहि, यापय दिनानि विगलितचिन्ता-ज्वराणि धिक्कृत पुरन्दर-पुर-रामणीयके मम पुरे विहरन्। अलमिह मक्षिकानिचयनिचिते होश्यारपुरे मशकवृन्तकर्णवीणारवं श्रुत्वा। इति वदन्त्येव किमपि जल्पितुमप्रभवत्येव मयि विचारयत्येव 'केयम्, कुत इयम्, कथमिह समागता, किमिति चिकीर्षितमस्या, बालमस्य च मा भणति, नाभ्युपगच्छामि चिरं स्मरन्नपि परिचितामिमाम्। मोहिन्यस्या आकृतिः। कुत्र च निनीषति माम्? न प्रभवाम्यात्मनः। गते च मयि का दशा भविष्यति शिशूनाम्। किं प्रतिपत्स्यते वराकी गेहिनी? किं वा विचारयिष्यति तत्र भवान् जनकः। चरमे वयसि स वर्तते' इति बहुधा सा सबलं हस्तग्राहं जग्राहापचकर्ष च बहिस्तात्। मन्त्रमुग्ध इव चाहमुदचलं मणिरणित-मुग्धमञ्जीर-निक्वाणप्रतिस्वनिनि पथि तामनु। निष्क्रान्तेन च भवनाददृश्यत प्रसारित-दीर्घपक्षयुगलं गमनाभिमुखतया सघर्घरारशब्दं विशालकायं नभोयानम्। अपावृते च तद्द्वारे द्विज इव वैनतेयोदरे सकौतुकं प्राविशम्। मामनु च साऽप्युत्प्लवमानेव सोपान-पथे प्रविश्य द्वारे समजीघटत्। मयैव सहैवस्या मसृणतरतूलिकाऽपदपाया सुनमासन्द्या (स्प्रिंगदार चेयर) उपाविशत्, प्रतीक्षमाणमिव चावयोरुपवेशनम् अंगीकृतव्योमयानं यानमुदपतत्। उच्चलति च तस्मिन् सहसाऽऽहतोऽपि सरभसोल्लतनाभानेन पतनोन्मुखोऽपि पूर्णनाऽभिमुखोऽपि तस्याः स्पर्शौषधेन प्रबोधित चैतन्य इव समाहितोऽभवम्।

ततस्तस्या वार्त्तालापेषु सदानितमना नभसि विचरन् जालमार्गेण बहिर्व्यलोकयम् दृष्टवांश्च सकलमपि ज्योतिर्मण्डलं विभासयितुमिव प्रवृत्तमिदं भुवन-तलम्। क्षीरस्निग्धा पीयूषवर्षिणी कौमुदी दिगाभोगेषु शिखरिशिखरराजिषु, कान्तार-प्रान्तेषु, निद्राणकेसरि-घोणास्वरघोरासु गिरिगुहासु, सुप्त पतत्रिगण-द्विगुणितश्यामलिमनि तरुलताषण्डे, उद्यानवीथीषु, प्रतोलीषु भवन मूर्धसु, लतामण्डपेषु, निभृतसुप्तक्षेत्र-पालासु केदारपालीषु च सुखं स्वपन्तीवारोचत। क्रीडनकानीवाभ्रंलिहानि हर्म्याणि, रजतरेखा इव शान्ततरङ्गलेखाः सरितः, मणिगुम्फितदलानि क्रीडापर्वतक्षुपाणीव हिमकणचितानि तरुलता गुल्मानि, पुत्तलिका इव नरनार्योऽदृश्यन्त पृथिवीस्थिताः। वान्तधूमा सविषेव काल-भुजंगी न्यभाल्यत कुटिलं धावमाना धूम्रशकटी। क्वचिदुद्गमनाभिलाषुका सोत्कण्ठेव गगनस्य धरणी प्रत्यस्मानुच्छ्वसन्तीव, क्वचिच्च पर्वत-शिखराणि परिरम्भमाणेव, क्वापि च लीयमानेव वसुमत्या शैलराजिरपरत्र च प्रतिदिशि धावमानेव तरुपरम्पराऽन्यत्र च शाद्वलानीवारण्यानि परतश्चारण्यानीव केदार सरणिरुपालक्ष्यत।

सुधापूरस्नात इव निखिलेऽपि दिगाभोगे, चन्द्रिका-चन्द्रिते नभोमण्डले नीलाऽपि सघालिप्तेव मेघराजिरवर्तत, जलधरमण्डलगते च व्योमयाने जालमार्गमा-

च्छादयति नीहार-राशौ छन्ने इव चक्षुषी न किमपि निभालयितुं प्राभवताम्। रजत-कलायित, सुधापिण्डायित, क्षीरफेनायित, दधिपत्रायितो नीलनीले वियति सुतराम-भासत निशावल्लभ।

प्रतिक्रान्ते च दीर्घतमे पथि सैव निर्दिशन्ती किमपि मृणाललिते नागुलि-माऽधरतलचञ्चुरितया दन्तत्विषा द्विगुणयन्ती कौमुदीप्रवाहं मौन-जननी विस्मिति-मुद्रा ममालुम्पत्। सखे, न पश्यसि किं परस्तात्क्षितिजचुम्बि धवलधवलगिरिशिखरमुत्तरस्या दिशि। अनेकधेनीकृत-हिमाचलो युगपत्सान्द्रत-हिमानीचयेन, अधरित-पय शख-सुधा शुक्ति-धवलिमा जडिम्नश्चरमा भूमि, प्रसूतिराश्चर्याणाम्, कौतुकालय साहसि-कानाम् उत्तरो ध्रुव प्रदेश। इममेव पुञ्जीभूतमिव सकल-ब्रह्माण्ड-शुभ्रतामा राशिमिव श्वेतिम्नो यथागुण श्वेत-द्वीपमिति वदन्ति जना। वर्षशतनिचितेन शैवाल-जालेन शाद्वलायितमिद हरित-द्वीपतयाऽपि (Green Land) व्यवहरन्ति। पुरानुमेयमात्रा पारित-तुषार-कृत-जडिम-भीतो न मानव समस्पृक्षदिमा भूमिम्। पर चरमामुन्नतिं व्रजति विज्ञान-तत्त्वे परिवर्धिता सीमोत्साहोऽहमहमिकया चाम्नय-हिमगुहागर्भं खनिजनिधिमयारममेयम दृष्टमश्रुतमात्मसात्कर्तुं लालसावश्य-हृदयो नरोऽद्य भमपि प्रदेश दूषयति पदस्पर्शेन। घनकुहाखिली-कृतेऽत्र विषये चाकचिक्य-प्रभूर्विस्मयावहोऽस्य श्वेतोऽन्धकारो येन मनीषिणामपि मनो निमज्जति महामो-हाम्बुधौ। कुरु तावत्समीपेन तरसवं चक्षुषोर्गोचरम्।

इति वदन्त्यामेव तस्या सहसैव स्फोटित-कर्णकुहर सगडगडाशब्द घनाघन-घटाटोप-विस्फूर्जित सहकृतो ह्रादिनी, निर्ह्राद सहसैवाजृम्भत। सकल-दिगाभोगवधिरी-करणपटुभाकारध्वनीना शतघ्नीना विस्फोट इव समजनि। समकालमेव छिन्नपुंख इव खेचर, लूनशुण्ड इव गजपति, हृतमणिरिव विषधर, स्थानच्युतेवोल्काऽसमत-चलनयन्त्र सफटफटा ध्वनि-स्फुटित तैलकुप्य यान स्वतोदीप्त-वह्नि ज्वाला-जटिल भूमिमभिचस्खाल। तदाघातनिहतो यावदह लोचन उन्मीलये, तावद् भूमिपतित विस्मितया समकाल प्रबुद्धया गृहिण्यो पहस्यमानमात्मानमलोकयम्।

—o—

# क्रिया-सिद्धिः सत्त्वे भवति महतां नोपकरणे

## (अम्बिकादत्तव्यासस्य शिवराज-विजयात्)

मासोऽयमाषाढ, अस्ति च सायं समय, अस्तं जिगमिषुर्भगवान् भास्कर सिन्दूरप्रवस्नातानामिव वरुणदिगवलम्बिनामरुणवारिवाहानामभ्यन्तरं प्रविष्ट, कल-विङ्कारवाटकैरवतं. परिपूर्णेषु नीडेषु प्रतिनिवर्तन्ते, वनानि प्रतिक्षणमधिकाधिका श्यामता कलयन्ति। अथाकस्मात् परितो मेघमाला पर्वतश्रेणीव प्रादुरभूत, क्षणं सूक्ष्म-विस्तारा, परत प्रकटित-शिखरिशिखर-विडम्बना, अथ दर्शित-दीर्घशुण्डादण्ड-मण्डित-दिगन्त-दन्तावलभयानकाकारा, तत पारस्परिक-संश्लेष-विहित-महान्धकारा समस्तं गगनतल पर्यच्छदीत्।

अस्मिन् समय एक षोडशवर्ष-देशीयो गौरो युवा हयेन पर्वतश्रेणीरुपर्युपरि गच्छतिस्म। एष सुघटित-दृढशरीर, श्याम-श्यामैर्गुच्छ-गुच्छै, कुञ्चित-कुञ्चितै कचकलापै कमनीय-कपोल पालि, दूरागमनायासवशेन सूक्ष्म-मौक्तिकपटलेनेव स्वेद-बिन्दुव्रजेनाच्छादित-ललाट-कपोलनासाग्रोत्तरोष्ठ, प्रसन्न-वदनाम्भोज-प्रदर्शित-दृढ-सिद्धान्तमहोत्साह, राजतसूत्र-शिल्पकृत-बहुल-चाक-चक्य-चक्र-हरितोष्णीष-शोभित, हरितेनैव च कञ्चुकेन प्रकटीकृतव्यूढ-गूढ वरता-कार्य, कोऽपि शिववीरस्य विश्वासपात्र सिंहदुर्गात् तस्यैव पत्रमादाय तोरण-दुर्गं प्रयाति।

तावदकस्मादुत्थितो महान् झञ्झावात, एक साय-समय-प्रयुक्त स्वभाववृत्तोऽन्धकार, स च द्विगुणितो मेघमालाभि। झञ्झावातोद्धूतै रेणुभि, शीर्णपत्रै, कुसुमपरागै शुष्क-पुष्पैश्च पुनरेष द्वैगुण्य प्राप्त। इह पर्वत-श्रेणीत पर्वतश्रेणी, वनाद् वनानि, शिखराच्छिखराणि, प्रपातात् प्रपाता, अधित्यकातोऽधित्यका, उपत्य-कात उपत्यका, न कोऽपि सरलो मार्ग, नानुद्भेदिनी भूमि, पन्था अपि च नावलोक्यते, क्षणे क्षणे हयस्य खुराविचक्कण-पाषाणखण्डेषु प्रस्खलन्ति, पदे पदे दोधूयमाना वृक्ष-शाखा सम्मुखमाघ्नन्ति, परं दृढसंकल्पोऽयं सादी न स्वकार्याद् विरमति। परित सहड्हडाशब्द दोधूयमानाना पर सहस्र-वृक्षाणा, वाताघात सजातपाषाण पातानां

प्रपाताना, महान्धतमसेन ग्रस्यमानानामिव सत्त्वाना क्रन्दनस्य च भयानकेन स्वनेन कवलीकृतमिव गगनतलम्, पर नैष वीर स्वकार्याद् विरमति। कदाचित् किञ्चिद् किञ्चिद् भीत इव घोटक पादाभ्यामुत्तिष्ठति, कदाचिच्चलन्नकस्मात् परिवर्तते, कदाचिदुत्प्लुत्य च गच्छति, परमेष वीरो वल्गा संयच्छन्, मध्ये मध्ये सैन्धवस्य स्कन्धौ कन्धर च करतलेनास्फोटयन् चुचुत्कारेण सान्त्वयश्च न स्वकार्याद् विरमति। तावदारब्धश्चञ्चच्चञ्चल-चामीकररेखाकाराभिश्चञ्चलाभिरपि स्वचमत्कार। यावदेकस्या दिशि नयने विक्षिपन्ती, कर्णौ स्फोटयन्ती, अवलोचकान् कम्पयन्ती, वन्यास्त्रासयन्ती, गगन कर्दयन्ती, मेघान् सौवर्णकपयेव घ्नती, अन्धकारमग्निनेव दहन्ती चपला चमत्करोति, तावदन्यस्यामपि अपरा ज्वालाजालेनेव वलाहकानावृणोति, स्फुरणोत्तर स्फुरण गर्जनोत्तर च गर्ज्जनमिति पर शतशतघ्नी-प्रचारजन्येनेव कन्दरि-कन्दरा प्रतिध्वनिभिश्चतुर्गुणितेन महाशब्देन पर्यपूर्यत सारण्यानी, परमधुनापि देह वा पातयेय कार्यं वा साधयेयम् इति कृत प्रतिज्ञोऽसौ शिववीरचरो न निजकार्यान्निवर्तते।

× . ×

अथ किञ्चित् स्रोतस्समुल्लङ्घमानोऽस्य तुरग कस्यापि दोधूयमानतरो शाखया तथाभिहतो यथोच्छलन् भूमौ पपात सादिन चैकत समपीपतत्, किन्तु तत्क्षणादेव सादी समुत्थितो वाजिनो वल्गा गृहीत्वा सचुचुत्कार ग्रीवा पृष्ठ चास्फोटयन्नाशासीद् यदद्य स्वेदे स्नातोऽस्तीति, तत् चक्षुषी विस्फार्य पार्श्वस्थपलाशिन निपुण निरीक्ष्य तच्छाखायामेव कानिचिन्निजवस्तून्यासज्य दक्षिण-करधृतरश्मिरश्व शनै शनै परिभ्रमयितुमारेभे। अश्वश्च फेनान् पातयन्, कन्धरामुद्धूनयन्, हेषारवैश्चिरपरिश्रम प्रकटयन्, प्रस्यन्द-जलसिक्तभूमाग, पमुत्सृष्टपुरीष, शुष्क-स्वेदी मुहूर्तार्द्धेनैव विस्मृत परिश्रम सगतिस्तम्भ खुराग्रैर्भूमिमुत्खनन्, कर्णावुत्तम्भयन्, लाङ्गूल लोलयन् सादिनो दक्षिणदेशे पृष्ठ निकटयन् पुनरेन वोढु परतो धावितु च समीहा समसूसुचत्। तावदकस्मात् पूर्वस्यामतिरक्ताति प्रलम्बाति भयानका सकडकडा-शब्द सौदामनी समदेदीप्यत, तच्चमत्कार-चकित चाश्वमेष यावत्स्थिरयति तावत्तडातड-शब्द पृगस्थूलैर्विन्दुभिर्वर्षितु मारब्धो मघवा। पर रामकार्यार्थं प्रतिष्ठमानेन मारुतेनेव न सह्यते कार्यहानि शिववीरचरेणातत्क्षणमेवासौ पुन सज्जीभूय, समुत्प्लुत्य घोटक पृष्ठमारुरोह। घोटकश्च पुनस्त्वरित-गत्या प्रचलित। यदा यदा विद्युद् विद्योतते, तदा तदा पन्था अवलोक्यते, तदनुसन्धानेनैव वाहोऽस्य शिलातलानि परिक्राम्यन्, लता प्रतानानि त्यजन् स्रोतास्युल्लङ्घमानो गर्तांश्च परिजहद्दुच्चचाल। तावद् दूरत एवावालोक्यत तोरणदुर्गदीप। इतश्च चरस्यैतस्य दृढ प्रतिज्ञता, निर्भीकता, सोत्साहता, स्वामिकार्य साधनसत्य सकल्पता च परीक्ष्येव प्रशशाम वृष्टि, अम्लवलेन च दुग्धमिव खण्डशोऽभून्मेघमाला, ददृशे च पूर्वस्या कलानाथ।

अथ क्षणेनैव पर्वत-नदी-वेग इव निर्जगाम झञ्झावातोत्पातोऽपि । ततो नूतनवारिधारा-क्षालन-प्रकट-परम-हारित्याना पर कोटि-कीरपटल-परीतानामिव समवलोक्यत लोचन-रोचिका शोभा पलाशिनाम् । सादी च चञ्चच्चन्द्रचमत्कारेण द्विगुणितोत्साहो माभूद् द्वार-रोधो मद्गमनात् पूर्वमेवेति सत्वर-सत्वरो झिल्लीरव-मिश्रित-कवच-शिञ्जित, वार्यवारि-व्रज-विधूत-स्वेद बिन्दु-सन्दोह, साधुवाद-सवर्धित-हेषमाण-हयोत्साह सपद्येवतोरण-दुर्ग-यामिक-पादचार-परिमर्दितायां भुवि समाजगाम ।

—•—

# मम भारतम् ?

अहो इयं मम मातृभूमिः, मानव-सभ्यताया आद्याऽवतारस्थली, प्रकृते-र्विहारवनी, प्राचीनतमाया आर्यसंस्कृतेः क्रीडांगणं भारतम्। त्रिपु दिक्षु प्रसृतावस्य चरणौ स्फार-कल्लोलजालैर्धौतयन्निव स्वं मोदातिरेकं हिण्डीर-पिण्ड-च्छलेन गृहीत-नैर्मल्य-कल्पो महार्णवः प्रक्षालयति सश्रद्धम्। कुसुम-भर-मन्थरा नव-वल्लरी किसलयच्छलेन गृहीत-पीनांशुका लालयन्तीरिव सततचंक्रमणपराः पतंगिका पानगोष्ठीमिवानुभावयन्ती चञ्चरीकान् प्रसाधयन्तो विविधवर्णकैः सुमनोनिवहैः षड्ऋतव आराधयन्ति यत् पुष्पाञ्जलीनिव समर्पयन्तः। उत्तरेण चास्य धवलधवलाः प्रालेय-राशिच्छलेन रजतशिला-जटिता इव, वज्र-घटिता इव मनस्वि-मान-गिरय इव दुर्लंघ्याः शृंगपरम्परा वहन् समुदित-दिनकर-कर-निकर-प्रति-फलन-विहित-चाकचिक्यो हिरण्य-संभारमयतामिव दधानो हिमाचलो मुकुट इव राजते। विविध-तरु-लता-खण्ड-मण्डिता निदाघदिवसेष्वपि वर्जित-रवि-किरण-प्रवेशाः सतत-स्रुत-निर्झर-झर्झराराव-मुखरित-प्रदेशा गहनोद्देशाः, सलीलं खेलयन्त्य इव ऋजुकुटिल-सर्पिण्य. सर्पिण्य इव फेन-राजि-पाण्डुराः स्वच्छता-च्छटामिव प्रकाशयन्त्योऽसंख्याः सरितः सरसयन्ति यदन्तरं स्नेह-परम्परा-मिवान्न-राशिं च जनयन्ति। 'स्निग्धश्यामाः क्वचिदपरतो भीषणाभोगरूक्षाः' शीततमा उष्णतमा-इव, समा विषमाश्च, पावना अपावनाश्च, अनूपा मरुसिकतिलाश्च, शस्यश्यामला ऊषर-धश्रवश्च, लक्ष्मी-विलास-दुर्ललिता दौर्गत्य-कलुषिताश्च नाना-संख्याः प्रदेशा अस्य नैकविधं महिमानं प्रतिपादयन्ति।

अत्रैव सरस्वती सारस्वत-विलास-ललिता 'वाजेभिर्वाजिनीवती' यस्यास्तटेऽविघटे तपोधन-संघटे ऽगुम्फत चिरं वसिष्ठादिभिः ऋषिभिर्वेद-घोषः। अत्रैव तमसा यस्या-स्तरल-तर-नीर-वातैस्तर्पित-मनीषोऽजायत रामायणं वाल्मीकिः'। अत्रैव भागीरथी रोधसि भगवान् द्वैपायनः पुराण-संहितां महाभारतं च निर्ममे। अस्या एव कुक्षेर-जायन्त मान्धातृ, प्रमुखा दिग्जयिनः, मस-दल-दसनमलीमस-कृपाण-पाणयोरर्जुन-सदृशा भटाः, हनुमद्-भीष्म-प्रभृतयो ब्रह्मचर्य-धराः, प्रतापशिवाजी-तिलक-धुर्याः

स्वातन्त्र्य भक्ता । अत्रैवाजनि रामभद्रो भद्रकर्मा भार्यापहरण-कलङ्क-कालीकृतं दशवदन-मुखं क्षालयन् खड्ग धारा-जले । एवंव रङ्गस्थली वैचित्र्य चित्रित-चरित्रस्य योगि-राजस्य श्रीकृष्णस्य येन गीता ऽद्यापि गीता हरति जनमानस-सचित मोहान्धतमसम् । अत्रैवासन्नमला अमला, अलघु विलासा अचपलाऽप्यचपला, अहंसवाहना हंस-वाहना, पातिव्रत-व्रत-धुरीणा असिंहवाहिन्यो दुर्गा, अनबला अबला, मुख-सु-मो-पहसित पद्मिन्य पद्मिनीप्रमृतयो महेला हेलानिर्जितरिपुमदा । इहैवाचरदास-फखान निशितासि विलासैरखदाफ-खलुपानन बहुशोऽविजित-दुर्गा दुर्गा । अस्यामेव भुवि समजनि क्षतनुरिव भारतभाग्यलक्ष्मी पौरुपलक्ष्म-भूषणा साक्षादेव लक्ष्मी लक्ष्मीझाँसी-दुर्गाधिदेवतेव महासमराधिष्ठात्रीव या स्वकोप-कुटिल भ्रू भगराहुणा गोरण्ड-दुर्मद-दोषाकर मूलग्रास जग्रस । इयमेव धरणी प्रबलस्वातन्त्र्यभावनाग्धी-कृताग्ल शासनस्याहिंसाप्राणस्य गुणगण-जन-सम्मोहनस्य मोहनस्य गान्धिन ।

हा तदेव सदपि न सदिव भारतमद्य । क्वा धुना तदसाधारण पौरुष पुरुषेषु ? न सा निष्ठा नारीषु, न सा विद्या विद्वत्सु, न तत्साहस साहसिकेषु न बन्धुता बन्धुषु, न मैत्री मित्रेषु, न करुणा कारुणिकमन्येषु, नौदार्यं स्वौदार्य-प्रख्यापकेषु । न जन-वात्सल्य जननायकेषु, न कर्मठता कर्मचारिषु, नाचार्यताऽऽचार्येषु, न शिक्षार्थिता शिक्षार्थिषु, न धर्मो धार्मिकेषु । अफलेदानीमुप्तबीजापि वन्ध्येव भूमि । सम्प्रति कौशल परप्रतारणे, पौरुष मानिनीमान मञ्जने, निष्ठा भोगे, अवधान वेशविन्यासे, पावनता पुस्तकेषु, दाक्षिण्यमुत्कोच ग्रहणे गर्व परनारीनराभिमर्शे, पाटव धर्म-निन्दने, प्रागल्भ्यमात्म विज्ञापने ।

नाद्यावमानना करोति विमनसो भारतीयान् । न ते लज्जन्ते विक्रीणन्तो भगिनी, सुता भार्यां च पदाभिलाषेण । दूरे कथा देशरक्षाया, स्वप्रतिष्ठा-मैव स्थेयसी चिकीर्षन्त परकृताक्रमणान्युपेक्षन्ते, गृहीतोत्कोचाश्च रहस्यानि शासनस्य शत्रुसुबोधानि विदधति । नास्त्यद्य किमप्यनार्यं कुत्सित ह्रेपण वैतेषा भारतीयाना कृते । प्रतापमानमद्य—

'गायन्ति देवा किल गीतकानि धन्यास्तु ये भारतभूमि भागे ।'

इत्युक्ति । साम्प्रतमिय कापुरुषाणा दम्भिनामनाचाराणा शालावृकाणा भुजगाना पिशुनाना वधिकाना पाटच्चराणा च भूमि । सर्पा इवैते परेषां प्राणै खेलन्ति । घृणितान्यखाद्यान्यर्हाणि द्रव्याणि भोज्येषु मिश्रयित्वा, कूटतुलाभिस्तोल-यित्वा कूटविज्ञापनं कूटमूल्यैश्च वस्तु विक्रीय धनमर्जयन्ति । नैषा मनसि सवेदना, नात्माभिमान, न लज्जा, न विवेक न जुगुप्सा, न कर्मठता । अर्थशौच तु पलायित-

मस्माद् देशात् । विलीनं परदुःखकातर्येण । अद्य तु दुःखिताद् दुर्गताद्, आपद्ग्रस्तादधिकं जिहीर्षन्ति वणिजः । परोपजीवतया प्राणायितमद्य समाजस्य ।

वैदेशिकाः सोल्लुण्ठं तिरस्कुर्वन्ति तान्, आक्रामन्ति तेषां भूमिम्, परं गिरय इव ते निष्कम्पाः कुक्षिभरण-मात्र-प्रयोजनाः । विदेशेभ्यो गृहीतो महान् ऋणभारो दुःसाध्यरोगकरोऽनु-दिनमेधते । रक्तबिन्दुभिः सह प्रजानां संहृतः कर-राशिर्द्रौपदीशाटीव प्रतिवर्ष-मुपचीयमानः कल्पते केवलमधिकृतां क्षुधा-हरणाय । दरिद्रा दरिद्रतरा धनिनश्च द्विगुण-धनाः । राजा प्रजाश्च सर्वेऽपि प्रचारप्रियाः, लुब्धाः, व्यसनिनः, लम्पटाः, नवनीत-हृदयाः, आत्मरताः, दम्भिनः, अशुचयः, अविवेकाः, अनात्मज्ञाः, अकर्मण्याः त्यक्तमानाश्च । तादृशीं दुरवस्थामनुभूयापि नैते जाग्रति । ग्रामा नगराणि च रोग-प्रस्तानि, क्षुधाक्षामानि, भोगातिशयरूक्षाणि दिनादिनं क्षीयन्ते । न जाने गेहेनर्दिनामेतेषां भारतीयानां का दशा भविष्यी येषां पौरुषं मिथो विग्रहे-ऽवशिष्टम् । सर्वतः प्रान्तगतो जाति-गतः, सम्प्रदाय-गतो वर्गगतश्च विरोधो दृश्यते । खण्डशः कृतेऽपि देशे नैतेषां जागर्ति विवेकहरयद्धी दुर्दैवस्य विलसितम् ।

—०—

# मम प्रियं पुस्तकम्

सन्त्यत्र लोके ज्ञान-प्रदानि, मनोरंजकाणि समय-यापन-साधनानि यानेकानि पुस्तकानि। परं न सर्वाणि सर्वेभ्यो रोचन्ते। मुण्डे मुण्डे हि मतिर्भिन्ना। मम प्रेयान् ग्रन्थस्तु भगवद्गीतैव। तस्या नामापि कर्णशष्कुलीं स्पृशदेव तनुं पुलकयति, हृदयं हर्षयति, धृतौ रमयति, बुद्धिं स्थिरयति तरलयति च विचार-सरणिम्।

नैषमुपन्यासवर्तिकमपि कौतुकाकुलितं नव-युव-युवति-प्रणयरसपूरपूरितं विस्मयस्फीतिदं चमत्कृति-मयं वस्तूपन्यस्यति, न वा साहसिक कर्मपटुपाटच्चर-पाटवाटोपकं तन्निग्रहमतिनिपुणवेष-सन्धायिप्रणिधि-कौशलवन्धं वोपदिशति, अपि तु कृत्याकृत्य-विवेक-मूढस्य गाढे तमसि विहाय सत्पथं निमज्जतो भ्रान्तस्य जगतः प्रकाश स्तम्भो राजवीथी—समुपदेष्टा। इयं ध्यानं प्रशसति न बकाचारम्, योगमनुशास्ति नाभियोगम्, कर्मठतामुपदिशति नाकर्मतां विकर्मतां वा। भक्तिं शिक्षयति न भोगासक्तिम्। एनामधीयानस्य न मृत्योर्भयं स्पृशति हृदयम्। लोकाः क्षणिकसुखासंगेन विस्मरन्त्यात्मनः, तं पातयन्ति, दूषयन्ति कलुषयन्ति च। परमुपनिषद इव साऽपि हिततमं बन्धुतमं प्रियतमं चात्मानमुपदिशति—

> "उद्धरेदात्मनाऽऽत्मानं नाऽऽत्मानमवसादयेत्।
> आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः॥" (६।५)

आत्मनोऽमरता तस्या अपूर्वः सन्देशः।

> 'नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावकः।
> न चैनं क्लेदयन्त्यापो न शोषयति मारुतः॥' (२।२३)

लोके निवृत्तिः प्रवृत्तिश्चेति द्वौ मार्गौ विवादास्पदभूतौ। संसारे स्थित्वाऽपि कर्मणां त्यागं कृत्वा केचिन्मुक्तिमभिलषन्ति। अपरे चेह स्थिता नाना-भोग-परायणा अर्थ-कामावेव भजन्तो धर्मं मोक्षं च विस्मरन्ति। केचन तु पाप-पुण्ययोः कर्तव्या-कर्तव्ययोर्विवेकेऽक्षमाः सन्तः कार्यमपि शास्त्रविहितं च कर्म यथेच्छमेवानुतिष्ठन्ति।

कर्तव्य-कर्मपरित्यागेन काषायधारण मात्रमेवेतरे सन्यास मन्वाना काल यापयन्ति । गीता तेषामुत्पथ-निवारणी । तस्या उपदेश —

निवृत्ति प्रवृत्तिश्च समन्वितैव श्रेयसी । न केवल कर्मणस्त्यागात्ससार-त्याग सभवति ।

न कर्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते ।
यस्तु कर्म-फल-त्यागी स त्यागीत्यभिधीयते ॥

सन्यास कर्मफल-सन्यासमेव विदु । न कोऽपि सर्वथा कर्माणि त्यक्तु समर्थ ।

नहि देहभृता शक्य त्यक्तु कर्माण्यशेषत ।
कार्यते ह्यवश कर्म सर्वं प्रकृतिजैर्गुणै ॥

नात्मा स्वय किमपि कर्माकर्म वा करोति । पर प्रकृतिरेव सत्व-रज-स्तमोमयी शुभमशुभवाऽनुतिष्ठति । परमहकार-विमूढात्मा कर्ताहमिति मन्यते । लोकस्य सुख दु खादि-भोगो निसर्गकृत, ये नाम मुक्ततादम्भिन प्रत्यक्ष विषयाञ्जहतोऽपि मनसा नित्यमेव तान्स्मरन्ति, ते मिथ्याचारा एव । अतएव कर्माणि कृत्वा तेषा फल भोगान्भुञ्जानाऽपि तेषा रसे चानासक्तिरेव सत्यो योग । 'योगो हि कर्मसु कौशलम् ।'

कर्तव्येन कर्मणा कृतेन न पाप लिम्पति न च पुण्यम् । पद्म-पत्रमिवाम्भसा न कर्म-फलेन लिप्यतेऽनासक्तभावेन कर्मणामनुष्ठाता ।

कर्मण्यकर्म य पश्येदकर्मणि च कर्म य ।
स बुद्धिमान् मनुष्येषु स युक्त कृत्स्न-कर्मकृत् ॥

जनकादयोऽपि जीवन्मुक्ता ब्रह्मज्ञानिन कर्मणैव सिद्धिमास्थितवन्त । मानवस्य कर्तव्य स्वकर्मानुष्ठान ननु फलानुसन्धानम् ।

कर्मण्येवाधिकारस्ते मा फलेषु कदाचन ।
मा कर्म फलहेतुर्भूर्मा ते सङ्गोऽस्त्वकर्मणि ॥ (२।४७)

जीवस्य कर्तव्य जगति पुन स्वपद प्राप्ति । वेदोक्तकर्मानुष्ठानेन स्वर्गस्याधिगति धाम सम्पद्यते पर सा न श्रेयसी । क्षीणे पुण्ये हि पुनस्ते मर्त्यलोक विशन्ति । अत पर-ब्रह्मण प्राप्तय एव प्रयतितव्यम् । 'अत पद तत्परिमार्गितव्य यस्मिन्गता न निवर्तन्ति भूय ।' 'यल्लब्ध्वा चापर लाभ मन्यते नाधिक तत ।' तज्जन्य च 'सुखमात्यन्तिक यत्तद्बुद्धिग्राह्यमतीन्द्रियम् ।' इय ब्रह्मण प्राप्तिश्च ज्ञानेन भक्त्या च सभवति । पर ज्ञान सुदुष्कर येन सर्वभूतात्मभावो गृह्यते । भक्तिस्तु सुकरा । तया परिप्लुत-हृदयो जनो योग-क्षेम चिन्तामपि भगवति विन्यस्य तत्रैव रमेत ।

मानवमात्रे समदर्शितांसदाचारपरायणतां, स्वधर्माचरणे मृत्युमपि स्वीकरणीयं च गीतोपदिशति। 'शुनिचैव श्वपाके च पण्डिता: समदर्शिनः।' न जातिभेदो भक्तिमार्गे बाधको भवति। सर्वेऽपि मनस्या प्रभुं स्मरन्तः परमं पदं यान्ति।

सा सामाजिकमर्यादारक्षणं सम्यङ् निर्दिशति। चातुर्वर्ण्यस्य स्वकर्मणि रुचिः समाजस्य क्षेमावहा। श्रेष्ठपुरुषा हि मर्यादास्तम्भा लोकस्य, तदाचरितमेव जनसमुदायोऽनुकरोति।

यद् यदाचरति श्रेष्ठस्तत्तदेवेतरोजनः।
स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते॥

अतः धर्माचरणं विहितं सदा विधेयम्, परं शास्त्रोक्तमार्गेण न तु स्वेच्छाचारेण। यत. 'यः शास्त्रविधिमुत्सृज्य वर्तते कामकारतः। न स सिद्धिमवाप्नोति न सुखं न परा गतिम्।' यच्च कर्म विधीयते तत्सत्त्वेनावष्टब्धं कार्यम्। यतो रजोगुणेन तमोगुणेन च व्याप्तं कर्म मुक्तिपरिपन्थि स्यात्। मुक्तये निर्दम्भः कर्तव्यहितभावो जन एवेष्ट.।

इत्थं गीता सामाजिकाचारं सर्वाधिकमुपदिशन्त्यपि शाश्वते ब्रह्मणि निलय काममते। न च काम-भोगेषूदास्ते सा। 'धर्माविरुद्धो भूतेषु कामोऽस्मि भरतर्षभ।'

एव जीवनसंदेशदात्री नैराश्यहारिणी कर्तव्यपालने दर्शितप्रभा निरयमुपास्यैव क्षीरतरंगिणीव रसदा गीता। महामोहान्धकारस्य घनस्येव वात्योद्धूननी, प्ररूढवेगस्य रागासगस्य प्रभंजनस्येव शमनी जलधारा, पयस इव नवनीतमुपनिषदा सारः सा। 'गीता सुगीता कर्तव्या किमन्यैः शास्त्रविस्तरैः। या स्वयं पद्मनाभस्य मुखपद्माद्विनि सृता'। अतएव जीवनसगिनी सा कृत्याकृत्यविमर्शमूढे मनसि सत्परामर्शदात्री, उदीर्णे शोकावेगे सान्त्वयित्री चेतस, खेदाकुलाया बुद्धौ रमयित्री रसास्वादने, प्रकाशस्तम्भो भ्रान्तस्य, निदाघरविप्रभा निचितनैष्कर्म्यहिमस्य, कौमुदी विषयातपस्य, पथदर्शिका परम-पद-पथिकस्य, रसधारा भक्तिपीयूषस्य, व्याख्यात्री साख्यस्य, प्रतिष्ठापयित्री विश्वमैत्र्या, स्थापयित्री भूतकरुणायाः, उपदेष्ट्री निःसंगताया, बोधयित्री वासुदेवरूपस्य, पोषयित्री साम्यभावस्य गीता। गोस्तन्यमिव सर्वविकारहारी कस्य न सचेतसो मनसो मुदे स्यात्तस्या उपदेश। अत एव कृपणस्य धनमिव, वृद्धायाः सुत इव, सुतस्य जननीव, जनन्या वात्सल्यमिव, वात्सल्यस्य भावनिर्भरत्वमिव, साधकस्य सिद्धिगुटिकेव प्रिया, प्रेयसी प्रेष्ठा च मे सेति शम्।

---

पठ्यते । ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते । शिक्षा घ्राणं तु वेदस्य, मुखं व्याकरणं स्मृतम्, तस्मात् साङ्गमधीत्यैव ब्रह्मलोके महीयते ।' एवं च शिक्षा, व्याकरणम्, निरुक्तम्, छन्दः, कल्पः, ज्योतिषम् इति षड् अङ्गानि वेदविदुषा वेदितव्यानि भवन्ति । तत्र वेदाङ्गानां कथं वेदोपकारकत्वमिति वेदितव्यो विषयः ।

**शिक्षा**—यथा विद्यारम्भे बालकस्य प्रथमं वर्णमालोपदेशः । एवमेव वेदमधिजिगांसूनां वर्णमालास्थानीयः शिक्षाऽभ्यासः । शिक्षामेव तैत्तिरीया शीक्षामामनन्ति । तथा च तैत्तिरीयोपनिषदि स्पष्टमुक्तम्—'शीक्षां व्याख्यास्यामः । वर्णः, स्वरः, मात्रा, बलम्, साम, सन्तान इत्युक्तः, शीक्षाध्यायः ।' अकारादिवर्णस्वरूप, उदात्तादिस्वरनिर्णय, ह्रस्वादिमात्रोपदेश, स्थानप्रयत्नाभ्यां वर्णबलपरीक्षा, द्रुतमध्यविलम्बित वृत्तिभेदे सत्यपि वेदवर्णोच्चारणसामञ्जस्यमेव साम, सन्तानः संहितापाठेन वेदमन्त्रपाठः इतीयान् विषयः शिक्षाया वेदितव्यो भवति । तस्माद् वर्णमात्राकालादिव्यवहारः शिक्ष्यतेऽनया सा शिक्षेति साध्वी व्युत्पत्तिः सङ्गच्छते । तत्र स्वरवर्णादिदोषेण वेदाधीती धार्मवज्राहतोमा भूद् इति 'एकः शब्दः सुप्रयुक्तः स्वर्गे लोके च कामधुग् भवति' इत्युपदेशः शिक्षामूलम् । शिक्षा वेदस्य घ्राणम् अङ्गं प्रचक्षते । वेदस्य घ्राणस्थानीयता शिक्षायाः कथं सिध्येदित्यपि विमृश्यम् । यथा घ्राणेनेन्द्रियेण सुदूरस्थमपि सुगन्धिकुसुमोल्लसितम् उद्यानं पुरुषो नेदीय इव पश्यति, तथा शिक्षोपदेशसंस्कृतेन वर्णस्वरमात्रादिसूच्चारणपूर्वकं वेदपाठेन विप्रतिपन्नमतयोऽश्रद्धालवोऽपि पुरुषा वेदे बद्धादरा भवन्ति, वेदशिक्षायां च प्रवर्तन्त इति सूर्यालोक इव घ्राणस्थानीयतया शिक्षाया वेदोपकारकत्वमनवद्यम् ।

**व्याकरणम्**—वर्णस्वरादिज्ञानरूपायां वर्णमालायामुपदिष्टायां पदवाक्यरचना बालानां सुकुमारमतीनां शिक्ष्यते । तत्र 'यन्नवे भाजने लग्नः संस्कारो नान्यथा भवेत्' । इतिन्यायेन वाणीसंस्कारदक्षिणो साधुशब्दानेवोपदिशन्ति नापशब्दानिति शब्दसाधुत्वासाधुत्वावधारणपूर्वकं प्रकृतिप्रत्ययसम्बन्धोन्मिषित वेदार्थानुगमनमूलं नामासाधारणं वेदाङ्गं व्याकरणम् । वेदपुरुषस्य मुखमङ्गमपि व्याकरणं व्यपदिशन्ति । मनीषिणां तदपि रुच्यम् । यथा मुखद्वारेणाऽशितास्वादितैर्विविधैः पौष्टिकैरन्नादिव्यञ्जनैः स्वपोषं पुष्यमाणं मानवशरीरं कामपि कमनीयां शान्तिं भजते । एधमानानि च प्रशामेयाबलानि पुरुषायुषजीवने सक्षमं तन्निष्पादयन्ति । तथैव मुखेन व्याकरणाङ्गेन स्वभ्यस्तेनैव वेदस्वरूपं वेदाङ्गानि चेतराणि पुरस्ताणि । प्रधाने च कृतो यत्नः फलवान् भवति । 'सर्वे पदा हस्तिपदे निमग्ना इति' स्वरवर्णाद्युच्चारणसौष्ठवसंपादिकायां शिक्षायां अधीतायाम् व्याकरणाध्ययनं वेदस्वरूपं स्वर्णे सौरभमिव संपादयति । अतो वेदारम्भात् प्राक् शब्दापशब्दविवेकज्ञानार्थं स्वरानुशीलनतो वेदार्थ-

सम्प्रधारणार्थं च मुखं व्याकरणम् अभ्यसनीयम्। व्याकरणाभ्यासेनैव च वेदा वेदाङ्गानि च सिध्यन्ति, नाऽवैयाकरणो बालिशो वेदस्वरूपं रक्षितुमध्यवस्येत्। प्रतिपदपाठेन विश्वे शब्दा न शक्याः प्रतिपत्तुम्। बृहस्पतिश्च प्रवक्ता, इन्द्रश्चाध्येता, दिव्यं वर्षसहस्रम् अध्ययनकालः, तदपि नान्तं जगाम। किं पुनरद्यत्वे, यश्चिरं जीवति शतं वर्षाणि जीवति, तस्माल्लघुनोपायेन शब्दपारावारपारीणतामधिजिगमिषता वेदरक्षाव्रतिना पुरुषेण मुखं वेदाङ्गं व्याकरणमवश्यंपाठ्यम्। अथ खलु सांप्रदायिकाः स्वैरं वेदमन्त्राणामर्थं-संपादने प्रयतन्ते। परं स्वरशृङ्खलानुस्यूतवेदपाठेन कर्मधारयबहुव्रीहिसमासकृत-स्वरभेदं पश्यन् न साधुदर्शी वैयाकरणस्तथा स्वच्छन्दतामनं समर्थयेत्। व्याकरणनिधूं त-कल्मषा एव मनीषिणो जगतां प्रातर्वन्द्याः पाणिनिप्रभृतयः, येभ्यो वाग्देवी 'जायेव पत्य उशती सुवासाः' आत्मीयां तनूं समर्पयति। तस्माद् व्याक्रियन्ते शब्दाप-शब्दविवेचनया प्रकृतिप्रत्ययादिसम्बन्धेन व्युत्पाद्यन्ते शब्दा अनेन तच्छब्दानुशासना-स्यमन्वर्थं नाम मुखं वेदाङ्गं व्याकरणम्। अत्रेदमवधेयम्-शाकटायनादिप्रणीत-व्याकरणानां लौकिकशब्दमात्रोपकारकतया न यथार्थतो वेदाङ्गत्वम्। इदं नाम पाणि-न्युपज्ञमेव व्याकरणमूर्धन्यं धन्यं व्याकरणं यद् अञ्जसा वेदस्योपकरोति। प्रतिवेद-शाखमभ्यस्यमानानि ऋषिप्रवरप्रणीतानि प्रातिशाख्यादिव्याकरणानि सन्त्यपि, विषयनि-रूपणसौष्ठवात् प्रतिपादनशैलीवैविध्याच्च न वेदोपकारकाणि। अत एव मूषिक-दन्तक्षतविक्षताक्षरपत्राणां बृहत्पुस्तकालयीयकक्षेषु प्राप्तशाश्वतविश्रमाणां तेषां प्राति-शाख्यग्रन्थानां नामापि न विविदिषन्ति विद्वन्मूर्धन्याः। कामं स्वल्पमप्युपकुर्वद् वेदस्य पाणिनीयं व्याकरणं विषयप्रतिपादनशैलीसौष्ठवादिगुणैश्च देशविदेशेष्वाबालं संस्कृता-ध्येतॄणां वेदार्थगहनप्रविविक्षूणां चाजिह्मा राजपद्धतिः।

निरुक्तम्—वर्णमालोपदेशानन्तरं पदवाक्यरचनापटीयानेव शब्दार्थज्ञानमध्य-वसातुं प्रभविष्णुरिति आपामरं वेत्ति। शीक्षायां परीक्षितायां व्याकरणे कृतानवरत-श्रम एव निरुक्तं नाम तृतीयं श्रोत्रस्थानीयं वेदाङ्गं द्रष्टुमलंभविष्णुः किमुत स्वाध्याये। 'अर्थनित्यः परीक्षेत' इति प्रणेतुर्यास्कस्य प्रतिज्ञा। 'नाऽवैयाकरणाय निब्रूयात्' इति निरुक्तं वैयाकरणेनैवाऽनुशीलनीयं नेतरेण विद्वन्मूर्धन्यम्मन्येनाविदुषेति तदीयो विश्वासः। 'वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्णविकारनाशौ। धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तम्' इति निरुक्तस्वरूपं विदितवरं निर्वचनवेदितॄणाम्।

यद्यपि यास्ककालीनैर्वैयाकरणैरपि भवेद् वर्णागमाद् हंसः, सिंहो वर्णविपर्ययात् गूढोत्मा वर्णविकृतेर्वर्णलोपात् 'पृषोदरम्' इति निरुक्तप्रतिपादितानि चत्वारि पदनिर्वचनानि विशदमाम्नातानि 'पृषोदरादीनि यथोपदिष्टम्' इति पाणिनिनाप्युप-ज्ञातानि समेषां विदितचराणि। तत्र हन् 'गतौ' धातोः सकारवर्णागम. हंसशब्दमूलम्। हिंस इति विपरीत द्व्यक्षरमेव सिंहशब्दो निष्पद्यते। कामं तत्र धातुर्हिंसार्थकः।

# "वेद्-वेदाङ्ग-मीमांसा"

(लेखक :—अमरनाथशास्त्री व्याकरणाचार्यः, साधु आश्रम. होश्यारपुरम्)

'शरदः शतं पश्येम, जीवेम, शृणुयाम, प्रब्रवाम, अदीनाश्च स्याम; याचिताश्च नः सन्तु मा च याचिष्म कंचन' इति मन्त्रोपनतो मानवमात्रस्य सुखाभिलाषः स्वाभाविकः। अयं च अभिलाषप्रासादो न केवलंमनोमोदककल्पैः सङ्कल्पैरलं निर्मातुं सुशकः। प्रथमम् आत्माभ्यन्तरे ततो यथायथं परिजनेषु स्वजनेषु ग्रामे नगरे जनपदे देशविदेशेषु, किं ब्रूमः सकलेऽपि जगतीतले सद्भावभूमिकः परस्परानुरञ्जनोन्मिषितप्रशान्त-वातावरणसुधालेपादिभिर्मण्डित एव च निर्मातुं शक्यः। प्रशान्तं वातावरणं च 'परस्परं भावयन्तः श्रेयः परमवाप्स्यथ' इति विश्वजनीनं मूलमन्त्रमपेक्षते। इयं परस्परभावना च न केवले भूलोक एव सुदूरदेशीयान् मानवान् मालाकारेण सद्भावसूत्र ओतप्रोतान् भावयति, प्रत्युत अन्तरिक्षलोकस्थान् स्वर्लोकनिवासिनोऽपि देवान् यज्ञसूत्रेण ग्रथ्नाति। 'अग्नौ प्रास्ताहुतिः सम्यग् आदित्यमुपतिष्ठते, आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजा' इति मानवं वचः, 'यज्ञाद् भवति पर्जन्यः' इति गीतावचनं चापीदमेव ध्रुवं सत्यं विशकलयत। अयमेव त्रयीधर्मः। त्रयी नाम ऋग्यजुःसामानि। तत्र ऋचा स्तुति-मन्त्राणां विनियोगेन देवता आवाह्यित्वा, साम्ना गीतिस्वरेण तासामभिनन्दनं यजुषा च मन्त्राणां प्रयोगेण यज्ञविधया तासां परितोष इति परस्परभावनाभिरुपाश्रितस्त्रयीधर्मो मानवमात्रस्य भद्रमातनोतीत्यतिरोहितं शेमुषीजुषां विदुषामिति।

यज्ञप्रक्रियाया कर्मकलापं व्यवहारेणाचरन्तस्त्रय एवर्त्विजः। ऋग्वेदस्य होता, यजुर्वेदस्याध्वर्युः, सामवेदस्योद्गाता चेति। अथर्ववेदस्य ऋत्विग् ब्रह्मा तु न वस्तुतो यज्ञकर्मव्यापृतः, स्वाहाकारान्तेषु प्रदानेषु न ब्रह्मणो व्यापारः, जाते जाते स्खलितः दिदोषे स्वीययाऽनवद्यया विद्यया तत्साधूकरणमेव तदीयो धर्म इति। 'ऋचां त्वः पोषमास्ते पुपुष्वान्, गायत्रं त्वो गायति शक्वरीषु। ब्रह्मा त्वो वदति जातविद्यां यज्ञस्य मात्रां विमिमीत उ त्वः, (ऋ सं. १०)। इति श्रुतेरेवेद रहस्यमनावृतम्। परं न

केवलं यागप्रक्रियाप्रवर्तका वेदाः । वेदा हि विविधज्ञानविज्ञानराशिः । अतो विविधविज्ञानदर्शने सामाजिकविवाहादिमानवसंस्कारादिस्रोत प्रवाहेश्चाऽथर्ववेदमपि चतुर्थं गणयित्वा चत्वारो वेदाः प्रमाणम् । वेदप्रमाणा आस्तिकाः, तेषां त्रयो वा चत्वारो वा वेदाः परमादरास्पदं जीवनसर्वस्वम् । निबिडेऽन्धतमसे भ्राम्यतामालोकवद् वेदा एवास्तिकानां जरामरणीयवेदनामनुभवतामनन्यमभयशरणमिति कंमुलिकम् । वेदानां मन्त्रप्रायत्वाद् तद्व्याख्यानतया यज्ञकर्मणां प्राधान्येनोपदेशकतया च ब्राह्मणान्यपि वेदा इति मतमभ्यर्हितम् । मन्त्रब्राह्मणयोर्वेदनामधेयम्, कर्मचोदना ब्राह्मणानि' इत्यापस्तम्बीयवचनं वेदस्वरूपमभिरूपं प्रतिपादयितुमलम् । 'अतीन्द्रियविषयाणां वेदनादेव चतुर्णां वेदानां वेदता सिध्यति । 'प्रत्यक्षेणानुमित्या वा यस्तूपायो न बुध्यते । एतं विदन्ति वेदेन, तस्माद् वेदस्य वेदता' इत्यन्वर्थं वचनं चात्र प्रमाणम् । एतावता वेदा ज्ञानस्वरूपं वा ज्ञानसाधनं वा सिध्यन्ति । ब्राह्मणो मूर्तं शब्दरूपं वेदा इति श्रद्दधता विपश्चिता नाऽनया करणव्युत्पत्त्या सन्तोषः । 'वेदयति विश्वपदार्थान् अवगमयति, इति वेदः' इति कर्तृव्युत्पत्त्यैव तेषां मनस्तोषः । अस्तु ।

भारतीयसंस्कृतेर्जीवातुभूतानां वेदानां गुरुशिष्यपरम्परानुगतसम्प्रदायतः प्रवचनप्रचारणाद्यर्थम् आ कश्मीरेभ्य आरामेश्वरं ग्रामेषु चारण्येषु च चरणानि (विद्यास्थानानि) प्रातिष्ठिपन्नाचार्याः । चतुर्भिश्च प्रकारैर्विद्योपयुक्ता भवति,—आगमकालेन, स्वाध्यायकालेन, प्रवचनकालेन व्यवहारकालेन, इति मूलमन्त्रेण भारतीयमानसस्यान्तरङ्गतरङ्गभूतान् वेदानकुर्वन् । साक्षात्कृत-धर्मणां वेदविज्ञानवद्वदर्शनानामृषीणां सम्प्रदायो यावद् गङ्गास्रोत प्रवाह इव प्रावहत् तेऽसाक्षात्कृतधर्मभ्योऽवरेभ्य ऋषिभ्य उपदेशेन मन्त्रान् सम्प्रादुः । अल्पप्रज्ञत्वात् सम्प्रदायानुगतं वेदोपदेशं ग्रहीतुं सर्वथाऽशक्तान् दुर्बोधावरान् शिष्यान् पश्यन्त उपदेशाय ग्लायन्तोऽवरे ऋषयो बिल्मग्रहणाय विविच्य पदपाठस्वरचिह्नादिभिर्वेदतत्त्वग्रहणार्थं ग्रन्थभूतान् वेदान् प्राग्रथ्नन् । इदमेव रहस्यं यास्काचार्यस्याभीष्टम् 'साक्षात्कृतधर्माण ऋषयो बभूवुः । तेऽवरेभ्योऽसाक्षात्कृतधर्मभ्य उपदेशेन मन्त्रान् सम्प्रादुः । उपदेशाय ग्लायन्तोऽवरे बिल्मग्रहणायेमं ग्रन्थं समाम्नासिषुः, वेदं च वेदाङ्गानि च' इति ।

वेदाङ्गानि —यथा चक्षुःश्रोत्रादिभिरङ्गैः पुरुषः साङ्गोपाङ्गः प्रतीयते, अङ्गैरेव चाङ्गिनः पुरुषस्य पूर्णताव्यपदेशः, तथैव षड् वेदाङ्गानि वेदपुरुषस्याङ्गानि, सवेदाङ्गस्यैव वेदराशेर्महिमा न विकलाङ्गस्येति । यथा शाखापत्रादिकं वृक्षस्यैव विस्तारः तथा वेदाङ्गानि वेदस्यैव प्रपञ्चः । यथा वृक्षः प्रचलन् सहावयवैः प्रचलति, तथा वेदाङ्गानुस्यूत इव वेदविज्ञानोन्मेषः । अत एव 'ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्च' इति व्याकरणमहाभाष्ये पातञ्जलं प्राञ्जलं वचः समुन्मिषति । पाणिनीयशिक्षायां वेदाङ्गनिरूपणं सम्यक् प्रतिपादितम् । यथा—'छन्दः पादौ तु वेदस्य, हस्तौ कल्पोऽथ

'गूढ आत्मा इति शब्दो' मध्यस्थितस्य आवर्णस्य ओकारीभावेन वर्णविकृत्या 'गूढोत्मा' सपन्न। पृषदुदरम् एव मध्यमतकारलोपात् पृषोदर वृत्तमिति तदाशय। तथापि धात्वर्थप्राधान्याद् नैकधात्वन्वयीभूतमेक पदमर्थनियामकमिति यास्कस्य महर्षेर्दर्शन स्वोपज्ञमेव ब्रूम। यथा 'सत्यम्' इतिशब्द पाणिनीयैर् अस् 'सत्तायाम्' इति धातोरेव निष्पाद्यते। नात्र व्युत्पत्तौ कश्चन चमत्कार। पर यास्क शब्द विलक्षणयैव प्रतिभया चमत्कृत निरवोचत्—सन्तमर्थम् आययति प्रत्याययति गमयतीति सत्यम्। अत्र निर्वचने द्वौ धातू। प्रथम, अस् धातु 'सन्तम् अर्थम्' इत्येतावदर्थप्रत्यायक। ततो द्वितीयो धातु इ 'गतौ' ण्यन्तावस्थापन्न 'आयि' इत्येवस्वरूपः परिशेष वाक्यमभिव्यनक्ति। एव च (अस्>) सत्+यम् (<इ>आयि) इति द्वयो पदयो समासेनाऽभिनिष्पन्न, 'सत्यम्' शब्दो यास्कस्य स्वोपज्ञ। अत एव व्याकरणशास्त्रीयन्यूनतापरिहारपूर्वक कार्त्स्न्यसपादक स्वतन्त्र वेदाङ्ग निरुक्तमिति–'अथापीदमन्तरेण मन्त्रेष्वर्थप्रत्ययो न विद्यते। अर्थम् अप्रतयतो नात्यन्त स्वरसस्कारोद्देश। तदिद विद्यास्थान व्याकरणस्य कार्त्स्न्यं स्वार्थसाधक चेति।' अपि च वेदाङ्ग निरुक्त वेदस्य श्रोत्रम्। यथा श्रोत्रमाध्यमेनैव जगतामर्थव्यवहार। श्रोत्रेन्द्रियेण श्रुतमेव परकीय छन्द स्वच्छन्द जनो वाचा व्यनक्ति, मनसा मनुते, पाणिपादेन चाचरति, तथा निरुक्तश्रोत्रेण वेदार्थावबोधे सुमहत् सौकर्यम्। तस्माद् अर्थावबोधे वेदाङ्गान्तरनिरपेक्षतया यत्र पदजात निरवशेषेण प्रत्यङ्गपरीक्षयोच्यते तन्निरुक्तमिति सूपपन्नम्।

छन्द—आत्मानुरागस्य सगीतस्वरेणाऽभिव्यक्तिरेव छन्द। छन्दोबद्धपद्यानि नियतमात्राक्षराणि छन्दशास्त्रीयनियमानुप्राणितानि यथा सामाजिकाना ब्रह्मानन्दापरपर्यायम् आनन्दसन्दोह जनयन्ति न तथा जल्पितसामान्यानि। वेदा अपि वस्तुतो ब्रह्मण आत्मानन्दाभिव्यक्ति। वेदमन्त्रा छन्दोमया। प्राचीन साहित्यमेव प्रायेण कवित्वमयम्। किं ब्रूमो भोजराजराज्ये काष्ठाहारा अपि पद्यै रनवद्यैः समवदन्त। प्राणिमात्रस्यात्मोल्लासाभिव्यक्तिसाधन छन्द एव। यथोद्यानात् कुसुमान्यवचित्य यथास्थान तानि सनिवेश्य हृदयहारि कुसुमवृन्त (गुलदस्ता) सपद्यते, तथैव वर्णमात्राद्यनुरूपा विचितिरेव छन्दसा विचिति। पूर्वे साक्षात्कृतधर्माणो महर्षयो वेदार्थसपादने स्वरतादोषपरिहारार्थं यथा वेदमन्त्रेषु स्वरचिह्नान्यकुर्वन्, तथैव विजातीयपदप्रक्षेपादिना मा केचन साम्प्रदायिका वेदमन्त्राणा स्वरूप नीनशन्निति नियतवर्णमात्राऽनुपूर्व्यादिद्योतविचिते परिशीलनमुपदिष्टवन्त। वेदमन्त्रेषु छन्दसां परिशीलनं च प्रतिवेदमनुक्रमणीग्रन्थप्रतिपादितया दिशैव सपद्यते। पिङ्गलसूत्र छन्दोनियमावबोधे महद् उपकारि। वेदमन्त्रेषु प्रायेण पिङ्गलसूत्रोपदिष्टाना वर्णच्छन्दसां व्यपदेश। लौकिकेषु महाकाव्यादिषु मात्राच्छन्दसां प्रायोव्यवहार। चतुर्विंशत्यक्षर गायत्रीच्छन्द इति

विश्रुतम् । तदेव चतुरुत्तरैरक्षरैर् अर्थात् अष्टाविंशत्यक्षरैरुष्णिक् छन्दः संपन्नम् । ततः चतुरधिकैरक्षरैः=द्वात्रिंशदक्षरैरनुष्टुपं छन्दो वृत्तम् । एवम् उत्तरोत्तरैश्चतुरधिकैरक्षरैः संपद्यमानानि छन्दांसि यथाक्रमं बृहती (=षट्त्रिंशदक्षरैः), पंक्तिः (=चत्वारिंशदक्षरैः), त्रिष्टुभ् (=चतुश्चत्वारिंशदक्षरैः), जगती (अष्टाचत्वारिंशदक्षरैः) छन्दांसि संपद्यन्ते । छन्दश्शास्त्रे उच्चावचानि छन्दांसि निर्दिष्टानि, नेह तेषां सर्वेषां समावेशः कर्तुमिष्टः । इमां छन्दोविचितिं वेदपुरुषस्य पादौ वदन्ति । यथा पादविकलः पुरुषोऽसमर्थः खलु जगद्व्यवहारं संचालयितुम्, एवमेव छन्दोज्ञानमन्तरेण वेदाध्यायः पुरुषो विकलाङ्ग इव । प्रत्यक्षरं शुद्धाशुद्धविमर्शे संदिहानः क्वचित् चतुष्पथे प्रपन्नः कान्दिशीक इव किंकर्तव्यविमूढो वेदान्नाधीयीतेति छन्दोविचितिरपि वेदोपकारिणी सती यथार्थं वेदाङ्गम् ।

कल्पः—कल्पो नाम कल्पनं विधानं विधिः, तत्प्रतिपादकतया शास्त्रमपि कल्पः । आश्वलायनप्रभृतिमहर्षिप्रवरैर्ब्राह्मणग्रन्थप्रतिपादिता एव यज्ञयागादिविधयो विस्तरेण श्रौतसूत्रेषु निरूपिताः । तानि श्रौतसूत्राण्येव कल्पसूत्राणि कल्पा वेति नामभाञ्जि । यथा वेदमन्त्राणां व्याख्यानानि ब्राह्मणानि, तथैव ब्राह्मणव्याख्यानभूताः कल्पा इति वक्तुं निश्चप्रचं शक्यम् । वस्तुतस्त्रयीप्रतिपादितस्य धर्मस्य व्यवहारशास्त्रं कल्पः । तस्मात् त्रयीधर्ममनुप्रपन्नैः कल्पशास्त्रज्ञानम् अवश्यं कार्यम् । यज्ञयागादिव्यवहारोपदेशेन कल्पो वेदाङ्गं वेदप्रचारस्याऽनल्पमुपकरोति । कल्पं हस्तौ वेदस्य वदन्ति । प्राणिमात्रस्य सकलाङ्गव्यापारः प्राधान्येन हस्तायत्तः, कल्पं नाधीयानास्त्रयीधर्ममजानन्तः कालेन नास्तिका मा भूवन्निति कल्पोऽध्येतव्यः ।

ज्यौतिषम्—ज्योतिषां सम्बन्धादेव ज्योतिषं वेदाङ्गमभिनन्द्यते । यागादिषु यज्ञकालार्थसिद्धय एव न ज्यौतिषस्योपयोगः । आ सृष्टेर्मानवमात्रस्य दिव्यैर्नक्षत्रतारागणैराध्यात्मिकः संबन्धः । जातमात्रस्यैव शिशोः सुखदुःखादिसंवेदनासु नक्षत्रतारादीनामभिनिवेशः । खगोलज्ञानमन्तरेण भूगोलविज्ञानमकिञ्चनमिति भूगोलविज्ञा. खगोलविद्यया नक्षत्रादीनां स्वरूपं विविदिषन्ति । प्रत्यक्षमखिलद्यौक्रियमाणं सूर्यमण्डलं कियन्मात्रं लोकमुपकरोति, सूर्याचन्द्रमसोर् अमावासादेवाऽमावस्या तिथिर्निष्पन्ना । अमावास्यातिथावुपदिश्यमान एव यागो दर्शयागः । सूर्याचन्द्रगोभ्यामेव दिनरात्रिचर्यारूपो मानवजीवनविकासः । प्रथमभिसंधिः—पुरुषः प्राणिति, अपानिति, जीवति म्रियते । सर्वासु क्रियासु ज्यौतिषमेव शरणम् । 'सर्वस्य लोचनं शास्त्रं यस्य नास्त्यन्ध एव स.' ज्यौतिषमन्वर्थमेव वेदपुरुषस्य चक्षुः । चक्षुर्भ्यां यत् प्राणिमात्रस्योपक्रियते, तदेव वेदाङ्गेन ज्यौतिषेण वेदानां क्रियत इति । तस्मात् साङ्गमधीत्यैव ब्रह्मलोके महीयते इत्यवितथम् ।

—o—

# वैदिकी देवासुरमीमांसा

वेदेषु, ब्राह्मणेषु, रामायणे, महाभारते, पुराणेषु च देवानामसुराणां च परस्परं सघर्षो विजयः पराजयश्च वर्ण्यन्ते । देवानामपि स्वरूपं नैकविधम् । केऽपि देवाः शक्तिरूपिणोऽन्ये च पदार्था एव । यथा सोममर्दनोपयोगी ग्रावा, यज्ञशालाद्वारः, बर्हिस्तादृशा एवान्ये च । क्वापि भाववचनान्येव देवताः । यथा नासदीयसूक्ते भाववृत्तम्, दानसूक्ते च दानम् । संख्यापि तेषा देवाना नाल्पीयसी । क्वचिच्छतम्, क्वचित्त्रयस्त्रिंशत्, अपरत्रैकादशैव, अन्यत्रैक एव देवो विविधनामा वर्ण्यते । यथेन्द्र एव सूर्यत्वेन । सूर्यस्य च रूपभेदाः पृथक्पृथङ्नामभिः स्तूयन्ते । यथा सूर्यः, सविता, वरुणः, मित्रः पूषा, विष्णुः, आदित्यः तत्प्रभृतयोऽन्ये च । बहवश्च पार्थक्येन, स्तुतिभाजः यथाऽग्निः, वरुणः, इन्द्रः, विष्णु, पूषा, भगः, ब्रह्मणस्पतिः, अश्विनौ, उषाः, बृहस्पतिः । एवं खलु देवाना वैविध्यं स्वरूपभेदश्च लोकान् निमज्जयति भ्रमसागरे । अत एव पाश्चात्या वेदेषु बहुदेववादं (Polytheism) एकदेववादं च वर्णयन्ति ।

अत्र विवेचनीयास्त्रयः पक्षाः । आधिदैविकः, आधिभौतिक, आध्यात्मिकश्च । प्रथमे सावदिन्द्रादयो लोकोत्तराः (Supernatural) सत्त्वा एव । द्वितीये प्राकृता एव भावा देवत्वेन स्तूयन्ते । तृतीये तु भावात्मिका एव शरीरान्तर्गताः शक्तयो देवतावद् वर्ण्यन्ते । याज्ञिका अधिदेवपक्षम्, ऐतिहासिका द्वितीय योगिनश्च तृतीयमनुसरन्ति । तत्र वेदाङ्गत्वेन निरुक्तस्य मतं पूर्वमवेक्षणीयम् । तथाहि—

'यत्काम ऋषिर्यस्यां देवतायामार्थपत्यमिच्छन् स्तुतिं प्रयुङ्क्ते, तद्दैवतः स मन्त्रो भवति' । तास्त्रिविधा ऋचः—परोक्षकृताः, प्रत्यक्षकृताः, आध्यात्मिक्यश्च । तत्र परोक्षकृताः सर्वाभिर्नामविभक्तिभिर्युज्यन्ते प्रथमपुरुषैश्चाख्यातस्य । 'इन्द्रो दिव इन्द्र ईशे पृथिव्याः,' 'इन्द्राय साम गायत';......अथ प्रत्यक्षकृता मध्यमपुरुषयोगास्त्वमिति चैतेन सर्वनाम्ना । 'त्वमिन्द्र बलादधि', 'वि न इन्द्र मृधो जहि', अथापि प्रत्यक्षकृताः स्तोतारो भवन्ति परोक्षकृतानि स्तोतव्यानि । यथा 'मा चिदन्यद् विशंसत'.... ।...

माध्यात्मिकय उत्तमपुरुषयोगा महमिति चैतेन सर्वनाम्ना । यथैतदिन्द्रो वैकुण्ठो लवसूक्तं वागाम्भृणीयमिति', इति । एवं मन्त्रेषु त्रैविध्येन देववर्णनं कृत्वा प्राकृतानां पदार्थानामदेवत्वमपि निरूप्यते । यथा— अपि ह्यदेवता देवतावत्स्तूयन्ते, यथाश्वप्रभृतीन्योषधिपर्यन्तानि । अथाप्यष्टौ द्वन्द्वानि स न मन्येतागन्तूनिवार्थान् देवतानाम्, प्रत्यक्षदृश्यमेतद् भवति, माहाभाग्याद् देवताया एक आत्मा बहुधा स्तूयते, एकस्यात्मनोऽन्ये देवाः प्रत्यङ्गानि भवन्ति, अपि च सत्त्वानां प्रकृतिभूमभिर्ऋषयः स्तुवन्तीत्याहुः प्रकृति सार्व नाम्न्याच्च । इतरेतरजन्मानो भवन्तीतरेतरप्रकृतय, कर्मजन्मान , आत्मज मान, आत्मैवैषां रथो भवति, आत्माश्व, आत्मायुधम्, आत्मेषव आत्मा सर्वं देवस्य देवस्य ।' (नि दै १)

निरुक्तकारस्यैतासु पंक्तिषु त्रयोऽपि पक्षा समायान्ति । यज्ञपद्धत्या खलु देवाना मिथ पार्थक्य हविर्भागत्व सह स्तोतव्यता च । तत्रैवोलूखलमुसलादयोऽपि देवतावत्स्तूयन्ते, परं स खलु भाक्तो व्यवहार । अत एव च देवानामाकारचिन्तने तत्रैव पुरुषविधत्वेन, अपुरुषविधत्वेन, उभयथा च देवाकार प्रस्तुत । परं नैरुक्तपक्षे पुरुषविधानामेव देवाना कर्मपरत्वेन बहूनामपुरुषविधाना देवत्ववर्णना, यथा यज्ञो यजमानस्य ।

अथ किं नाम देवत्वम् ? तत्र दीपनाद् वा द्योतनाद् वा देवा । ये दीप्यन्ते दीपयन्ति वा । दीव्यन्ति यच्छन्ति वा । तत्र के ते देवा ? मीमांसका मन्त्रगतानेव शब्दान् देवत्वेन स्वीकुर्वते । याज्ञिका आहूयमानत्वेनेष्टा शरीरैव देवत्वेन व्यवहरन्ति, तेषा पक्ष पुराणानुकूल एव । नैरुक्ताना मत प्राय आधिभौतिकमेव । एतच्च वृत्रेण सहेन्द्रस्य युद्धवर्णनप्रसंगे यास्केनैव प्रतिपादितम्— तत्को वृत्र ? मेघ इति नैरुक्ता, त्वाष्ट्रोऽसुर इत्यैतिहासिका, समानकर्मणा युद्धवर्णनानि भवन्ति, इति । अत्र च श्रुतिरपि भवति—

यदचरस्तन्वा वावृधानो बलानीन्द्र प्रब्रुवाणो जनेषु ।
मायेत्सा ते यानि युद्धान्याहुर्नाद्यशत्रुं नु पुरा विवित्से ॥ (ऋ० १०।५४।२)

शतपथ ब्राह्मणे तु देवानामसुराणां चोत्पत्तिरेव वर्णिता—

"स आस्येनैव देवानसृजत, ते देवा दिवमभिसृज्यन्त तस्मै ससृजानाय दिवेवास तद्देव देवानान्देवत्वम्, अथ योऽयमवाङ् प्राण । तेनासुरानसृजत इमामेव पृथिवीमभिपद्यासृज्यन्त तस्मै ससृजानाय तम इवास । सोऽवेत् पाप्मानं वाऽसृक्षि यस्मै मे ससृजानाय तम इवाभूदिति, तास्तत एव पराभवंस्तस्मादाहुर्नैतदस्ति यद्दैवासुरम्, यदिदमन्वाख्याने त्वदुद्यत इतिहासे त्वत्ततो ह्येव तान्प्रजापति पाप्मनाऽविध्यन्त तत एव पराभवन्निति । तस्मादेतदृषिणाभ्यनूक्तम्—

न त्वं युयुत्से कतमच्चनाहर्न तेऽमित्रो मघवन्कश्चनास्ति ।
मायेत्सा ते यानि युद्धान्याहुर्नाद्य शत्रुं नु पुरा युयुत्से ॥ (श ११।१।६।१०)

एतेनोर्ध्वंगतयः प्राणा एव देवा अवाङ्मुखादयश्चासुरा इत्युक्तं भवति । अन्यत्र वृत्रं पाप्मेत्युक्तम् । यथा—

"पाप्मा वै वृत्रो यो भूतेर्वारयित्वा तिष्ठति कल्याणात्कर्मणः साधोस्तमेतदिन्द्रेणैव वृत्रघ्ना पाप्मानं वृत्रं हन्ति ।" (श ११।१।५।७)

अनेन शुभकर्मणो निवर्तयित्री प्रवृत्तिरेवासुरत्वेन व्यपदिश्यमाना सूच्यते । असुषु रमन्ते हि ते । परं वरुणस्याप्यसुरपदेन व्यवहारः, तत्र का प्रतिपत्तिः ? तत्र खलु बलवत्त्वस्य प्राणदातृत्वस्य च प्रतिपादकोऽसुरशब्दः । तस्यैवेयं परिणतिर्यत्पारस्यानां प्राचीनतमेऽवेस्ताग्रन्थे मित्रावरुणयोरर्थे मिथ्रशब्दस्य अहुरमज्दाशब्दस्यच प्रयोगो लभ्यते । परमुत्तरकाले केवलं भोगपरायणा दानादिवर्जिता असुरपदवाच्या अभवन् । एतदपि स्पष्टं शतपथब्राह्मणे "देवाश्च वाऽसुराश्च, उभये प्राजापत्याः पस्पृधिरे ततोऽसुरा अतिमानेनैव कस्मिन्नु वयञ्जुहुयामेति स्वेष्वेवास्येषु जुह्वतश्चेरुस्तेऽतिमानेनैव पराबभूवुस्तस्मान्नातिमन्येत पराभवस्य हैतन्मुखं यदतिमानः । अथ देवा अन्योऽन्यस्मिन्नेव जुह्वतश्चेरुस्तेभ्यः प्रजापतिरात्मानम्प्रददौ ।" (श ११।१।८।१)

एतेनाप्ययमर्थोऽहङ्कारादसुराणामात्मपरताऽन्तर्दर्शिता च स्पष्टीकृता, तेन दानादि-कर्म-रहितानां भोगपराणामसुरत्वं साधितम् । परोपकारादि भावनावन्तो देवाश्शेषाश्चासुराः । परमेतेन न समाधानं मन्त्रेषु स्पष्टतो वर्णितानां देवानाम् । प्रत्येकं देवस्य पृथक् कर्म यत्र तत्र वर्ण्यते । यथा—

इन्द्र आसान्नेता बृहस्पतिर्दक्षिणा यज्ञः पुर एतु सोमः ।
देवसेनानामभिभञ्जतीनाञ्जयन्तीनाम्मरुतो यन्त्वग्रम् ॥

अत्रेन्द्रो बृहस्पतिः, सोमः, यज्ञः मरुतः, पृथग् वर्णिताः । एवमेव—अग्नीषोमौ, इन्द्रावरुणौ अग्नाविष्णू, मित्रावरुणाविति देवताद्वन्द्ववर्णनान्नैकत्वं सर्वथा स्वीकर्तुं शक्यते । बहूनि च कर्माणि पुरुषविधानि तादृशा एव चाकारास्तेषां वर्ण्यन्ते । क्वचिच्चान्यदेवस्य नामान्यस्मै प्रयुक्तम् । यथा—

यदद्य कच्च वृत्रहन्नुदगा अभि सूर्य ।
सर्वन्तदिन्द्र ते वशे ।

अत्रेन्द्रशब्दस्य सूर्यार्थे प्रयोगः । ऐतिहासिकानि च कथानकानि देवानां विषये यत्रतत्रोपलभ्यन्ते । यथाऽश्विनोर्विषये । पौराणिकानि च वृत्तानि भारतेऽन्यदेशेषु तुल्यानि । यथा ग्रीसदेशस्य पुराणेषु प्रोमेथियस्नाम्नो जनस्य स्वर्गादग्ने-

रानयन वर्णितम्, वेदेषु च मातरिश्वनो मानवाना हिताय स्वर्गाद् वह्न्े रवतारण सूचितम्। भारतीया शची च ग्रीस्य पुराणेषु साइके (Psichey) सञ्ज्ञया वर्णितया व्यक्त्या सवदते। पर यथाऽन्यत्या पौराणिकास्ता स्वर्गाधिपतेरिन्द्रस्य पत्नी वर्णयन्ति, वेदेषु च शक्तिरेव सा, तथैव तत्रापि तस्या निरन्तरसत्यजिज्ञासार्थं परिणतिरिति मूर्तवर्णनैरमूर्तद्योतनात्मिका प्रवृत्ति। एव च न देवतावादः स्पष्टतरो भवति।

अस्मन्मते तु वेदस्य देवतासम्बन्धिनस्त्रय पक्षा। यत्रैतिहासस्यावरणे प्रतिपिपादयिषित विषयोऽन्तर्भावितस्तत्रतु, भूताख्यान मार्थवादादन्यत्। तत्राध्यात्मिको भौतिको वा पक्ष एव प्रतीकैर्वर्णितो बोध्य। अन्यत्र तु व्यक्तीनामेवोल्लेखोऽतीतचराणाम्। यथा चोक्त शतपथे—'मर्त्या ह वा अग्रे देवा आसु' (श ११।१।२।१२)

अत केषाचिन्मर्त्याना कर्मबलाद् देवभावमापन्नाना नराणा सा कथा भवेत्। नात्र किमप्यसभवम्। त्रिकालवृत्तवर्णनत्वाद् वेदस्य नैतत्तदनित्यता साधकम्। अपरश्च पक्ष प्राकृतदासीनाम्। तथाहि सूर्यचन्द्रादयो वेदवर्णिता देवा स्फुट स्वमहिमान द्योतयन्ति। तत्रेन्द्रशब्देन सूर्यस्य वायोर्वा ग्रहणमिरयन्यत्। यथा पर्जन्यस्येन्द्रपदेन विद्युतश्चाप्सर सञ्ज्ञयोल्लेख। मित्रावरुणौ च युगपदुच्यमानौ विज्ञाने ओषजन (Oxygen) उदजन (Hydrogen) तत्त्वयो प्रतीके। वृत्रश्च मेघो नीहारो वा। तस्मिन्नर्थे चाश्विनावपि रात्रे क्षपयितृणी द्वे नक्षत्रे।

तृतीयस्त्वाध्यात्मिक पक्षो यत्र 'यत्पिण्डे तद् ब्रह्माण्डे' इत्युक्त्यनुसार सकलमपि ब्रह्माण्ड शरीर एव साध्यते। तत्रेन्द्रियाण्येव देवा, आत्मैवेन्द्रस्तदधिपति। शरीरस्य मस्तिष्कभाग एव द्युलोक, मेरुदण्डस्थश्च पृथिवीलोक, तन्मध्येऽन्तरिक्षम्। प्राण प्रजापति, रेत एव सोम। तत्र सद्वृत्तीनामेवावरको वृत्र कुत्सिता वृत्तय एवासुरा, गृत्स एव प्राण, मदश्चापान, तयो प्राणापानयो समेलन महाप्राण। आत्मा चेन्द्र। 'सप्त वै शीर्षण्या प्राणा' त एव सप्त रश्मय, समिध, लोका ऋषयो वा। ता एव चेतनाधारा सप्तसिन्धव। आधुनिके शरीरशास्त्र (Anatomy) Cerebrum सञ्ज्ञयोक्तो द्युलोक, Medula oblong ta middle region इत्याख्यश्चान्तरिक्षलोक, Spinal region इति पृथ्वीत्येव त्रिधा विभक्तास्ते प्राणा एकविंशति सपद्यते। तदुक्तम् ——

'सप्तास्यासन् परिधयस्त्रि सप्त समिध कृता।'

प्राणापानावेवाश्विनौ, च्यवनशील रेत एव च्यवन, रेतसो रक्षण तदुद्भवश्चानन्द एव मधु यद्विद्या दध्यड्ङश्विभ्यामुपादिशत्। एष एवेन्द्र —

'इन्द्रोमायाभिः पुरुरूप ईयते इति बहुभिः कर्मभिः स्तूयते। तस्यैवाधोगामिनीनां वृत्तीनां दमनं देवासुरसंग्रामसंज्ञया प्रतिपाद्यते। इन्द्रियाणि हि बहिर्मुखानि, आत्मान्तर्मुखः—

पराञ्चि खानि व्यतृणत्स्वयंभूस्तस्मात्पराङ् पश्यति नान्तरात्मन्।
कश्चिद् धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन्॥ (क-उ. २।१)

एष एवेन्द्रः सोमपायी, अयमात्माऽस्याध्यक्षः।

देवसंख्या—वेदेषु देवसंख्या शताधिका तेषामेकत्वप्रतिपादिका च। तत्र समन्वयार्थं बृहदारण्यके शाकलयाज्ञवल्क्यसंवादः प्रमाणम्। तदनुसारेण त्रयस्त्रिंशद् देवाः। महिमान एवैषामेते शताधिकाः। 'अष्टौ वसव एकादश रुद्रा, द्वादशादित्यास्त एकत्रिंशदिन्द्रश्चैव प्रजापतिश्च त्रयस्त्रिंशो।' (बृ. ६।९।३) तत्र अग्निश्चपृथिवीच वायुश्चान्तरिक्षं चादित्यश्च द्यौश्च चन्द्रमाश्च नक्षत्राणि चैते वसव एतेषु हीदं सर्वं वसु हितमेते हीदं सर्वं वासयन्ते तद् यदिदं वासयन्ते तस्माद् वसव इति। पुरुषे स्थिता दश प्राणा आत्मैकादश एते रुद्राः। शरीरादुत्क्रम्य रोदयन्तीति रुद्रा इत्युच्यन्ते। संवत्सरस्य द्वादश मासा एव द्वादशादित्याः। 'एते हीदं सर्वमाददानायन्ति।' 'स्तनयित्नुरेवेन्द्रो यज्ञः प्रजापतिः।' अग्निः, पृथिवी, वायुः, अन्तरिक्षम्, आदित्यो द्यौश्चेति षड् देवाः। इमे त्रयो लोका एव देवाः। अन्नं प्राणश्चेति द्वौ। योऽयं पवते सोऽध्यर्द्धः। एको देवः स ब्रह्मेति क्रमश ऊनिता देव संख्या व्यवहारजगतस्तत्त्वजगद् प्रति ततश्च मूलं समन्वेति। अनेन बहुदेववादस्यैकदेववादस्य च न विवादः। 'माहाभाग्याद् देवताया एक आत्मा बहुधा स्तूयते।' तस्यैव शक्तयः सूर्यचन्द्रादयः।

तदेवाग्निस्तदादित्यस्तद् वायुस्तदु चन्द्रमाः।
तदेव शुक्रं तद् ब्रह्म ता आपः स प्रजापतिः॥ (य. ३२।१)

एकं मित्रं वरुणमिन्द्रमाहुरथो दिव्यः स सुपर्णो गरुत्मान्।
एकं सद् विप्रा बहुधा वदन्ति, अग्निं यमं मातरिश्वानमाहुः॥ इति

इत्थ सुस्थिर एव निर्विवादो वैदिको देवासुरवाद इति शम्।

—०—

# वेदोऽखिलो धर्ममूलम्

(लेखकः—श्री विद्यानिधि शास्त्री व्याकरण-साहित्याचार्यः
विश्वेश्वरानन्द वै. शो. संस्थानम्, होश्यारपुरम्)

नवनीतमिवानवगीतमथनोपनीतममृतबिन्दुस्यन्दि वचनमिदमनुपममनुपहत-मतिना मनुना मुनिनाऽऽम्नायि स्वीये धर्म-समाम्नाये। तस्य महर्षेरिदं वचो युक्तिसिद्धं बुद्धयविरुद्धं मनुस्मृतावुपनिबद्धं सर्वत्र प्रसिद्धमस्ति। 'यत् किंच वै मनुरवदत् तद् भेषजं भेषजतायाः' इत्याम्नानात् प्रमाणकोटिमाटीकमानं तद् न खलु टीकां च कांचनाञ्चति। अस्य सर्वानर्थकदर्थनसमर्थस्यायमर्थः—अखिलोऽपि वेदः धर्मस्य मूलम् प्रभवः उत्पत्तिस्थानमस्तीति। कोऽसौ वेद इत्याकाङ्क्षायां ब्रूमः—ऋग्यजुःसामाथर्वलक्षणो विलक्षणो मन्त्रसंहिताचतुष्टयाविरोधिबोधितशाखोपशाखोपबृंहितो हितो महितो विध्यर्थवादनिषेधसहितो ब्राह्मणानुब्राह्मणान्वितो विविधोल्लसत्सांगोपांगोपनिषत्सूत्रारण्यकादिगण्यवरेण्यश्रुतिभेदभिन्नो महान् ज्ञानराशिर्ग्रन्थो वेद इति। किंलक्षणस्य धर्मस्य मूलमिति जिज्ञासायामुच्यते—लोकत्रयधारकस्य दुःखक्षयकारकस्य सहृदयहृदयाभरणस्य पवित्राचरणस्य परिनिष्ठित-श्रेष्ठविद्वदनुष्ठितस्य सर्वार्थसाधकस्य क्रूरकुटिलकष्टचेष्टादुरदृष्टबाधकस्य सुशिक्षणदक्षविचक्षणपक्षरक्षणक्षमस्य विपक्षनृभक्षरक्षःक्षपणस्य सकलभुवनतलमंगलप्रीतिस्फीतिजननस्य दुःस्थितमनःसंवननस्य सुखशान्तिसमृद्धिवृद्ध्यानन्दैकनिधेः साक्षाद् विधेर्निश्वसितस्य त्रिवर्गकेतोः स्वर्गहेतोः पुण्यदयादानाध्ययनाग्निहोत्रादि रूपस्येति। तथा चोक्तं भगवति यजुर्वेदे पुरुषसूक्ते—"तानि धर्माणि प्रथमान्यासन्' इति। प्रथमत एव लोकव्यवहारस्य साधुसंपादनाय परमेष्ठिना प्रजापतिनाऽनादिनिधनेन ब्रह्मणाऽभ्युदयनिःश्रेयसकराणि जनतार्तिहराणि हस्तामलकानीव मंगलैकफलानि विमलमधुराण्यनिश्चयन्मर्माणि तानि धर्माणि शुभकर्माणि प्रजानां योगक्षेमसाधनानि धनानीवाभिलषणीयानि वरणीयानि स्मरणीयानि रमणीयानि च निर्माय स्थिरीकृतान्यासन् सन्ति भविष्यन्ति चेत्यर्थः। वेदे सर्वकालप्रत्ययविधेरिष्टत्वाद् 'आसन्' इति भूतकालक्रिया

वर्तमानभविष्यतोरपि समन्वयनीया । इममेवाशयं प्रतिपादयन्ति वाक्यान्तराण्यपि बहुशः श्रुतिषु श्रुतिशष्कुल्यवच्छिन्ने नभसि पतन्ति जगन्ति पुनन्ति विभान्ति । तद्यथा— वेदाद् धर्मो हि निर्बभौ । सर्वो धर्मो वेदादेव समुद्भूत इत्यर्थः । भूतं भव्यं भविष्यच्च सर्वं वेदात् प्रसिध्यति ॥ इति च । कालत्रयवर्तिनः सर्वेऽपि भावाः सुव्यवस्थितस्वप्रभावा भगवतो वेदपुरुषादेव समुत्पादमापद्यमानाः प्राणभृतां श्व-श्रेयसायालं भवन्तीति । किं च—

प्रत्यक्षेणानुमित्या वा यस्तूपायो न बुध्यते ।
एतं विदन्ति वेदेन तस्माद् वेदस्य वेदता ॥

वेद एवैतादृगप्रतिमप्रभावः प्रत्यक्षीकृतसकलवस्तुस्वभावः परमपरभागमुपेयिवानपौरुषेयो ग्रन्थविशेष इष्यते यत्रातीन्द्रियाणामप्यर्थानां साक्षाद् दर्शनं विद्यते, तत्र सूक्ष्मेक्षिकया निरीक्षणीयं परीक्षणीयं च भवतीति । अतएव बभाणुः कणादाः—

तद्वचनादाम्नायस्य प्रामाण्यम् ॥ इति

तस्य धर्मस्य वचनात् प्रतिपादनात् तस्य ईश्वरस्य वा वचनाद् वाक्यत्वाद् आम्नायस्य वैदिकवाङ्मयस्य प्रामाण्यमव्याहतं सपद्यते इत्यर्थः । "शास्त्रयोनित्वात्" इति वेदान्तसूत्रेणाप्ययमेवार्थः स्फुटीक्रियते । ऋग्वेदादिशास्त्रं ब्रह्मणः तत्प्रतिपाद्यस्य धर्मस्य च योनिः कारणमिति, ऋग्वेदादेः शास्त्रस्य तत्प्रतिपाद्यस्य धर्मस्य च ब्रह्म योनिः कारणमिति वा व्याख्याद्वयेऽपि न किंचिद् दुष्यति । सर्वथा धर्मस्य वेदमूलकत्वं सिध्यति । वेदे पुराण्यप्यक्षुण्णा कल्याणी सा वाणी, याऽद्यावध्यपि निखिला सकलसत्यविद्याविद्युदुद्योतद्योतिनी सतोऽविद्यावद्यान्यवद्यतीति सत्यं प्रतीमः । एवं चैव-प्रायाभिः सद्युक्तिभिः प्रमाणैश्चैवजातीयकैर्दृढं मन्यामहे वेदोऽखिलो धर्ममूलमिति । इदमेवात्र प्रस्तुतं वस्तु वस्तुतः सत्सुतमपि संक्षिप्य निदिदर्शयिषामः सिष धयिषामश्च । इदं तु बोध्यम्—जगदुत्पत्तेः प्राग् वेदेतरग्रन्थाभावाद् वेदस्य चापौरुषेयवाक्यत्वाभ्युपगमात् क्लेशकर्मविपाकाशयापरामृष्टपुरुषविशेषेश्वरकृतत्वस्य च स्पष्टमिष्टत्वादत्र विषये नाण्वपि सन्देग्धव्यम् । न च शङ्कापङ्ककलङ्काङ्कुरेण वीतप्तव्यम् । तथाहि—

तस्माद् यज्ञात् सर्वहुत ऋचः सामानि जज्ञिरे ।
छन्दांसि जज्ञिरे तस्माद् यजुस्तस्मादजायत ॥ इति

सृष्ट्युपक्रमे सावष्टम्भं भगवतैव स्वयं शङ्कायाः समाधानविधानात् । एवं गते सत्यपि ये पेलवधियो व्यामुह्यन्ति तान् प्रति विशेषेणायं क्रियते प्रयत्नः प्रकृतवस्तुप्रतीतिनिबन्धनम् । अतो हेतोः सम्प्रति सम्प्रतिपन्नार्थमर्मवेदवाक्यमार्यैरेव चरितार्थीक्रियमाणः साक्षाद् धर्मोपदेशः प्रस्तूयते—आदौ तावत् सर्वानुगतः सामान्यधर्मः ।

अथर्ववेदीयद्वादशकाण्डे प्रथमोऽनुवाकः पृथिवीसूक्तमित्युच्यते । तदेव राष्ट्रसूक्तं स्वराज्यसूक्तमिति व्यपदिश्यताम् । त्रिषष्ट्या मन्त्रैस्तत्र स्वदेशभूम्या गौरवं कैः कैरभ्युपायैरव्यवायं साधु सेद्धुमर्हतीति निरचप्रथमवाचि । विमृश्य दृश्यतामास्वाद्यतां चाद्यो मन्त्रः —

"सत्यं बृहदृतमुग्रं दीक्षा तपो ब्रह्म यज्ञः पृथिवीं धारयन्ति ।
सा नो भूतस्य भव्यस्य पत्न्युरुं लोकं पृथिवी नः कृणोतु ॥"

प्रथमभिसंधिः—अस्य दृश्यमानस्य जगतः स्थितिहेतुरस्ति कश्चन धर्मो नाम पदार्थः, यः खल्विदमखिलमवनितलमविकलमविचलं च धारयतीति । सर्वेऽभिजना जना वा, समजाः समाजा वा, सर्वा व्यक्तयः शक्तयो वा, जातयो व्याप्तयो वा, सर्वाणि बलानि चलान्यचलानि वा सर्वाणि राष्ट्राणि स्वीयान्यन्यदीयानि जनकीयान्यारातीयानि दूरेयानि दाक्षिणात्यानि पाश्चात्यानि पौरस्त्यान्यौत्तराहाणि वाऽनवयवेन येन *भ्रियन्ते स्थिरीक्रियन्ते स एव धर्म इति मन्त्रेऽत्र प्रतिपाद्यते ।* यतो हि धारणाद् धर्म इत्याहुर्धर्मो धारयते प्रजाः इति वाचोयुक्तियुक्तिमत्यनुश्रूयते । कोऽसौ धर्म इत्यालोचनायामाह—सत्यं बृहदिति । बृहदुपकारि मनोहारि सत्यं वाङ्मनःकायस्यैकात्म्यमिति, इदं प्रथमो धर्मः । 'सत्येनोत्तभिता भूमिः' इत्यृग्वेदेऽपि सूच्यते ।

सत्येन धार्यते पृथ्वी सत्येन तपते रविः ।
सत्येन वाति वायुश्च सर्वं सत्ये प्रतिष्ठितम् ।
नहि सत्यात् परो धर्मो नानृतात् पातकं परम् । इति च

*गुणमहिम्ना तन्नाम्नाऽप्याम्नातम्*……………

श्रुत्यनुकूला स्मृतिश्च तमेवार्थं समर्थयति । ऋतमुग्रम् इति । निर्घृणरिपुगणप्राणहरणक्षमं क्षात्रं तेजः शौर्यं धैर्यं वीर्यं बलं शक्तिसम्पादनमित्यपरो धर्मः । क्षत्रशक्तिप्रशस्तिर्भूयसाऽखिलश्रीभवत्यन्यत्रापि । उपलक्षणं तु यथा यजुर्वेदे—

यत्र ब्रह्म च क्षत्रं च सम्यञ्चौ चरतः सह ।
तं लोकं पुण्यं प्रज्ञेषं यत्र देवाः सहाग्निना ॥

अग्निहोत्रद्वारेण देवपूजका ब्राह्मणा यत्र निवसन्ति क्षत्रियाश्चात्युच्चैस्तेजःसम्पन्नाः समीचीनापराचीनाभिव्यक्तशक्तयः सहयोगिनो भूत्वा चरन्ति स लोकः पुण्यभूमिरिति प्रज्ञायते प्रख्यायते च । न हि तत्र कदाचित् पापं पदं निधत्ते लोकश्चासौ नावसीदति नश्यति भ्रश्यति वा । दीक्षा विशिष्टशिष्टोद्दिष्टपवित्रव्रतनियमग्रहणम् । देहेन्द्रियमनसा संयमनाय षोडशसंस्कारविधानमिति यावत् । अयं तृतीयो धर्मः । तपो द्वन्द्वसंघातानभिघातः सोऽयं त्यागलक्षणः सेवाधर्मश्चतुर्थः । ब्रह्म वेदा-

भूतस्येति। भूतस्य व्रान्तस्यातिक्रान्तस्य, भव्यस्य नव्यस्य एष्यतो भविष्यतोऽव्यपदेश्यस्य चार्थसार्थस्य पत्नी, पालयित्री, साधयित्री च नो धरित्री सुचिरत्नसुचिरत्नसुवर्णवर्णमणिगणपरिपूर्णा सपत्नान्नमस्याद्या सती लोकलोकमशोक सालोकमुरु विस्तीर्णमनुच्छेदिन कृणोतु करोतीत्यर्थ । एतेनाभ्युदयापरपर्याया लौकिकैश्वर्यपरिनिष्ठा सूचिता । सूचित च सूचितकामावाप्तौ सत्या सर्वकामनात्यागस्वरूप स्वत सिद्ध मोक्षाख्य नि श्रेयसम्। अत एव महर्षि कणाद कल्याणी वाणीमभाणीत्—यतोऽभ्युदयनि श्रेयससिद्धि स धर्म इति। ऐहिक परम सुखमभ्युदय । आमुष्मिक च निश्चित श्रेयो नि श्रेयसम् इति तयोरुभयो सिद्धिर्यतो भवति स धर्म इत्यर्थ । जैमिनिना मुनिनापि समुचित जगदे—चोदनालक्षणोऽर्थो धर्म इति। सर्व वाक्य सावधारण भवतीति न्यायाद् वेदविहित कर्मैव धर्म इत्यर्थ । सुखस्य मूल धर्म । धर्मस्य मूलमर्थ । अर्थस्य मूलमिन्द्रियजय । कामस्य मूल धर्मार्थावर्थधर्मों वा इत्येव त्रिवर्गसाधन सूत्रयताऽर्थशास्त्रप्रणेत्रा राष्ट्रनेत्राऽऽर्यचाणक्येनापि महाविदुषा वेदानुगुणमेवावर्णि । प्रथम मुख्यमाधार धर्म विना, अर्थकामौ न कदाप्येकान्तात्यन्तिकसुखाय कल्पेते इति तस्य महाशयस्याशय । अतश्च धर्मार्थकाममोक्षाभिधे पुरुषार्थचतुष्टये धर्मस्य प्रथम स्थानमिष्यते । इतरेषामाधारकत्वात्। धर्म जिज्ञासमानाना च श्रुतिरेव परम प्रमाणमित्यसकृदाहु प्राञ्चो मन्वादिराजर्षय । सत्यप्रमुखा इमेऽथर्वमन्त्रोक्ता धर्मा सामान्या अपि समान्या. सर्वेषामभिनन्दनीया अनिन्दनीयाश्च सन्तो न प्रामाणिकगर्हणमर्हन्तीत्याबालवृद्धमशेषेण विशेषेण परिशीलनीया । राजमाजापि नैतान् व्याहन्तुमीष्ट इत्यनिच्छद्भिरप्यच्छमतिभि परिच्छेत्तव्यम्।

इदानी वर्णाश्रमसमाजस्त्रीजातिराजनीतिमूलाना धर्माणा वेदोदिता दिगुदाह्रियते—तत्र वर्णधर्मा —

> ब्राह्मणोऽस्य मुखमासीद् बाहू राजन्य कृत ।
> ऊरू तदस्य यद् वैश्य पद्भ्यां शूद्रो अजायत ॥
> रुचं नो धेहि ब्राह्मणेषु रुच राजसु नस्कृधि ।
> रुच विश्येषु शूद्रेषु मयि धेहि रुचा रुचम् ॥

यथेमा वाच कल्याणीमावदानि जनेभ्य । ब्रह्म राजन्याभ्या शूद्राय चार्याय च स्वाय चारणाय ॥यजु ॥

अत्र ब्राह्मणो मुखबाहूरुपज्जाना ब्राह्मणक्षत्रियवैश्यशूद्राणा चतुर्णामपि वर्णाना क्रमेण लक्षणया ज्ञानबलधनसेवाधर्मा प्रोक्ता । अध्यापनमध्ययनमित्यादिवचनैर्मनुना, श्रीमगवद्गीतासु महर्षिणा व्यासेन च तेषामेव वेदोक्ताना वर्णधर्माणामन्वाख्यान व्याख्यान च कृतमित्यतिरोहित सर्वेषाम् । यथेमा वाचमिति मन्त्रेण चान्त्यजशूद्रस्त्रीप्रभृतीनामपि कल्याणीवेदवाणीवीणाश्रवणेऽधिकारो दत्तो न तु धिक्कार ।

**आश्रमधर्म —**

ब्रह्मचर्यगृहस्थवनस्थसन्यासाख्याना चतुर्णामाश्रमाणा मूल वेदे विद्यते इति तद्धर्माणामपि सुतरा विधान द्रष्टव्यम् । तद्यथा—

ब्रह्मचर्येण तपसा देवा मृत्युमपाघ्नत । आचार्यो ब्रह्मचर्येण ब्रह्मचारिणम् इच्छते । आचार्य उपनयमानो ब्रह्मचारिण कृणुते गर्भमन्त ॥ इत्यादि ब्रह्मचर्यस्य, "इहैव स्त मा वियोष्ट विश्वमायुर्व्यश्नुतम्, क्रीडन्तौ पुत्रैर्नप्तृभिर्मोदमानौ स्वे गृहे ॥ ऋग्वेद ॥

अनुव्रत पितु पुत्रो मात्रा भवतु समना ॥ अथर्ववेद ॥
जाया पत्ये मधुमतीं वाच वदतु शन्तिवाम् ॥ इति गृहस्थस्य ॥

'दीक्षातपसोस्तनूरसि ॥ अभ्यादधामि समिधमग्ने व्रतपते त्वयि । व्रत च श्रद्धा चोपैमि, इन्धे त्वा दीक्षितो अहम् ॥

तप श्रद्धे ये ह्युपवसन्त्यरण्ये शान्ता विद्वासो भैक्षचर्यां चरन्त ॥ इत्यादि वनस्थस्य,

अकामो धीरो अमृत स्वयम्भू रसेन तृप्तो न कुतश्चनोन ।
तमेव विद्वान् न बिभाय मत्योरात्मान धीरमजर युवानम् ॥
यतयो ये च तुष्टुवु । भृगवो ये च तुष्टुवु ॥ ऋग्वेद ॥

वेदान्तविज्ञानसुनिश्चितार्था सन्यासयोगाद् यतय शुद्धसत्वा ॥ इत्यादि सन्यासस्य । अत्र ब्रह्मचर्याश्रमे आचार्योपनीतत्वात् तप सपत्तिजितेन्द्रियतया सकलविद्याग्रहण धर्म । गृहस्थे यथाविधि सकलसासारिकैश्वर्योपभोगो धम दम्पत्यो प्रेमस्थेमा चावश्यक । वनस्थे आरण्यक व्रतमाश्रित्य तपोनुष्ठानमात्मनिरीक्षण च धम । सन्यासे चात्मवामस्य वीतरागस्य लोकोपकार स्वच्छन्दपरब्रह्मामृतदान दास्वादश्च धम ।

**समाजधर्म —**

स गच्छध्व स वदध्व स वो मनासि जानताम् ।
देवा भाग यथापूर्वे स जानाना उपासते ॥
समानी व आकूति समाना हृदयानि व ।
समानी प्रपा सह वोऽन्नभाग ॥
सहृदय सांमनस्यमविद्वेष कृणोमि व ॥
मा भ्राता भ्रातर द्विक्षन् मा स्वसारमुत स्वसा ।
सम्यञ्च सव्रता भूत्वा वाच वदत भद्रया ॥
अज्येष्ठासो अकनिष्ठास एते स भ्रातरो वावृधु सौभगाय ॥

निगदव्याख्यातान्येतानि । सामाजिकं परस्परमैक्यं मैत्रीभावः सङ्घटनगुरु—लघुभावोऽभेदभावश्च न्याय्य इत्ययं समाजधर्मः ।



स्त्रीधर्मा —

स्त्री हि ब्रह्मा बभूविथ ॥
ब्रह्मचर्येण कन्या युवानं विन्दते पतिम् ॥
उत त्वा स्त्री शशीयसी पुंसो भवति वस्यसी ॥
न वै स्त्रैणानि सख्यानि सन्ति सालावृकाणां हृदयान्येता ॥
पापमाहुर्यः स्वसारं निगच्छात् ॥ ऋग्वेद ॥

अत्र स्त्रीणां ब्रह्मचर्यपूर्वकं विद्याध्ययनं युवावस्थायां विवाहकरणं विद्यावत्त्वेऽपि लज्जाशीलत्वं धर्मः । इतरथा शीलभङ्गान्नक्तुाऽऽसङ्कमुट्टङ्कयेत् । अशिक्षितत्वाददानशीलाद-भागवद्भक्ताच्च पुंसोऽपि ज्यायस्त्वं प्रतिपादितम् । भगिनीसगमः पापमतिस्त्रीप्रसक्तिश्च वर्जनीयेत्यादि ।

सकलमनुष्यजातिधर्मा —

कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः ॥
मित्रस्याहं चक्षुषा सर्वाणि भूतानि समीक्षे ॥ यजु ॥

शतहायनपरिमितं पूर्णं पुरुषायुषं यावत् प्रत्येकं मनुष्येण कर्मावश्यं कर्तव्यं सर्वत्र च मित्रवद् व्यवहर्तव्यम् । आलस्यं हि मनुष्याणां शरीरस्थो महान् रिपुरित्यास्नातमन्यत्रापि । अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहाः शौचसंतोषतपःस्वाध्यायेश्वरप्रणिधानानीति तु पूर्वमेव सामान्येन प्रतिपादिता धर्माः । तथापि विशेषेणाहिंसाया प्रमाणानि—

'इमं मा हिंसीर्द्विपादं पशुम्' अत्र द्विपात् पशुर्मनुष्यः ।
अहिंसयैव भूतानां कार्यं श्रेयोनुशासनम् ।
वाक् चैव मधुरा श्लक्ष्णा प्रयोज्या भूतिमिच्छता ॥ मनु ॥
सत्यम्—सत्यमेव जयते नानृतम् । सत्यं वद । धर्मं चर ॥
अस्तेयम्—न स्तेयमद्मि मनसोदमुच्ये ॥ गृह्यसूत्रम् ॥

अपरिग्रह—तेन त्यक्तेन भुञ्जीथाः । त्यागपूर्वको भोग एव धर्म इत्यर्थः मा गृधः । लोभं मा कार्षीः । लोभनाश एव ज्यायान् धर्मः ।

इन्द्रियनिग्रह—न जातु कामः कामानामुपभोगेन शाम्यति ॥
इन्द्रियाणां प्रसङ्गेन दोषमृच्छत्यसंशयम् ।
संनियम्य तु तान्येव ततः सिद्धिं नियच्छति ॥ मनु ॥

**सन्तोष**—सन्तोष परम सुखम्। सतोपामृततृप्ताना यत् सुखम् इत्यादि स्वय व्याख्यातान्येतानि वाक्यानि व्याख्याभाष्य नापेक्षन्ते।

**ईश्वरभक्ति**—श पद मघ रयीषिणे न काममव्रतो हिनोति न स्पृशद् रयिम्॥
॥ सामवेद ॥

धनमिच्छत पुरुषस्य पूर्णशान्तिदायक भगवच्चरणमेव शरणमित्यर्थ।

यस्तु सर्वाणि भूतान्यात्मन्येवानुपश्यति।
सर्वभूतेषु चात्मान ततो न विचिकित्सति॥
यस्मिन् सर्वाणि भूतान्यात्मैवाभूद् विजानत।
तत्र को मोह क शोक एकत्वमनुपश्यत॥यजु॥

भूतमात्र सर्वत्र भगवद्दर्शनमेव कर्तव्यमिति निष्कृष्टोऽर्थ।

**राजधर्म**—ब्रह्मचर्येण तपसा राजा राष्ट्र विरक्षति॥ अथर्ववेद॥ मा त्वद्राष्ट्रमधिभ्रशत्। इहैवैधि मापच्योष्ठा पर्वत इवाविचाचलि॥ राजा ब्रह्मचारी स्यात् तपस्वी स्यात् पर्वत इवाचलश्च सन् स्वा प्रजा परिपालयेदिति भाव। उत्क्राम महते सौभगाय॥ क्षत्रस्य योनिरसि॥

माभिमस्था। अहकाररहितो भवेति राजान प्रत्याशीर्वाद। शतायुष कृणुहि चीयमान। सुश्लोक सुमङ्गल सत्यराजन्। इन्द्रो राजा जगत चर्षणीनाम्। वस्तुतोऽतिभवान्भगवानेव जगतो राजा त्व तु तदीय प्रतिनिधिरिति राज्ञा प्रत्यहमात्मा बोधनीय। 'धर्मोऽस्मि विशि राजा प्रतिष्ठित।' इति।

राजा धर्मपूर्वक प्रजा अनुशिष्यान्न कदाप्यधर्मशील स्यादिति धर्मानुगुणैव राजनीतिर्वेदे निगदिता न ॥ धर्मप्रत्यनीका। एव च नीतिधर्मयो शाश्वतिक विरोध प्रतिपन्ना वेदवाक्यादवसन्ना पराहृताश्च वेदितव्या।

(ये तु ब्रुवते वेदा केवल कर्मकाण्डविधायका यज्ञप्रक्रियायामेवोपयुक्ता न लौकिक व्यवहारमुपदेष्टु प्रवृत्ता। 'यत्पर शब्द स शब्दार्थ' इति न्यायेन तत्रार्थे तात्पर्याभावादिति तेषा मतमप्येतेन प्रत्युक्त प्रतिपत्तव्यम्। वेदे स्पष्टमुपलभ्यमाने समाने निरुपमाने लौकिकधर्मविधाने कथकारमाद्रियेत तद्विरुद्धमशुद्ध प्रतिरुद्ध च रिक्त तद्वच।

पर्यवसाने च—

विद्या चाविद्या च यस्तद् वेदोभयं सह।
अविद्यया मृत्यु तीर्त्वा विद्ययाऽमृतमश्नुते॥ इति मन्त्रेण

अविद्यारूपमत्कर्मणा मृत्युरूपसंसारार्णवतरणं विद्यारूपात्मज्ञानेन चामृतपदोपलब्धिरितीत्थमित्थंभूतार्थप्रतिपादनात् निर्वासनानां ज्ञानकर्मोपासनानामविरोधेन धर्मत्वमभ्युपगतम् । अतएव मनुना—

योऽनधीत्य द्विजो वेदमन्यत्र कुरुते श्रमम् ।
स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः ॥

इति वचनाद् वेदमनधीयानानां सान्वयं शूद्रत्वमुद्घोषितम् ।

तत्र वयं तथात्वं मा प्रतिपत्स्महीतिभिया धर्मार्थमस्माभिर्वेदा अध्येतव्या अध्येतव्याश्च । वेदानधीत्य नितान्तं तान्तस्वान्ता भ्रान्ता अपि दान्ताः शान्ताः कान्ताश्च भवन्त्याप्तैकान्ताः । गृहमेधिनो विषमस्था अपि शमस्था वनस्था इव पूर्णं पुरुषायुषं लभमानाः साभिमानाः स्वात्मनि सावधानाश्च समुल्लसन्ति । दर्शपूर्णमासादियागं कुर्वाणोऽपि स्वं निश्रेणिनिर्माणान्निर्वाणं लब्धुमलकर्मीण एव संपद्यते । तदुक्तं बृहदारण्यके—'तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ सम्पत्स्ये' इति । तस्मादस्माकमिदमावश्यकं कृत्यमस्ति यद्वयं वेदोदितमुदितधियो मुदितश्रियो गुहायां निहितं धर्मस्य तत्त्वं सम्यगनुसन्धाय हृद्यवधाय सदुक्तसिद्धान्तशय्यामधिशय्य विरहय्य चात्यन्तीनां वैमाकुलीं वलयद् भगवदनुग्रहं वारं वारं स्मारं स्मारं पारं गता स्यामापदापगानाम् इति शम् ॥

—०—

# इन्द्रः

वेदेषु विशेषतः ऋग्वेदे देवानां स्तुतयो वर्णिता यथाऽवसरम् । तेषु च सर्वाधिका प्रशस्तिरग्नेस्ततो न्यूनाऽन्येभ्यश्चाधिका इन्द्रस्य । सर्वेऽपि देवा इह मानवीकरणेन पुरुषाकारैर्निरूपितास्तेषु चेन्द्रस्याधिकं स्पष्टं स्वरूपम् । स आर्याणां योद्धा देवः शूरत्वेन सादरं स्तुतः ।

स हरिश्मश्रुः सुशिप्रः । वज्रायुधोऽसौ वृत्रं शम्बरं नमुचिं वलं शुष्णं रौहिणं च निहन्ति । मरुतस्तस्य साहाय्यं कुर्वते । स विशेषेण सोम-प्रियः । तस्य मदेऽतितरां शक्तिमान् सम्पद्यते । 'वज्रमस्मै स्वयं त्वष्टा ततक्ष ।' स च विद्युद्रूपो लोहमयः पाषाणकृतो वा । सशरं शरासनमङ्कुशश्च तस्यान्यास्त्राणि, स शतक्रतुः, शचीपतिः । सोऽतुलधनस्य दातेति मघवानिति स्तूयते । स्वर्णमयं रथं हरिवर्णतुरगचालितं रथमारोहति स । द्यौस्तस्य पिता, अग्निः पूषा च भ्रातरौ, अग्निना, विष्णुना, वरुणेन च सह समक्तिः । वायुना, सोमेन, बृहस्पतिना, पूष्णा च सह सामान्येन हविर्भाक् स निरूपितः ।

स वृत्रस्य हन्ता, तस्य वर्णनं वेदेषु त्रिधा लभ्यते, पुरुषाकारेण, प्राकृतरूपेणाध्यात्मप्रकारेण वा । प्रथमस्तु यदैतिहासिकास्तमतीतकथानायकत्वेन व्याचक्षते । यथा

येनेमा विश्वा च्यवना कृतानि यो दासं वर्णमधरं गुहाकः ।
श्वघ्नीव यो जिगीवाँ लक्षमाददर्यः पुष्टानि स जनास इन्द्रः ॥

पाश्चात्या अनेनानार्याणां पराजयमेव सूचितं मन्यन्ते । 'यो हत्वाहिमरिणात् सप्त सिन्धून् यो गा उदाजदपधा वलस्य ।' इत्यनेनापि शत्रुहननं वलेन हृतानां गवां च मोचनमभिदर्शयति । 'यः शम्बरं पर्वतेषु क्षियन्तं चत्वारिंश्यां शरद्यन्वविन्दत् ।' अत्रापि शम्बराख्यस्यानार्यस्य मार्गणं चत्वारिंश्या शरदा च अस्यारिद् युद्धस्य महत्त्वं सूचयन्ति । देवसेनाभिः सह सम्महत्त्वाध्यात्म्याभिप्रायमपि साधु वर्णितम् । यथा —

इन्द्र आसां नेता बृहस्पतिर्दक्षिणा यज्ञः पुर एतु सोमः ।
देवसेनानामभिभञ्जतीनां जयन्तीनां मरुतो यन्त्वग्रम् ॥

एवं च—

> प्राशुः शिशानो वृषभो न भीमो घनाघनः क्षोभणश्चर्षणीनाम्।
> संक्रन्दनो निमिष एक वीरः शतं सेना अजयत्साकमिन्द्रः॥

इति। अत्र महायोद्धेव स वर्णितः। अतएव यास्केनाप्युट्टङ्कितं निरुक्ते—'तत्को वृत्रः? त्वाष्ट्रोऽसुर इत्यैतिहासिकाः। मेघ इति नैरुक्ताः। उपमार्थेन युद्धवर्णनानि भवन्ति।' इति। एवं च नैरुक्तानां प्राकृत एव पक्षः। तत्रापि कतमा प्राकृती शक्तिरिन्द्रत्वेन गृह्येत? वृष्टेर्देवत्वेन वर्ण्येत चेत् तदा पर्जन्येन तस्य को भेदः? सोऽपि हि वृष्टेर्देवता। द्यावापृथिव्योर्वा मेघयोरश्मनोरन्तः स वैद्युतमग्निं जनयति। परं यदि स मेघेष्वग्निं जनयति तदा स सप्तसिन्धूनां मोक्षणेन सह तस्य कः सम्बन्धः? कथं वा सगतिर्बलकृताद् रोधाद् गोमोक्षणस्य? चत्वारिंश्यां शरदि च शम्बरस्य लाभः कथमुपपद्येत? दासवर्णस्याधरीकरणेऽपि किमौचित्यम्। यद्यपि प्रमाणान्तरेण मेघानां पर्वतत्वं वर्णितमेव, 'य ईड्खयन्ति पर्वतान् तिरः समुद्रमर्णवम्।'

> मतान्तरे चेन्द्रः सूर्यः। सूर्यार्थे तस्य वर्णनमपि मन्त्रे दृश्यते। यथा—
> 'यदद्य कच्च वृत्रहन्नुदगा अभि सूर्य। सर्वन्तदिन्द्र तेवशे।'

अत्र 'वृत्रहन्' इति 'इन्द्र' इति सम्बोधनं च सूर्यस्य विशेषणे। शार्मण्यदेश्यो हिलेब्राण्ट-सञ्ज्ञो विद्वान् वृत्रं नीहारमेव मनुते। तन्मते चेन्द्रो ग्रीष्मकालिकः सूर्यो यः खलु स्वप्रकाशेन तापेन च नीहारं विनाश्य घनीभूतं जलं द्रावयित्वा सिन्धून् प्रवाहयति। अस्मिन् मते वलकर्तृकावरोधाद् गवां मुक्तिरपि सङ्गच्छते। तथाहि—वेष्टनार्थकाद् वल्धातोर्निर्मितो वलशब्दोऽपि प्रकाशरोधकार्ये प्रयुक्तः। अतो येनाऽपि मेघेन घनीभूतया कुहया च सूर्यस्य रश्मयो निरुद्धा आसन्, ते रश्मयः प्रसारार्थं मुक्ताः। परमेतस्मिन्नपि मते वर्तते काप्यनुपपत्तिः। यदि सूर्य एवेन्द्रः नीहारश्च वृत्रस्तर्हि शम्बरस्य चत्वारिंश्यां शरदि लाभस्य कथं सगतिः स्यात्? मरुतो वृष्टिकार्ये इन्द्रस्य सहायकाः। परं पूर्वोदाहृतमन्त्रयोर्देवसेनाभियानं वर्णितं तस्य च कथं योजना? किं मरुतोऽपि सूर्यस्य साहाय्यकर्तारः।

अत्र लोकमान्यस्तिलकस्त्वन्यथैव समाधत्ते। तस्य मतेनार्या पूर्वमुत्तरध्रुवप्रदेशवास्तव्या आसन्। तत्र च षाण्मासिकं दिनं षाण्मासिकी निशा च भवतः। प्रतिसतनं प्रवर्तमानस्य प्रकाशतमसोरयं सङ्घर्षो वृत्रेन्द्रवधरूपेण वर्ण्यते। तत्र प्रवहज्जलं च दिव्यं प्रतिभाति सूर्यचन्द्रमसोर्गतिहेतुतया च प्रतीयते। यदि वृत्रो जलानि तानि रुन्ध्यात् सूर्यादिर्गतिरोधाद् हानिरेव भवेत्। अस्मिन् मते वृत्रश्च सजलोऽवग्रहजलधरः। तस्य निपातनेन नदीप्रवाहः सङ्गच्छत एव।

ग्रीष्मसूर्यस्येन्द्रत्वमन्यथाऽपि सिद्धम्। ऐतरेयब्राह्मणे निरूपितं यन्माध्यंदिने सवने मरुद्भिः सहेन्द्रस्य भक्तिर्वर्ण्यते। इन्द्रश्च सूर्यस्य प्रतिनिधिः यज्ञे च सोमदिनं सूर्येण तुल्यं लिखितम्। प्रथमे सोमदिने वर्षारम्भप्रतीके ग्रीष्मार्कस्य स्तुतिः। स चेन्द्रः। चत्वारिंश्यामिति तूपलक्षणम्। शरच्च शरदो दिनार्थे। परं तदा 'दासं वर्णमधरं गुहा कः' इत्यस्य कोऽभिप्रायः? यदि वर्णशब्दस्यावरकमिति दासस्य चोपक्षपयितृ लक्षणोऽर्थो गृह्यते तदा तस्यापि समाधानम्। तदाऽपि—'दासपत्न्यो अहिगोपा अतिष्ठन्' इत्यत्र 'अहिहत्येषु' इत्यादौ चाहिहननस्य कोऽभिप्रायः। प्रसिद्धं चैतद् वृत्रहननरूपं कार्यं मन्यजातिष्वपि। आर्मीनियादेशस्य पुराणेषु वाहन (Vahagn) नाम लभ्यते तस्य कार्यम् अहिहन्ता (Dragon-slayer) इति शब्देन सूच्यते। अवेस्तायां च दासार्थे दाह (Daha) शब्दो वृत्रहन्नित्यर्थे च वरथ्रगन इति नाम विजयाधिष्ठातृदेवस्य संज्ञात्वेन लभ्यते। सूर्यस्य सर्पहननं तु न संभवति। अतोऽध्यात्मपक्षेऽस्य संगतिर्विधेया।

अस्मिन् पक्षे त्विन्द्रस्तावदात्मा परमेश्वरश्च। 'इन्द्रो मायाभिः पुरुरूप ईयते' इत्यादौ तु स परमेश्वर एव। तस्य त्रिविधार्थमभिलक्ष्य यास्केन स शब्दो निरुक्तः—'इन्द्र इरां दृणातीति वा, इरां ददातीति वा, इरां दधातीति वा, इरां दारयत इति वा, इरां धारयत इति वा, इन्दवे द्रवत इति वा, इन्दौ रमत इति वा, इन्धे भूतानीति वा, तद् यदेनं प्राणैः समैन्धस्तदिन्द्रस्येन्द्रत्वमिति ह विज्ञायते। इदं करणादित्याग्रायणः, इदं दर्शनादित्यौपमन्यवः, इन्दतेर्वैश्वर्यकर्मणः, इन्दञ्छत्रूणां दारयिता वा द्रावयिता वा आदरयिता वा च यज्वनाम्।' (नि १०।१।६)

एतासु व्युत्पत्तिषु चेन्द्रशब्दस्यत्रिविधा अप्यर्था समायाताः। ऐतरेयोपनिषदि तु—'तस्मादिन्द्रो नामेदन्द्रो ह वै नाम तमिदन्द्रं सन्तमिन्द्र इत्याचक्षते परोक्षेण। परोक्षप्रिया इव हि देवाः। (ऐ० आ० ४।३।१४) इति वाक्ये समस्तेष्विन्द्रियेषु बहिर्मुखेषु सर्वं भासमानं द्रष्टुं प्राभवदितीदं द्रष्टा सन् परोक्षवृत्त्येन्द्रोऽभवदिति प्रतिपादितम्। तेनात्मैव सिद्ध्यति।

इन्द्रोऽन्तरिक्षलोकस्य देवता। 'यत्पिण्डे तद् ब्रह्माण्डे' इति मतेन शरीरं एव मस्तकं तावद् द्युस्थानम्। सर्वासां नाडीनां तत्केन्द्रम्। इन्द्रियाणि देवाः, तेषामात्मैव अधिपतिः। वीर्यं च सोमः। योगिमतानुसारेण तत्र ब्रह्माण्डेऽधस्तादधोमुखं कुण्डं वर्तते। ततोऽमृतं स्यन्दते। आत्मा च तस्य पानं करोति। तैत्तिरीयोपनिषद्यप्येतत् सूचितम्—'स य एषोऽन्तर्हृदय आकाशः तस्मिन्नयं पुरुषो मनोमयः। अमृतो हिरण्मयः। अन्तरेण तालुके य एष स्तन इवावलम्बते सेन्द्रयोनिः।' (तै० उ० ६।१) एवमिन्द्रस्यात्मत्वे सिद्धे न तावद् वासुरसंग्रामसिद्धिः। अतएवोक्तम्—'अशत्रुरिन्द्र जज्ञिषे।' अन्यत्र च मया—

नैतदस्ति यद्देवासुरं यदिदमन्वाख्याने त्वदुद्यत इतिहासे त्वत् । ततो ह्येवैतान् प्रजापतिः पाप्मनाऽविध्यत्, ते तत एव पराभवन् इति । तस्मादेतदृषिणाऽप्यनुक्तम् ।

न त्वं युयुत्से कतमच्चन नाहर्न तेऽमित्रो मघवन् कश्चनास्ति ।
मायेत्सा ते यानि युद्धान्याहुर्नाद्य शत्रुं न तु पुरायुयुत्से ॥
(श. ११।१।६।१०)

एवं च सर्वासामपि शङ्कानां समाधानम् । अन्यत्रचोक्तम्—'वृत्रो वै पाप्मा ।' वृत्रः पापमेव । अतो दुर्वृत्तय एवासुराः । सद्वृत्तयो देवाः । तासां दुर्वृत्तीर्जेतुं कृतमभियानं वर्णितं वीररसेन । तत्रात्मनः शान्तिं वृणोतीति शवरो मोहः । सप्तरश्मयः सप्त चैतन्यधाराः, अहिराहन्ताऽविद्या-विकारः । एवं समाधानं भवति ।

परं न सर्वथा प्राकृत ऐतिहासिको वा पक्षोऽसंगतः । मन्त्रा ह्यनेकार्थकाः । शतपथब्राह्मण एवोक्तम्—'मर्त्या ह वै अग्रे देवा आसुः' एवं मर्त्या एव देवभावं प्राप्ता आत्मानोऽत्र वर्णिता भवेयुरिति संभाव्यते । न च तदा वेदानां नित्यत्वक्षतिः । त्रिकालदर्शिनां योगिनामिव नित्यज्ञानमयस्य वेदस्य पश्चाद्वर्त्तिवत् प्रतिपादनसंभवात् ।

पाश्चात्यविदुषां मतेनेन्द्रोऽप्यमार्याणां भारते आगमनात्पूर्वकालिको देवः । प्रमाणं चास्य पूर्वदर्शिता इन्द्रसमानार्थकाः शब्दाः । अवेस्तायां च आन्द्र (Andra) शब्दस्तस्यैव परिवर्तितं रूपम् । परं तत्र न स देवोऽपि तु दानवः । अयं च पश्चादार्याणां पारसीकाणां च प्रवृत्तस्य विरोधस्य परिणामः ।

पाश्चात्यः जिमरमैन (Zimmermann) संज्ञो विद्वान् इन्द्रशब्दम् इन् धातुना इन्धि धातुना वा व्युत्पादयति । स्वामिदयानन्दश्चैश्वर्यार्थकादिदिधातोर्व्युत्पाद्य सूर्यवाचकमीश्वरवाचकं चेमं व्याचख्यौ । योगिराडरविन्दश्चेन्द्रं प्राणशक्तेः प्रतिनिधिं प्रज्ञाधिपतिं च स्वरूपयत् ।

—०—

# वरुणः

वैदिकेषु देवेषु नितरां महद्गौरवं भजन्नपि देवोऽयम् ऋग्वेदे द्वादशसु सूक्तेष्वेव स्तुत इति चित्रम्। अस्य स्वरूपं साधु दर्शनीयं स्पष्टतरं च। स हस्तौ स्पन्दयति, रथं चालयति, इतस्ततो भ्रमति। स्वर्णमयं कवचं कञ्चुकं वा परिदधाति '(बिभ्रद् द्रापिं हिरण्ययम्) सहस्रदृगयं दूरवर्तीन्यपि वस्तूनि साधु निभालयितुं क्षमः। अतएव सोऽन्तर्यामी, विश्वदर्शी भुवनानां चरितस्य द्रष्टा। वीरोऽधीश्वरश्चासौ क्षत्रश्रीः।

*"कदा क्षत्रश्रियं नरमा वरुणं करामहे। मृळीकायोरुचक्षसम् (ऋ० १ २५ ६)"*

द्युलोके सहस्रद्वारं तस्य भवनं यत्र स्थितः प्रजानामाचरितानि निरीक्षते। 'सत्यानृतावपश्यन् प्रजानाम्।'

*अयं सम्राट्। नास्य कर्माणि कश्चिदपि भङ्क्तुं समर्थः। कालकलाः सकला* अपि जानाति। अतीतानागतवर्तमानानि प्राणिनां कर्माणि वीक्षितुं साध्वसौ समर्थः। शोभनकर्मा सः।

**नेषसाद धृतव्रतो वरुणः पस्त्यास्वा, साम्राज्याय सुक्रतुः।**
**अतो विश्वान्यद्भुता चिकित्वाँ अभि पश्यति। कृतानि या च कर्त्वा॥**
(ऋ० १ २२ ११)

स यदा स्वसभायां सहस्रस्तम्भमय्यां निषीदति, तं परितः सर्वे प्रणिधयः तिष्ठन्ति। अतः सर्वेषामपि कर्माणि साक्षात्करोति। नास्मात् कोऽप्यागस्कृदात्मानं निह्नोतुं समर्थः।

निषसाद धृतव्रतो वरुणः पस्त्यास्वा। साम्राज्याय सुक्रतुः॥
बिभ्रद् द्रापिं हिरण्ययं वरुणो वस्त निर्णिजम्। परि स्पशो निषेदिरे॥
(ऋ० १ २५ १३)

वरुणो द्वयोः प्राणिनो रहः संवादमपि श्रोतुं समर्थः।
यस्तिष्ठति चरति, यश्च वञ्चति यो निलायं चरति यः प्रतङ्कम्।
द्वौ संनिषद्य यन्मन्त्रयेते राजा तद् वेद वरुणस्तृतीयः॥
(अथ० ४।१६)

वरुणः खल्वृतस्याधिपती रक्षको नियन्ता च। ऋतस्यानेकार्थत्वेऽपि प्राय सत्यस्य पर्यायत्वेनेद गृह्णन्ति। पर नात्र तत् तात्पर्यम्। ऋत तावत्सृष्टे शाश्वतो नियमोऽनुशासन व्यवस्था च। डा० घाटे सञ्ज्ञो विद्वान् त त्रिधा निरूपयति—

1. Cosmic order The regular recurrence of natural Phenomena

2. *Principles guiding and regulating the different aspects of sacrifice*

3 The moral law which every rightious man must observe

तदुक्तदिशा व्यापारस्य शाश्वता नियमा यानाश्रित्य सूर्यचन्द्रादिग्रहमण्डल नक्षत्रमालाऽहोरात्र भमासर्तु वत्सरचक्र च प्रवर्तते, यज्ञविधय, मानवस्याचारा नुशासनानि, एतत्सर्वमभिव्याप्य छन्दस्यास्य प्रवृत्ति। वैदिकसिद्धान्तानुरोधेन ब्रह्माण्डस्योत्पत्तिरपि ऋतमूलैव। निरूपित चैतत् 'ऋतञ्च सत्यञ्चाभीद्धात्तपसोऽध्यजायत इत्यादौ मन्त्र। तत्र सर्व प्रथममृतस्यैव वर्णनम्। तत्रावर्ततर्षीणा महती निष्ठा। एव तावदृतस्य महिमा गीत —

ऋतस्य हि शुरुध सन्ति पूर्वीर्ऋतस्य धीतिर्वृजिनानि हन्ति।
ऋतस्य श्लोको बधिरा ततर्द कर्णा बुधान शुचमान आयो॥

वरुण एवास्यर्तस्य पालको रक्षक। अयमेवेन्द्रात्तस्य भिन्नो महिमा।
'वृत्राण्यन्य समिथेषु जिघ्नते व्रतान्यन्यो अभि रक्षते सदा।'

अतएव स प्राणिन सुपथे प्रवर्तयति। प्रार्थयत जन —

'स नो विश्वाहा सुक्रतुरादित्य सुपथा करत्। प्रण आयू षि तारिषद्। मित्रेण सह स्तुति —वरुणस्य बहुधा मित्रेण सह स्तुतिर्वर्ण्यते। द्वावपि सामान्येन ऋतस्य पालकौ सत्यधर्माणौ च।

ऋतस्य गोपावधितिष्ठथो रथ सत्यधर्माणा परमे व्योमनि।
यमत्र मित्रावरुणावथो युव तस्मै वृष्टिर्मधुमत्पिन्वते दिव॥

एतौ वृष्टेरपि कारणभूताविति मन्त्रे प्रतिपादितम्। अन्यत्रापि—

'सम्राजावस्य भुवनस्य राजथ। 'वृष्टि वां राधो अमृत समामहे।' इति स्तुतम्। मित्रोऽपि वरुणवदेवासुर इत्युक्त। यथा—'चित्रेभिरभ्रैरुपतिष्ठथो रव द्या वर्षयथो असुरस्य मायया।

शुनःशेपो वसिष्ठश्चास्य प्रमुखौ स्तोतारौ। तत्र ब्राह्मणेषु वसिष्ठ प्राण इति प्रतिपादितम्। वरुणो द्युस्थानीयो देव आदित्यश्चोक्त। अत प्राण शुनःशेपो वा कर्मबद्धो जीव तापत्रयेण ऋणत्रयेण वा पाशेन बद्ध आत्मनो मुक्तये वरुण प्रार्थयत इत्यपि विद्वद्भिर्वर्ण्यते। यथा—

'उदुत्तम मुमुग्धि नो वि पाश मध्यम चृत। अवाधमानि जीवसे।'

अथर्ववेदे तस्य पृश्निर्गौर्वर्णिता सा सबला च। तस्या वर्णनमृग्वेदेऽपि काम न नामत। यथा—

या गौर्वर्तनि पर्येति निष्कृत पयो दुहाना व्रतनीरवारत।
सा प्रब्रुवाणा वरुणाय दाशुषे देवेभ्यो दाशद्धविषा विवस्वते ॥

(ऋ० १०।६५)

सा गौ प्रकृति खलु। प्रकृतिर्हि लोहितशुक्लकृष्णाऽजारूपेण वर्णिता।

'अजामेका लोहितशुक्लकृष्णा बह्वी प्रजाः सृजमाना समन्तात्।'

(श्वेता० उ० ।४।५)

एषा गौर्ऋताना नेत्री दिव्यकर्मभ्य एव स्व पय प्रयच्छति। अथर्ववेदस्य पञ्चमकाण्डस्यैकादशे सूक्ते ऽथर्वणा सह वरुणस्य सवादे वर्णित यदृतस्य पालक एवैना गा भोक्तुमर्हति य साधिकार प्रतिजानीयात्—

सत्यमह गभीर काव्येन सत्य जातेनास्मि जातवेदा.।
न मे दासो नार्यो महित्वा व्रत मीमाय यदह धरिष्ये ॥

(अथ ५।११)

**स्वरूपम्**—वरुणस्य किं तावत्स्वरूपमित्यत्रापि नैक मतम्। द्युस्थानीयोऽय वरुण सूर्यस्यैकोपाधिभेद उच्यत इत्यपि मतम्, 'उद्यन्सूर्य सविताऽस्त गच्छश्च वरुण इत्युच्यते' इति सायण। आदित्य इत्यपि तस्य सज्ञा। सूर्यस्तस्य नेत्रत्वेनोक्त। तदाऽनी सर्वेषा कर्मसाक्षितया सूर्यस्य प्रतिनिधिरित्युच्यते, पर केचिदेन राज्या देवमपरे तु चन्द्रमस प्रतिनिधिं वर्णयन्ति। मित्रस्य सूर्य प्रतिनिधित्वे पश्चाच्च तत्पर्यायता यातेऽपि न वरुणस्य चन्द्रप्रातिनिध्य सभवतिप्रतिपादित-धर्मवैभिद्यात्।

यास्कस्तु सर्वस्यावरकत्वेन नभ एव वरुण प्रतिपादयति। अत्र वहि साक्ष्यमपि साक्षि भूतम्। जिमरमैन (Zimmermann) सज्ञ पाश्चात्यो विद्वान् वृधातोराच्छादनार्थात् साधयन् तमावरक स्वीकुर्वन् द्यावमेव वरुण प्रतिपादयति। तदा मतेन नक्षत्रमण्डित नील नभ एव वरुण। अस्य बहुधा समुद्रत्वेन वर्णनादपि जलाधिपत्व

सागरनिवासश्च प्रसिद्ध स्यादिति सभाव्यते । गीतायामपि 'वरुणो यादसामहम्' इति भगवतोक्तम् । ग्रीसदेशे च ग्राच्छादकार्थको यूरेनस् शब्द ग्रोरोनेस इति ग्राऽऽवरक (Encompasser) नम एवोच्यते पर द्याव (Zeus) तस्य च नेकत्वम् ।

ग्रवेस्तायामयमेव वरुण 'ग्रहुरमज्दा' इति सज्ञया लभ्यते । ग्रसुरस्यैव विकृत रूपम् 'ग्रहुर' इति । मित्रश्च तत्र 'मिथ्र' इति रूपेण परिचीयते ।

शार्मण्यदेश्य ग्रोल्डनवर्गनामा विद्वास्तु कथयति—ग्रार्यैर्वरुण ग्रादित्यश्च सैमेटिकजातीयेभ्यो बाबलूनदेश्येभ्यो गृहीताविति । पर नार्यास्ताहृशा विचारहीना ग्रभूवन् । तेषा याहृशी तावद्तस्य भावना लभ्यते, तदधिपते र्वरुणस्य स्वरूपमपि भावयितु तेऽकल्पन्त । न तेषु देशेषु ताहृश्युदात्तता वरुणस्य दृश्यते । न साधारण वस्तु ग्रहीतुमार्या परेषामधमर्णता गच्छेयु ।

ग्रोग्यरविन्दस्तु वरुण सत्त्वमय सच्चिदानन्दगतसदशस्य विशुद्धस्य बृहतो लोकस्य प्रतीक निरूपयति । पश्चाद्वर्तिनि साहित्ये नास्य प्रतिष्ठा । तत्रायमष्टसु लोकपालेष्वन्यतम पश्चिमाधिपतिर्जलाधिष्ठाता च ।

# अश्विनौ

द्युस्थानीयेषु, नहि नहि सर्वेष्वपि तावदिन्द्राग्निसोमव्यतिरिक्तेषु देवेषु सूक्ताधिक्येनाश्विनावेव महत्त्वं भजतः । पञ्चाशदधिकेषु सूक्तेषु तयोर्महिमा गीयते । लोकवद् वेदेऽपि तौ देवानां भिषजौ । यथा चोक्तमाथर्वणे—

'प्रत्यौहतामश्विना मृत्युमस्मद् देवानामग्ने भिषजा शचीभिः ।'
(अ० वे० ७।५३।१)

तौ खलु महतां कर्मणामनुष्ठातृतया दस्रौ, एदा युवानौ, मधुमन्तौ चोच्येते । तयो रथोऽपि मधुमान् । उपकर्तृतयाऽतितमां परिचिततरौ जनस्य । तौ नरा, निचेतारा, मयोभुवा, मृड्यत्तमा, अरेपसा, सुदानू, मघवाना इत्यादिभिर्नामभिर्वर्ण्येते । नासत्याविति तयोर्यथार्था संज्ञा न असत्यौ नामस्यौ नासाभवौ वेति तयोः स्वरूपमाध्यात्मिकमिति साध्नोति ।

तौ कर्मणां नेतारौ (नरौ) दर्शनीयाकारौ (दस्रौ) चैतन्याधायकौ (निचेतारा) पापरहितौ (अरेपसा) सर्वस्य सुखाय भवन्तौ (मयोभुवा) । तेषां रथ, अश्वा तन्नोदयित्री कशा च सर्वमपि मधुमत् । 'या वां कशा मधुमती', तौ नियमेन कर्मसूपतिष्ठमानौ तेषां वर्धयितारौ (ऋतावृधौ) । तौ कुशलौ शिल्पिनावपि, अश्वस्य खुरात्कुम्भानां शतं सुरायाः असिञ्चताम् (कारू) । तयोः कर्माणि विचित्राणि प्रशस्यानि च । साहाय्यार्थमाहूतावेव तौ शत्रुपरिवृतस्य विमदस्य भार्यां तद्गृहं प्रापयताम् । तुग्रपुत्रं भुज्युं सागरादरक्षताम् । तेषां नौः शतारित्रवाहिनी जले नभसि चाविहतगमना, रथश्च तयोर्महान् यत्र चक्राणां शतम् । पेदवे राज्ञे च श्वेतमश्वमयच्छताम् । आङ्गिरसं कक्षीवन्तमुर्बुद्धिं व्यधत्ताम् । अग्नितप्ते भ्राष्ट्रे क्षिप्तमत्रिं विमोच्य तस्मै पुष्टिमदन्नं प्रायच्छताम् । गौतमस्य पानाय कूपमेवोर्ध्वमूलमकुरुताम् । च्यवानं ऋषिं च युवानमकल्पयताम् । क्लीबपत्नीर्वध्रिमतीं हिरण्यहस्तेन पुत्रेणायोजयताम् शयोर्वृद्धामपि गां सदुग्धां कृण्वन्तौ । वृकाद् वर्तिकामोक्ष, ऋज्राश्वस्य सचक्षुष्कीकरणं, जाहुषस्य मोक्षश्च तयोः पुरुषार्थस्य निदानम्, संग्रामे विश्पलायाश्छिन्नां जङ्घां लौहमय्या जङ्घया प्रत्यधत्ताम् । दिवोदासस्य यज्ञं गच्छतोस्तयो रथे वृषभः शिंशुमारश्चायुज्येताम् ।

इत्यमनेका पुराणकथास्तयोर्विषये। प्रतियोगितायां सूर्यस्य दुहितर विजितवन्ताविनि चाख्यायते। दधीच शिर स्थानेऽश्वशिर सयोज्य तेन मधुविद्या श्रुत्वा पश्चात् तदीय शिरो योजयामासतुरित्यपि कथा। तत्कौ तावदश्विनावित्यपि विचार्यते।

प्रथम यास्कस्य मतम्—'यद् व्यश्नुवाते सर्वं रसेनान्यो ज्योतिषाऽन्य । अश्वैरश्विनावित्यौर्णवाभ ।' रसेन व्याप्नुतो ज्योतिषाचेति व्युत्पत्त्या प्राकृतशक्तिभेदावेवेति सिद्ध्यति परमौर्णवाभव्युत्पत्त्यातु देवान्तरवत् पुरुषाकारौ । पुनरनया शङ्कया विवशीकृतो यास्को मतभेद प्रदर्शयति । "द्यावापृथिव्यावित्येके, सूर्याचन्द्रमसावित्येके, राजानौ पुण्यकृतावित्यैतिहासिका । तयो काल ऊर्ध्वमर्धरात्रा प्रकाशीभावस्यानुविष्टम्भमनु, तमोभागो हि मध्यम, ज्योतिर्भाग आदित्य ।' इति।

द्युस्थानीयावेतौ देवाविति च निश्चितम्। आधुनिका बुधास्तु तौ प्रातर्वेशीयौ नक्षत्रविशेषावेव निर्णयत । देशान्तरेषु तुल्या पुराणकथाऽप्येतेन मतेन सवदते। जिमरमैन (Zimmer man) महोदय एतौ लातिकदेवस्य (Lettic god) पुत्रौ परिचिनोति। अश्विनाविति शब्देन च केवलमश्ववत्त्व तयोर्बुध्यते। एवमेवप्रसिद्धिस्तस्य देवभेदस्य पुत्रयो, 'दिवो नपाता, इति विशेषण लातिक देवस्य (Lettic) Dewa Deli इत्यस्य तथा लिथुआनियादेशस्य (Lithuanian) Dewo Surelei इति शब्दस्य चानुवाद इव । सूर्या वरण कथा च तत्रत्या Saules Meita सम्बन्धिनी कथा स्मारयति।

पुनश्च ग्रीकदेशस्य पुराण कथाया वर्णितौ द्याव (Zeus) पुत्रौ Dioskouroi यौ लातिन भाषाया (Latin) Caster and Pollux कास्तर एव पौलक्स इति ख्यातौ तयोर्भगिनी (Helena) हेलेना चाश्विनो सूर्यायाच समकक्षता भजन्ते। यतस्तेषा स्वभावोऽपि नासत्ययोरिव वर्णित । लातिकदेवस्य पुत्रौ ग्रीस्यौ Diospouroi अथवा Diosseours सज्ञौ प्रकाशदेवत्वेन वर्णितौ, अश्विनौ यद्यपि सहैवोच्येते, अतो न तौ प्रभातस्य सन्ध्यायाश्च नक्षत्रविशेषाविति पार्थक्येन वक्तु शक्येते। लातिकदेशगीतेषु च सूर्यस्य सान्ध्येयतारात्यागपूर्वक प्रभाततारोद्वाह वर्णन गीयते, येनाश्विनो सूर्यावरणकथा कियदपि साम्य भजति। तेनैतयोर्मारोपीयमालता सिद्ध्यति।

पर नक्षत्र विशेषत्वे तयो कथाना किं समाधानम्? अत्र घाटे महोदयो द्वे समाधाने पुरस्करोति १—निशान्ते सूर्योदयस्य वसन्ते दिनकरस्य चण्डता च रूपकेन वर्णिता। इद मत Dawn and Spring Theory-इत्युच्यते । २—उत्तर ध्रुव प्रदेशे दीर्घाहोरात्रयो पर्यंच रेभात्रिप्रभृतिभिर्नामभिर्वर्ण्यते । जले निलीयमान एव सूर्यो रेभ । पर कालनिर्देशेन नाम्यां सन्तोष ।

आध्यात्मिकदृष्ट्या तु कयाऽप्यर्थैव परिणमति । प्राणश्चापानश्चेति देवावश्विनौ व्यापन शीलौ हि तौ । 'यत्पिण्डे तद् ब्रह्माण्डे' इत्युक्तेर्मूर्धभाग एव द्युस्थानम् । तयोर्नित्यमेव सायुज्यम् । एतच्च निम्नर्चा प्रतिपादित भवति—

संक्रामतं मा जहीतं शरीरं प्राणापानौ ते सयुजाविह स्ताम् ।
शतं जीव शरदो वर्धमानोऽग्निष्टे गोपा अधिपा वसिष्ठः ॥ (अथ ७।५३।२)

प्राणापानौ नासासंचारिणाविति नासत्यौ, तावेव नाडीशुद्धया निर्विकारता शरीरस्य समाचरत, अनेन विनैव कष्टं रोगाणामपाकरण भवतीति प्राणविद्या दैवी चिकित्सापद्धति । तनावस्थिषु नाडीषु च व्याप्त रसरूपं वाजो भवति रेत । तदेव सोम । शरीरस्य प्राणशक्तिश्च वार्धक्ये क्रमात्क्षीयते । च्यवनशीलत्वात्तस्या एव च्यवनत्वम् । प्राणापानयोर्बलेन सा वर्धिष्णु सजायते । इदमेव च्यवनस्य तरुणीकरणम् । रेतसो रक्षावाश्विनो सोमपानम् । इत्थ सूक्ष्मतरोऽयमाध्यात्मिक पन्था अश्विनो स्वरूपनिर्धारणे ।



# पुनर्जन्म-वादः

(लेखक :—श्री अमरनाथशास्त्री, व्याकरणाचार्यः, विश्वेश्वरानन्द-वैदिक-
शोधसंस्थानम् , होश्यारपुरम् )

'कोऽहं कस्त्वं कुत आयातः' इति जातमात्रस्य चिकित्स्या नाम विचिकित्सा, भारतेऽस्तमितप्रायान् लोकायतिकान्, देशविदेशेषु मुहम्मदमतानुयायिन ईसामन्तव्याभिनन्दिनश्चान्तरेणाऽयं जीवनप्रश्नोऽद्यापि मानवमात्रस्य समाधानमपेक्षते। आस्तिकाश्चार्वाकेतरा नास्तिकाश्चजन्मप्रश्नमिममेव समाधित्सवः पुरपायुपसहस्रं क्षपितवन्तः। दर्शनशास्त्राण्यपि तदीयानि नैकधाव्याख्यानैरुपवर्णनैश्च विषयमेतमवदातवन्ति। अध्यात्मजहाना काषायवाससां रथ्यारजस्सु सन्ततमाहिण्डमानाना विमानानां प्रत्यक्षसर्वभक्षाणां भिक्षुकलक्ष्मणां तु जीवनसर्वस्वं नामैष प्रश्नः। इममेव प्रश्नं कर्णशष्कुलीषु प्रसह्य भारतीयानामास्तिकानां श्रावयन्तो मत्सरा इव जीवितव्यमात्सर्यमाचरन्ति ते। दुरूहो दुरवगमश्चायं सर्वस्य प्रश्नचिह्नाकलितो यथार्थः प्रश्नः।

"पुनरुत्पत्तिः प्रेत्यभावः" प्रेत्य मृत्वा भावः पुनर्जन्मैव पुनरुत्पत्तिलक्षणं महर्षिगौतमो व्याचष्ट। जीवमात्रं स्वीयैः सदसत्कर्मविपाकाशयैरुच्चावचेषु शुभाशुभयोनिष्वावर्तत इति तद्रहस्यम्। एष जीवात्माऽजरामरधर्मा परमात्मस्वरूपोऽल्पः सन्नप्यविद्यायामन्तरे वर्तमानः स्वयंधीरः पण्डितम्मन्यमानः स्वीयैरेव प्रमादैः पुनः-पुनर्जायते च म्रियते च, ज्ञातास्वादश्च गरलितेष्वपि विषयफणिषु सुखं रमते न च तेभ्यो जुगुप्सते कदाचिदिति।

भारते चारुवचसा चार्वाकानामेष स्वपोषं पुष्टो विश्वासः—

"यावज्जीवेत् सुखं जीवेद् ऋणं कृत्वा घृतं पिबेत्।
भस्मीभूतस्य देहस्य पुनरागमनं कुतः ॥"

अपि च—*न स्वर्गो नापवर्गो वा नैवात्मा पारलौकिकः।*......
नैव वर्णाश्रमादीनां क्रियाश्च फलदायिकाः॥
अग्निहोत्रं त्रयो वेदास्त्रिदण्डं भस्मगुण्ठनम्।
बुद्धिपौरुषहीनानां जीविका धातुनिर्मिता॥ इत्यादि।

नायमात्मा पारलौकिक, कर्मफलानुशयं परात्परेषु लोकेषु सुखदु खाभिषङ्गा, स्वर्गापवर्गकल्पना बुद्धिपौरुषशून्याना जीविकाहेतु, वर्णाश्रमादिकल्पना बुद्धिजीविना कपोलकल्पितो वागाडम्बर। तस्माद् यथाशक्ति सकलितसुखसभारैश्चिरायुष्मताऽसुमता वसुमता भवितव्यम्, वित्ताऽभावेऽमर्यादितव्ययाद् वित्तक्षये वा ऋण कृत्वाऽपि घृनमवश्यपेयम्। 'आयुर्वै घृतम्' इति दीर्घायुष्यजीवातुभूतस्य घृतस्याधिकाधिकपानमेव परम पुरुषार्थ। अन्यथाऽकालमृत्युना भस्मीभूतस्य शरीरस्य पुनरागमन प्रेत्यभाव सुदुर्लभ इति। यथा किण्वादिद्रव्यं समिश्रितैर्मदिराऽनायास सपद्यते, कर्पूरादिसुगन्धिद्रव्यं समवेतैरमृतधारा निष्पद्यते, एवमेव पृथ्वी जल वायु-र्वह्नि-समाख्यै समवेतैश्चतुर्भिर्भूतैश्चैतन्य स्वयमुपजायते, देहनाशे च चत्वार्यपि भूतानि स्व-स्वभावेषु विलीयन्ते, कारणनाशात् कार्यस्य चैतन्यस्यापि सर्वथा लोप इति।

'अग्निरुष्णो जल शीत शीतस्पर्शस्तथाऽनिल। केनेद चित्रित तस्माद् स्वभावात् तद्व्यवस्थिति॥'' इत्युक्तचराभिर्ग्राम्याभिर्वाचोयुक्तिभिरपि नाद्यापि चार्वाका जातमात्रस्य शिशो स्तन्यपाने स्वत प्रवृत्ति (प्रेत्याहाराभ्यासकृताद् स्तन्याभिलाषाद्' इतिन्यायदर्शनसूत्रमत्र परामृश्यम्) उत्पन्नमात्रस्य वानर-शिशोराधारशाखावलम्ब, सजन्मना सोदर्याणाम् अन्यतरस्य राज्याभिषेक इतरस्य च 'न बन्धुमध्ये धनहीनजीवनम्', अश्वत्थवृक्षस्यापामरेण सपर्या, अर्कवृक्षस्य च पूर्वपत्रेऽपि सशय, एक खलु घोरितकर्मगतिचापल्यै स्वार्जितै प्राज्यै राज्यैश्च सर्वजनाभिनन्दित सहस्राधिकदीनारमूल्य सन्नश्व, अपर सजातीय कुलिशकठोर-कशाप्रहारै प्रतिशिर निगलितशोणितधाराप्रवाहैमृतप्राय कदश्व इति जीव-मात्रस्य जीवने प्रत्यक्षमखिलक्ष्यीक्रियमाणस्योत्तराधर्यस्य सन्तोषावहमुत्तर पुरस्कर्तु न क्षमन्ते। 'समानमीहमानाना केचिदर्थैर्युज्यन्तेऽपरे न' इति व्याकरणमहाभाष्य-प्रणेतुर्वचो नाऽवितथम्। इति प्रत्यक्षाभिलापास्त प्रत्यक्ष मक्षिका प्रसन्तोऽपि निपधन्त इव सतामभीमास्या खलु। अन्ये विधर्माण ईसानुयाया मोहम्मदाराधकाश्च मरणादूर्ध्वं त्रिमेखलेषु, सति वैभवे पक्वेष्टकचितेषु, अन्यथा मृच्चयेषु नामप्रामुरकोर्ण-शीर्षण्येषु स्थण्डिलेषु कब्राभिधेषु स्वप्रमाणगर्तेषु निखाता आकयामताद् (महा-प्रलयात्) खुदाबन्दकरीमस्य (स्वयभुव परमात्मन) स्वस्वकर्मानुसारिण बहिश्त (स्वर्गम्) दोजख (नरकम्) वा निश्चेतव्य दायाना प्रतीक्षन्ते। तत ऊर्ध्वमेव तद्गति। स्वर्ग-नरकौ तेपामपि समतौ। अनुक्षण व्यवहारे विस्मत मुकद्दरामिध दैवमभिक्रोशता पुनर्जन्मापि विश्वासभूमिरिति निश्चप्रचम्। दुश्चरितप्रायश्चित्तस्वरूप 'तोबा'-कार मुल्ला मिस्रनरीमाध्यमेन कुर्वन्तोऽपि सुखदु खाकार सुकृतदुष्कृतकर्मविपाक-फलीभूत प्रतिक्षणमूरीकुर्वाणा अपि ते यदन्धश्रद्धाभिभूता पुनर्जन्मसिद्धान्ताद् जुगुप्सन्ते तद्वचनीया नाम खलु ते, नहि तत्र सचेतसा किमपि चिन्तनीय, सन्देह-

दोलान्दोलितचेतसा विचेतसामाग्रहग्रहिलाना विश्वासशैथिल्याय नहि भूमण्डले प्रभावुकमौषधम् । तस्मात्स्वान्त सुखाय पुनर्जन्मप्रत्ययात्तचेतसा सचेतसा सिद्धान्त एष मुनिपुण परीक्ष्य । बृहदारण्यकोपनिषदि वाजसनेयिन आमनन्ति—'त विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा च (बृ उ ४ ४ २) इति । इदमेव तथ्य सरलया भाषयाऽऽचार्यो विष्णुमित्र पञ्चतन्त्रे प्राबध्नात् 'आयु कर्म च वित्त च विद्या निधनमेव च । पञ्चैतानि च सृज्यन्ते गर्भस्थस्यैव देहिन ।' इति

पातञ्जल योगदर्शनमपि नूनमनुभूतस्वरसमिव प्रकृत सिद्धान्त 'सति मूले तद्विपाको जात्यायुर्भोगा,' 'क्लेशमूल कर्माशयो दृष्टादृष्टजन्मवेदनीय, इत्येवकार सूत्रैरनवद्यैर्ग्रथ्नाति । यथा मूलस्यैव शाखापत्रादीनि भवन्ति, न निर्मूलस्यैव जातौ केचन ब्राह्मणीगर्भजजनिमासादयन्त इतरेषा श्रद्धाभाजनानि भवन्त्यपरे न, आयुषि केचिच्चिरायुष इतरे स्वल्पायुष, भोगेषु सुखदु खात्मकेषु च प्रत्यक्षीक्रियमाणमौत्तराधर्यं, जन्मान्तरार्जितदैवानुविद्ध एव विपाक कर्मविपाक कर्मफलमिति तदाशय ।

प्रेत्यभाव पुनर्जन्म मरणसमनन्तरमेव तत्क्षण जीव प्रतिपद्यते, आहोस्वित् कालक्रमादित्यत्र विदुषा भूयो विमर्श । अत्र ब्रूम —यथा भुक्तपरिणामोऽन्नरसस्त्रेधा शरीरे विपरिणमत, १—अतिसूक्ष्मोऽशो मन, २—सूक्ष्मोऽशो मासम्, ३—स्थूलश्चाश पुरीषभावेन नि सरति । अत एव 'यादृश भक्षयेदन्न तादृशी जायते मति' इति चरितार्थं वच । यथा पीतस्य जलस्य स्थूलोऽशो मूत्रम्, सूक्ष्म शोणितम्, अतिसूक्ष्मश्च प्राणरूप सद् विपरिणमत, घृतादि क्रमशोऽस्थि, मज्जा, वाक् च सम्पद्यते । उक्त च—'अन्नमशित त्रेधा विधीयते, तस्य य स्थविष्ठो धातुस्तत्पुरीष भवति, यो मध्यमस्तन्मास योऽणिष्ठस्तन्मन । आप पीतास्त्रेधा विधीयन्ते, तासा य स्थविष्ठो धातुस्तन्मूत्र भवति, यो मध्यमस्तल्लोहित, योऽणिष्ठ स प्राण । तेजोऽशित त्रिधा विधीयते, तस्य य स्थविष्ठो धातुस्तदस्थि भवति, यो मध्यम स मज्जा, योऽणिष्ठ सा वाक् ।"

(छा० उ० ६-५-१-३)

तथैव कृतस्य कर्मण सुचरितस्य दुष्कृतस्य वा त्रिधा परिणाम । अत्युग्रस्य विहितस्य सुकृतस्येहैव जन्मनि जानपदीषु ख्यातिरूप पदवृद्धिराजसम्मानलक्षण, सूक्ष्मस्य च चन्द्रतारकादिलोकावाप्तिलक्षण स्वर्गरूप, अतिसूक्ष्मस्य च सुखपरिणामिजात्यायुर्भोगलक्षण पुनर्जन्मेति । 'प्राप्य पुण्यकृताँल्लोकानुषित्वा शाश्वती समा । शुचीना श्रीमता गेहे योगभ्रष्टोऽभिजायते,' इति भगवद्वचनमत्रोपोद्बलकम् । एवमेवात्युग्रस्य पापकर्मण स्थूलो भोग इहैव जन्मनि राजदण्डादिलक्षणो मनुष्यमात्रस्य च धिक्कारस्वरूपोऽभिशाप, तज्जनितदैहिकमानसवेदनातिविक्षिप्तस्य 'यज्जीवति

तन्मरणं यन्मरणं सोऽस्य विश्राम'। इति चातिमरणं, सूक्ष्मो भोगो रौरवादिनरकलक्षण, अतिसूक्ष्मश्च दुर्दशापन्नजात्यायुर्भोगलक्षण। अथर्ववेद इदमेव तत्त्वमाह वेदपुरुष—'प्रथमेन प्रमारेण त्रेधा विष्वङ् विगच्छति। अद एकेन गच्छत्यद एकेन गच्छतीहैकेन निषेवते' इति, पुण्यकर्मणाऽद स्वर्गलोक, पापेन कर्मणाऽदो विप्रकृष्ट नरकलोकं, पापपुण्येन मिश्रितेन कर्मणा चेहैव लोक निषेवत इति तत्र सायणभाष्यम्।

अत एव विष्णुमित्रस्य 'त्रिभिर्वर्षैस्त्रिभिर्मासैस्त्रिभि पक्षैस्त्रिभिर्दिनै। अत्युत्कटै पापपुण्यैरिहैव फलमश्नुते'इति चरितार्था भवति साध्वी वाचोयुक्ति। "तद्य इह रमणीयचरणा अभ्याशो ह यत्ते रमणीया योनिमापद्येरन् ब्राह्मणयोनि वा क्षत्रिययोनि वा वैश्ययोनि वा। अथ य इह कपूयचरणा अभ्याशो ह यत्त कपूया योनिमापद्येरन् श्वयोनिं वा सूकरयोनिं वा चाण्डालयोनिं वा।" इति छान्दोग्योपनिषद् (५, १०, ७) अस्मत्प्रतिपाद्यमेवार्थं विशकलयति।

'वासांसि जीर्णानि यथा विहाय नवानि गृह्णाति नरोऽपराणि।
तथा शरीराणि विहाय जीर्णान्यन्यानि संयाति नवानि देही॥'

इति भगवतोऽवदात वचोऽपि केचिदन्यथा पश्यन्ति। जीर्णवाससामिव पूर्वदेहस्य परिहाण, नवीनवाससामिव च तत्क्षणाज्जन्मान्तरस्य परिग्रह इति गीताभिसन्धिरिति तदाशय। पर 'जीवितस्य कवेराशयो न वर्णनीय' इति विदुषा समय। यदि स्वीय काव्य व्याख्यातु कवि स्वयप्रभु, तर्हि तदनुवादार्थमयो वक्ता नापेक्ष्यो भवति, द्वितीयेऽध्याये गीतायामुक्तमेवेममभिप्राय पोपयन् षष्ठेऽध्याये 'प्राप्य पुण्यकृतांल्लोकानुषित्वा शाश्वती समा।' इत्यनवद्य पद्य स्वत उपोद्बलक देहत्यागानन्तर तत्क्षणादेव श्रीमता गेहे पुण्यकृतामपि जन्म न भवति प्रत्युत पुण्यलोकेषु शाश्वती समा उषित्वैव पुनर्जन्मेति तथ्यस्य। नवमेऽध्याये च 'ते त भुक्त्वा स्वर्गलोक विशाल क्षीणे पुण्ये मर्त्यलोक विशन्ति' इतीद वचनमुक्तस्यैवाभिसन्धेर्दार्ढ्यार्थं द्विर्बद्धं सुबद्धमिव सपादयति। अतो जीर्णवस्त्राणा परित्यागेऽभिनववाससा च परिधाने नैरन्तर्य न भगवत समीहित, मध्ये यथापेक्ष भोगान् भुक्त्वैव तु पुनर्जन्मेत्यय सृष्टे सामान्यो नियम। अघटितघटनाघटनपटीयस्या प्रकृतेरतर्कितोपनताना विलसिताना न ब्रूम। तत्र सर्वं सभाव्यते नैरन्तर्येणापि साक्षात् पुनर्जन्म प्रतिपत्तुमर्हम्। पर सोऽपवादो न विधि।

वस्तुतो जलौकान्यायेन जीवस्य क्रमशो जन्मान्तरसक्रम। तद् यथा 'तृणजलायुका तृणस्यान्त गत्वाऽन्यमाक्रममाक्रम्यात्मानमुपसहरति' (बृ उ. ४, ४, ३) तथैव जीव अभिकमेव पुनर्जन्माऽऽदत्ते, पुनर्जन्म च कर्मायत्तम्। कर्मापि प्राधान्येन त्रिविधम्। सचित, प्रारब्ध क्रियमाण चेति। अहरहर्जीवो यानि कर्माणि करोति

तानि क्रियमाणानि, तेष्वत्युत्कटेषु सद्य इहैव सुखदु खादिलाभ, अन्यथा दैवनिष्पत्ति'। 'पूर्वजन्मकृत कर्म तद् दैवमिति कथ्यते।' आरब्धै: कर्मभिरेव मानवादिशरीरलाभ। सचितान्येव कर्माणि भोक्तु प्रारब्धानि कर्माणीति विविच्यन्ते। एकेनैव जन्मना कर्मणा समेषा नोपभोग इति परिशिष्टानि सचितानि भवन्ति जीवम् आ महाप्रलयात् तदूर्ध्वमपि चानन्तपार योनिसहस्रेषु सततमावर्तयन्ति। अस्य जन्ममरणावर्तस्याऽविद्याजनितस्य यथार्थमौषधं प्रत्यगात्मस विद विदन्ति तद्विद। विद्ययाऽविद्याया भिद्यमानाया शनै शनै सचितकर्मक्षयाज्जीवन्मुक्त सपद्यते जीव, 'ज्ञानाग्निदग्धकर्माण तमाहु पण्डित बुधा।' भूयो न स आवर्तते न स आवर्तते। यद् गत्वा न निवर्तन्ते तद्धाम परममेष्यता जीवन्मुक्तानां, पुनर्जन्मचक्रावर्तिना च भिन्ने द्वे सरणी। "द्वे सृती अशृणव पितृणामह देवानामुत मर्त्यानाम्" (यजु १९, ४७) "शुक्लकृष्णे गती ह्येते जगत शाश्वते मते। एकया यात्यनावृत्तिमन्ययाऽऽवर्तते पुन।" इति गीतावचनेन शुक्लकृष्णतया तयो स्वरूपमपि प्रतिपादितम्। ज्योतिर्वर्त्मना प्रयियासता शुक्ला सृति, धूमवर्त्मना यियासता च कृष्णा सरणि। जीवन्मुक्ता हि क्षीणजरामरणकल्मषा अन्तर्बहिर्ज्योतिर्मया, 'अग्निर्ज्योतिरह शुक्ल षण्मासा उत्तरायणम्' इत्यमुना वर्त्मना ब्रह्मणि लीयन्ते न च पुनरावर्तन्ते। 'पृथिव्या अन्तरिक्षम्, अन्तरिक्षाद् दिवम्, दिवो नाकस्य पृष्ठात् स्वर्ज्योतिरगामहम्' (यजु १७, ६७ द्रष्टव्यम्) इत्येष पन्था विततो देवयान। अन्ये च य इमे इष्टापूर्ते दान चोपासते ते धूमाद् रात्रि कृष्णपक्ष षण्मासान् दक्षिणायन पितृलोकमाकाशमिति वर्त्मना चान्द्रमस लोकमभि प्रपद्यन्ते, तत्र सुकृतानि भुक्त्वा, आकाशाद् वायु धूममभ्र व्रीहियवादिक क्रमश प्रतिपन्ना रेतो भूत्वा गर्भं प्रतिपद्यन्ते (छां उ ५, १०, ३-६ द्रष्टव्या)। इतीमे द्वे एव सृती पितृणा देवानामपि च मर्त्यानाम्। अथ पुनर्जन्मसिद्धान्तो भारतीयानां साक्षात्कृतधर्ममर्मणा महर्षीणा स्वार्जितान्तरज्ञानोपशात। भारतीयसस्कृतिसौरभस्रोतसैवाय विश्वजनीन सपन्न इति वस्तुतत्त्वम्।

अद्य पाश्चात्यदेशेष्वपि मेस्मरेज्मवर्त्मना प्रेतैर्बान्धवै सह सम्पर्क स्थापयन्त स्वर्गनरकादिवास च पुनर्जन्म च तेषा जिज्ञासन्तेऽध्यात्मप्रवणा जना। उप्त बीजमङ्कुरित यथा पुनर्नवता विधत्ते, तथा कृतानि कर्माणि जन्मान्तराङ्कुरितानि नवनवपुनर्जन्मसमुन्मेष नून कुर्वन्ति। भुक्त्वैव च क्षीयन्ते नाऽभुक्तानि। 'नाभुक्त क्षीयते कर्म कल्पकोटिशतैरपि' इति ध्रुवम्।

तस्मात्पुनर्जन्मचक्रावर्ताद् अत्यन्तमोक्षायाऽऽचार्यस्यैष उपदेश सतत परिशीलनीय —'यान्यस्माक सुचरितानि तानि त्वयोपास्यानि नो इतराणि' इति। 'अनेकजन्मससिद्धस्ततो याति परा गतिम्' इति गीतावचनामृत चानुपथम्।

---

# कालचक्रम् संस्कृतसाहित्ये तत्स्वरूपं च

कालस्यानन्तो महिमा जेगीयते जगति विश्वस्य स्थितिरपि यमाश्रिता। अनेन कालेनैव संसारोऽयं संसारः। प्राणिनां जीवनचक्रस्य गतिरेनमाश्रयति। पलमुहूर्तघटीहोरादिभिरनन्तपरिमाणात्मकोऽयं नियन्ता जगद्-व्यापारस्य। अयमेव कलयति श्वासप्रश्वासान् जन्म-मृत्यु-मध्ये पातिनो येनासुमतां स्थितिः परिच्छिद्यते। ब्रह्मणः कीटावधि सकला अपि दिव्या अदिव्याः मर्त्या अमर्त्याः, चेतना अचेतनाः, अणवः स्थूलाः, लघवो महान्तः, किं बहुना यदपि दृश्यमदृश्यं वा किमपि चराचरात्मकं भूतजातं जगति निभाल्यते, अनुमीयते, उपमानादिना प्रमीयते, शब्दप्रमाणेनापि वाऽधिगम्यते, निखिलमपि तत् कालवशगम्। तस्य महिमानं युधिष्ठिर एवमुद्घोषयति—

> अस्मिन् महामोहमये कटाहे, सूर्याग्निना रात्रिदिवेन्धनेन।
> मासर्तुदर्वीपरिघट्टनेन भूतानि कालः पचतीति वार्ता॥
>
> (महा० वनपर्व)

कालः कस्मात्? कलयति कालयति वा सर्वेषामपि जीवानां क्षणादिकं सृष्टिव्यापारं चेति व्युत्पत्तेः कल गतिसंख्यानयोरिति धातोः। गीतायां चायमेवार्थः—'कालः कलयतामहम्।' (गी० १०।३०) इति-वादिना कृष्णेन पिशुनितः।

सृष्टेरारम्भ एव वेदेष्वस्योत्पत्तिः संवत्सरात्मकतया सूचितैव—

"ऋतञ्च सत्यञ्चाभीद्धात्तपसोऽध्यजायत, ततो रात्र्यजायत ततः समुद्रो अर्णवः। समुद्रादर्णवादधि संवत्सरो अजायत। अहोरात्राणि विदधद् विश्वस्य मिषतो वशी। सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्। दिवं च पृथिवीं चान्तरिक्षमथो स्वः।"

अत्र पूर्व संवत्सरस्य, ततः परं तद्विभागहेतोरहोरात्रस्य, ततश्च तयोः कारण-भूतयोः सूर्याचन्द्रमसोः सृष्टिर्वर्णिता। कालापरनामा संवत्सरोऽयमादौ ऋतुत्रय एव विभक्तोऽभूदिति मन्त्रोऽयं साक्षी—

वसन्तोऽस्यासीदाज्यं, ग्रीष्म इध्म, शरद्धविः। (ऋ० ।१०।९०)

पश्चाच्चायं पञ्चर्तुः षड्तुरिति च प्रख्यातः।

कालोऽयं वेदादिषु चक्ररूपेण वर्णितः, तस्यालंघ्यश्च महिमा धर्मतया। चक्राकारस्य तस्यैव एवाराण्युच्यन्ते। प्रतीकरूपेण च बहुधा वर्णनं विधीयते। यथा—

सप्त युञ्जन्ति रथमेकचक्रमेको अश्वो वहति सप्तनामा।
त्रिणाभि चक्रमजरमनर्वं यत्रेमा विश्वा भुवनाधितस्थुः ॥ (अस्य वा. सूक्तम्)

अन्यत्र दुरत्ययता तस्य चोदिता—

पंचारे चक्रे परिवर्तमाने तस्मिन्नातस्थुर्भुवनानि विश्वा।
तस्य नाक्षस्तप्यते भूरिभारः सनादेव न शीर्यते सनाभिः ॥ (अ. वा.)

आथर्वणे कालः खलु प्राणिनामाशाप्रदतयाऽऽनन्दहेतुः।

कालेन सर्वा नन्दन्त्यागतेन इमाः प्रजाः।
जीवनाशा धनाशा च जीर्यतोऽपि न जीर्यति ॥ (अथर्व० १५।१५।७)

श्वेताश्वतर उपनिषदि कालो जीवात्मनो वशे निगदितः। एतच्च परमस्य पुरुषस्य सर्वोपरितया जीवात्मनश्च तदभिन्नतया संगच्छते—

कालः स्वभावो नियतिर्यदृच्छा भूतानि योनिः पुरुष इति चिन्त्या।
संयोग एषां न त्वात्मभावादात्माप्यनीशः सुखदुःखहेतोः॥ (श्वे० १।१।२)

रामायणे तु स स्वतन्त्र एव वर्णितः सर्वोपरिशक्तिमत्तया।

न कर्ता कस्यचित्कश्चिन्नियोगे नापि चेश्वरः।
स्वभावे वर्तते कालः, कस्य कालः परायणः ॥

परं भारतीयपरम्परा कालं दुरत्ययमनीश्वरमपि योगिना वशवर्तिनं स्वीकरोत्येव। महाभारतेऽपि तस्य स्वरूपं प्रतीकात्मकतया वर्णितम्—

एकां नाभिं सप्तशता अराः श्रिताः प्रधिष्वन्या विंशतिरर्पिता अराः।
अनेमि चक्रं परिवर्ततेऽजरं मायाऽश्विनो समनक्ति चर्षणी ॥
एकं चक्रं वर्तते द्वादशारं षण्णाभिमेकाक्षममृतस्य धारणम्।
यस्मिन् देवा अधि विश्वे विषक्तास्तावश्विनो मुञ्चतं मा विषीदतम् ॥
(म० भा० आ० प० ३ अध्याय)

अन्यत्र च सर्वव्यापाराणां नियन्ता कालस्तस्य च कर्म नियामकमित्युक्तम्। उभयोश्च परस्परं सम्बन्धः प्रतिपादितः। सर्वकर्मणां कर्ता काल इति गीतायां प्रत्यक्षम्—

कालोऽस्मि लोकक्षयकृत्प्रवृद्धो लोकान् समाहर्तुमिह प्रवृत्तः।
ऋतेऽपि त्वां न भविष्यन्ति सर्वे येऽवस्थिताः प्रत्यनीकेषु योधाः।
(गी० ११।३२)

'निमित्तमात्रं भव सव्यसाचिन्।' (गी० ११।३३)

इति च।

नात्र विषये दर्शनैरास्तिकैर्नास्तिकैर्वा मौनमाकलितम्। वैशेषिके कालस्याकाशेन सह नव द्रव्येषु गणना क्रियते। 'तत्र द्रव्याणि पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनांसि नवैव।' अपरत्र तस्य चिह्नानि लोकप्रमाणैरुदितानि—

अपरस्मिन्नपरं युगपच्चिरं क्षिप्रमिति काललिङ्गानि। (वै० सू० २।२।६)

न्यायदर्शनं न वैशेषिकाद् विभिद्यते। न्यायवार्तिकतात्पर्यटीकायां कालोऽस्ति न वेति विचारे कालमस्वीकुर्वतां मतं खण्डितं यथा—

'सूर्योदयास्तमयक्रियाप्रचयाल्पत्वबहुत्वविशिष्टात् पिंडादेव परापरत्वे भविष्यतः कृतमत्र द्रव्यान्तरेण कालेनेति चेत् न, सवितुः समवेतायाः क्रियायाः पिंडेनासम्बन्धात्।'

पुरुषायुषः समयनिर्धारणं यद्यपि सूर्यस्य गत्या भवति परं न सा मानवपिण्डेन सह सम्बध्यत इति तन्नियामकेनापरेण द्रव्येण केनचिद् भवितव्यं तच्च कालः। एतेन च व्याकरणदर्शने कालस्य पूर्वापरव्यवहारहेतुत्वं स्वीकृतम्। यथा—

चिरक्षिप्र-व्यवहार-हेतुत्वम् कालत्वम् (वै० सि० म० पृ० ८४० )

न्यायमुक्तावलीटीकायां दिनकर्यां च कालस्य लक्षणमेवं कृतम्—

'कालिकसम्बन्धावच्छिन्नकार्यत्वावच्छिन्नकार्यतानिरूपितमधिकरणतया निमित्तत्वं काललक्षणम्।' अन्यच्च—

'जन्यानां जनकः कालो जगतामाश्रयो मतः; परापरत्वधीहेतुः क्षणादिः स्यादुपाधितः॥' इति जगदाधारत्वं तस्य प्रतिपादितम्।

वैशेषिके कालस्याखण्डत्वमुक्तम्। परं नागेशेनाक्षिप्यते यत् कालस्याखण्डत्वे तस्य क्षणमुहूर्तपलादिविभागो न संगच्छते। क्षणादेश्च परिमाणं खण्डपदार्थेनैव संभवति। खण्डकालस्यैवेदानीं परत्वादिका उपाधयः।

दीधितिकारस्तु दिक्कालौ नेश्वरादतिरिक्तौ मन्यते। ईश्वरस्यैव सर्वहेतुतया तदाकारोपाधिभेदमात्रत्वात्। क्षणानामेव चातिरिक्तत्वस्वीकारेण जगद्-व्यवहारसिद्धेः। परं व्यवहारजगति कालस्यास्वीकारे लोकव्यापाराणामसंगतिः पौर्वापर्यज्ञानस्य प्रत्यक्षत्वात्। आधुनिके विज्ञानेऽपि प्रतिपदार्थं कालाख्यमपि परिमाणं स्वीक्रियत एव।

साङ्ख्ये तु दिक्कालावाकाशादिप्रभृतौ प्रकृतिगुणत्वेन नातिरिक्तौ स्वीकृतौ।

दिक्कालावाकाशादिभ्यः। (सा० सू० २।१२)

अस्मिन्मते हि नित्यः खण्डश्चेति द्वयोः कालभेदयोः प्रथमः प्रकृतिगुणविशेषः, अपरश्चाकाशादेरिति तत्रैवान्तर्भवति। परं पौर्वापर्यादिव्यवहारहेतुभूतस्य कालस्य प्रकृतिगुणत्वं न सगच्छते।

योगदर्शने क्षण एव कालत्वेनाभ्युपगतः। स च खण्डकाल एव उत्तरक्षणस्य पूर्वक्षणविनाशानन्तरभावित्वात्। परं पूर्वापरभावशृङ्खलाया अभिन्नः स्वीकार्यतया नित्यकालः सिध्यत्येव।

मीमांसकास्तु कालं वैशेषिकवन्नित्यं विभुं विभक्तवत्प्रतीयमानं च स्वीकुर्वन्ति। सर्वत्र ज्ञाने च कालस्य सत्तामूरीकुर्वन्ति। यथा—

'न सोऽस्ति प्रत्ययो लोके यस्मिन्कालो न भासते।'

वेदान्ते दर्शनेऽपि कालः स्वीकृतः किन्तु केवले व्यवहारजगति यदा जीवोऽविद्यया ग्रस्तः पूर्वापरभावमनुभवति पदार्थानाम्। परं स न वैशेषिकवन्नित्योऽविद्यामात्रानुभूतत्वात्।

शैवागमेषु मायाकृते तत्त्वपञ्चके कालः आद्यः। बौद्धास्तु क्षणवादिनः कालस्यातिरिक्तपदार्थतां नाङ्गीकुर्वन्ति। अक्षरहितत्वस्वीकारे हि कालस्य पूर्वपश्चाद्भावो नोपपद्यते। तदर्थं सावयवत्वं तस्याभ्युपेयमेव। तथास्वीकृतौ च कालोऽखण्डो नित्य इति मतं निरस्तम्। पूर्वापरभावस्य पदार्थकृतत्वस्वीकारे च कालस्यैव स्वीकृतिर्निष्फलेति तेषां निष्कर्षः।

जैनदर्शने च कालसम्बन्धे मतद्वयम्। आद्यं नातिदूरे वैशेषिकात्। तथापि कालस्य द्रव्यत्वं, सृष्टिव्यापारनियामकत्वं च स्वीकृतम् परं लक्षणे वर्तना, परिणामः, क्रिया, पूर्वापरत्वादयस्तस्येति चतुष्टये वर्तना नियामकत्वं चेति तद्धीता धारणा।

अपरस्मिन् मते च कालस्य क्रमभाविततया पार्थक्यं स्वीक्रियते। यथा—प्रतिक्षणं क्षणपर्यायः कालो भिन्नः। कालस्याखण्डत्वे हि सर्वासामपि घटनानामेकदैव योगः स्यात्। चिरक्षिप्रभावश्च प्रतिदिनं बुध्यते। उपाधिकृतत्वे च भेदस्य कार्यस्यैव भेदः समापतति। तेन च कालस्य भेदोऽपि सिध्यतीति स स्वीकार्य एव।

—०—

# निर्दुष्टं काव्य-लक्षणम्

साहित्यक्षीरसागरमथनोपजातस्य विगलितवेद्यान्तरपरनिर्वृतिसाधनभूतस्य काव्यामृतस्य स्वरूपं निरूपयितुकामैर्विचारितविचार्यैराचार्यैर्बहुधा प्रस्तुतानि स्वदर्शनानि। तेषु केचित् काव्यं शब्दगतमपरे तन्मुख्यार्थगतमितरे चोभयगतं मन्यन्त इति विविधस्तदीयोपन्यासः। तथापि निबन्धेऽत्र परम्परागतानि लक्षणानि क्रमशो निरूप्यन्ते।

भामह-कृतं लक्षणम्—काव्यस्य लक्षणकर्त्ता भामह एव प्रथम आचार्यो यः खलु मेधाविरुद्रप्रभृतीन्स्वपूर्ववर्तिनो विवेचकानुल्लिखति न तु दण्डिप्रमुखानिति प्राग्वर्त्येव स तेषाम्, यद्यपि पाश्चात्या भामहं दण्डिन उत्तरकालिकमेव स्वीकुर्वते। षष्ठशताब्द्या ख्रीष्टोदयाज्जातोऽयं काव्यलक्षणं निरूपितवान्—

'शब्दार्थौ सहितौ काव्यम्' (का. अ. १।१६)

अत्र शब्दार्थयोः साहित्यमेव काव्यत्वेन स्वीकृतम्। तेन न केवलं शब्द चमत्कारोऽर्थचमत्कारो वा काव्यशब्दवाच्योऽपितु द्वावेव मिलिताविति प्राचाम्—

'वागर्थाविव संपृक्तौ' इति मतमेवानुरुध्यते। परं केवलौ शब्दार्थौ निर्विशेषौ काव्यतां नार्हत इति शब्दस्यार्थापेक्षयाश्रयत्वेन मुख्यतया विवक्षितत्वेन ततोऽर्वाचीनो दण्डी (७ मशताब्दीभवः) स्वकाव्यादर्शेऽप्ययमेव निरूपितवान्—'शरीरं तावदिष्टार्थ-व्यवच्छिन्ना पदावली।' (का. द. १।१०)

अत्र लक्षणेऽर्थस्य विशेषणमात्रत्वेन विवक्षितत्वमिति शब्दस्यैव काव्य-पद-वाच्यत्वम्। इष्टशब्देन च चमत्कारजनकत्वमेव प्रतिपिपादयिषितम्। अनेन चमत्कारजनकार्थबोधकस्य पदसमूहस्य काव्यशरीरत्वं सिद्धम्। परं क्वचिच्छब्द-स्यात्र चार्थस्यैव विच्छित्तिमूलतया विनिगमनाविरहात्तत्र तावच्छब्दमात्रस्य काव्यत्वं स्वीक्रियतेनेति विप्रतिपत्तेः स्वकाव्यालंकारे रुद्रटाचार्येण 'ननु शब्दार्थौ काव्यम्' इति लक्षयता पुनः शब्दार्थयोः सामान्येन काव्यरूपमुररीकृतम्।

कवेः कर्म काव्यमिति मतानुसारेण कविवर्णितपदार्थानामपि तदुपज्ञत्वात् । महाभारते निर्दिष्टचराऽपि शकुन्तला कालिदासकल्पनया तस्य मानस्येव सृष्टिरिति तत्कृत्यर्थगता च सेति काव्यविषयतया स्वीकर्तुं ता को विप्रतिपद्येत । एतावता कालेन च काव्ये रसाना महत्त्व स्वीकृतमासीत् । रुद्रटेनापि—'तस्मात्तत् कर्तव्यं यत्नेन महीयसा रसैर्युक्तम्' इत्युक्तम् । पर काव्यतत्त्वाना गुणालकारादीनाम-निर्देशान्निर्विशेष न सामान्यमिति सिद्धान्तानुरोधात् स्वारस्याभावात्तत्र वामनेन कृत लक्षणमुपदिश्यते—'काव्यशब्दोऽय गुणालकारसस्कृतयो शब्दार्थयोर्वर्तते, भक्त्या तु शब्दार्थमात्रवचनो गृह्यते ।'

अत्र शब्दार्थयोर्गुणालंकारविशिष्टयोरेव काव्यत्वमुक्तम् । आनन्दवर्धनस्तु शब्दार्थशरीर काव्य मन्वानस्तस्य जीवातुभूत रसमेव प्रतिपादयति । अस्य सिद्धान्ता-नुयायिन एवोत्तरकालिका मम्मटादय आचार्या । नवमशताब्दी चास्याविर्भावकाल ।

तदुत्तर सरस्वतीकण्ठाभरणकारो भोज काव्ये रीतिगुणालकारादीना समन्वय कुर्वन्—

> 'अदोष गुणवत्काव्यमलकारैरलकृतम् ।
> रसान्वित कवि कुर्वन्कीर्ति प्रीतिञ्च विन्दति ॥

इति लक्षितवान् । अत्र साहित्य दर्पणकारो बहून्दोषानुट्टङ्कितवानिति तत्प्रसग एव तान्निरूपयिष्याम । अत्र सर्वाण्यप्यगानि काव्यलक्षणे समाविष्टानि । पर शब्दस्या-र्थस्य वा काव्यत्वमभिमतमिति विचिकित्साया विनिगमनाविरहादनिश्चये रसस्य गुणाना चार्थेनैव सम्बन्धाद् दोषाणामलकाराणा चोभयनिष्ठतया शब्दार्थयोरेव काव्यत्व तस्याभिमत प्रतीयते । पर भोजस्य ग्रन्थो दण्डिमतमनुसरतीति कृत्वा तस्यापि शब्दमात्रे काव्यत्वमभिप्रेत स्यादिति न निश्चेतु शक्यते । तस्मिन्नेव काले च वक्रोक्तिजीवितकार कुन्तकोऽपि—

> शब्दार्थौ सहितौ वक्रकविव्यापारशालिनि ।
> बन्धे व्यवस्थितौ काव्य तद्विदाह्लादकारिणि ॥ (व० जी०)

इति लक्षणेन शब्दार्थयोरेव काव्यत्वमूरीकृतवान् । आनन्ददायी काव्य-बन्धश्च चमत्कारवान् स च रसगुणालकारादिभि सम्पद्यते । यद्यपि न रसगुणादयो लक्षणघटका पर वक्रकविव्यापारशालिनीत्युक्त्यैव तत्समापतति । एवमपि वक्रकविव्यापारेण कि विवक्षित लक्षयितु ? सर्वोऽप्यलकारमार्ग, विशेषेण लक्षणाश्रित वक्रो कविव्यापारेऽन्तर्भवति । रसस्यापि ध्वन्यमानतया तत्र प्रवेश सम्भवति । पर केवले प्रहेलिकादावपि वक्रप्रकारस्य सत्त्वे केवलं तस्यापि ग्रहण स्याद्, लक्ष्यानुसारेण च लक्षणानि कल्प्यन्ते । न चैतावता सर्वस्यापि लक्ष्यस्य स्पष्टतया

बोधः संभवति तथा तु 'शब्दार्थौ सहितौ काव्यम्' इति पूर्वोक्तमेव पर्याप्तं स्यात्। विवक्षितस्य वैशिष्ट्यस्यैतावताऽपि बोधाभावात्। यच्चाग्निपुराणे काव्यस्वरूपं लक्षितम्—

'संक्षेपाद् वाक्यमिष्टार्थव्यवच्छिन्ना पदावली। काव्यम्...'

इति। अत्रापि चमत्कृति-जनकता-समर्थार्थविशिष्टपदसमूहस्यैव काव्यत्वं वर्णितं यन्न दण्डिनो वक्ष्यमाणाच्च रसगङ्गाधरकृल्लक्षणादतीव भिन्नम्। अत्रापि पूर्वोट्टङ्किता शब्दकाव्यत्ववादिना लक्षणे प्रस्तुतापत्ति यथापूर्वं स्थितैव।

ततश्च काव्यप्रकाशकृतो मम्मटस्य विस्तृतं लक्षणं विचारणीयं भवति—

'तददोषौ शब्दार्थौ सगुणावनलङ्कृती पुनः क्वापि'।

अत्र गोविन्दठक्कुरकृतव्याख्यानानुसारेण दोषरहितौ गुणसहितौ धर्मिरसधर्मभूतमाधुर्यादिगुणविशिष्टौ सर्वत्र सालङ्कारौ क्वचिदस्फुटालङ्कारवन्तावपि शब्दार्थौ काव्यम् इति विवक्षितम्।

एतदवधेयं यदेतत्कालावधि काव्यस्य पुरुषरूपेण कल्पना बहुभिः स्वीकृताऽऽसीत्। रसप्राधान्यवादिना तु सिद्धान्त एव सदाश्रितः। मम्मटेन च न यद्यपि लक्षणे रसस्य सन्निवेशः कृतः परम्—

'मुख्यार्थहतिर्दोषो रसश्च मुख्यस्तदाश्रयाद् वाच्यः'

इति कथनेन रसस्य काव्यात्मत्वं गुणानां च—

'ये रसस्याङ्गिनो धर्माः शौर्यादय इवात्मनः'।

इति कथनानुसारेण रसधर्मत्वं साधु स्वीकृतमेव, परं लक्षणे रसशब्दस्यानुपादानेऽपि माधुर्यादिगुणसहितत्वस्य स्पष्टं लक्षितत्वात्परम्परया ग्रहणमेव तेषाम्। ध्वन्यादेश्च प्रकारविशेषतया लक्षितव्याभावात् तत्र नोल्लेखः। परमत्र 'अनलङ्कृती' इति लक्षणांशं दृष्ट्वा "कथं नीरसस्याप्यनलङ्कृतस्य काव्यत्वं स्वीक्रियेत। न च ननोऽस्फुटाभिप्रायमीषदर्थं गृहीत्वा क्वचिदस्फुटालङ्कारावपि शब्दार्थौ काव्यमित्याशय इति वाच्यम्, आत्मभूतरसविरहे चमत्कारकारणे चालङ्कारेऽप्यस्फुटे लोकोत्तरानन्दप्रदत्वाभावात् किं मूलं काव्यत्वं तत्र स्यादिति गोविन्दठक्कुराणामरुचिः। अत एव चन्द्रालोककारः पीयूषवर्षोपाधिधारी जयदेवः काव्यं लक्षयन् पूर्णं लक्षणमाह—

निर्दोषा लक्षणवती सरीतिर्गुणभूषिता।
सालङ्काररसानेकवृत्तिर्वाक्काव्यनामभाक्॥

सरीतिं-गुणादिसम्पन्नामेव कृतिं काव्यं स्वीकुर्वाणोऽलङ्कारान् काव्येऽपरिहार्यानेव मनुते। काव्य-प्रकाशकारस्य लक्षणेऽनलङ्कृती इति पदं स्पष्टमाक्षिपन्नाह—

अंगीकरोति यः काव्यं शब्दार्थावनलंकृती ।
असौ न मन्यते कस्मादनुष्णमनलंकृती ।।

परमेतदुपेक्ष्यम् केवलं शोभावर्धकतत्त्वस्य स्वरूपघटकत्वेनास्वीकार्यत्वात् । अन्यथा रसास्वादवति ध्वन्यात्मकेऽपि काव्येऽलंकाराभावे काव्यत्वमव्याप्तं स्यात् सम्प्रदायविरोधश्चतेन प्रसज्जेत । अथ रसमेव काव्यरूपघटकं मन्यमानो विश्वनाथ साहित्यदर्पणे 'वाक्यं रसात्मकं काव्यम्' इति काव्यं लक्षयन् मम्मटकृतलक्षणे प्रतिपदं दूषणान्युपन्यास्थत् । तस्य विचारेण सर्वथा दोषरहितस्य काव्यस्यासंभवेन, दोषे सत्यपि रसास्वादेऽक्षते काव्यत्वस्वीकारादिदोषाविति पदम्, शब्दार्थधर्मबोधभ्रमात् सगुणाविति पदं स्फुटालंकारवत्त्वेऽप्यस्फुटालंकारत्वेनोदाहरणसंगतेरभावादनलंकृती इति पदमपि सदूषणमेव । परं रसं काव्यात्मतया मन्वानोऽसौ कथं तमेव काव्यलक्षणघटकत्वेन प्रस्तौति ? आत्मा खलु सर्वेषां प्राणिनां समानो धर्मः, तेन मानवे लक्षणीये सात्मवच्छरीरवत्त्वं मानवत्वमिति लक्षणं किं निर्दुष्टं स्वीक्रियेत ? रसपदेन पारदस्यापि कटुकल्कादि-भोज्यास्वादस्यापि च ग्रहणीयतया किमायुर्वेदगतपारदवर्णनपरं मधुरादिरसविश्लेषणात्मकं वा वाक्यमपि काव्यं स्यादिति सामान्यधर्मस्य शरीरस्वरूपविधायुगणामनिर्देशे कथं पूर्णं निर्दुष्टं च लक्षणमिति न विभावयामः । सैन्धवादिपदवत् प्रसंगेन नायुर्वेदादिगतपारदादिबोधो भविष्यतीति चेत् कथं पूर्वनिर्दिष्टोऽतिव्याप्तिरपाक्रियेत । रसस्य प्राधान्ये तु न कस्यापि विप्रतिपत्तिः ।

अन्ये च रसगंगाधरकृता जगन्नाथस्य 'रमणीयार्थ प्रतिपादकः शब्दः काव्यम्' इति लक्षणं शब्दगतमेव काव्यत्वं निरूपयति । परमास्वादोद्बोधकता खलु काव्यप्रयोजनम्, तद् येन सिध्यति तदेव काव्यपदवाच्यम्, वाक्येऽपि क्वचित्प्रहेलिकादौ पदगुम्फनादौ च शब्दमात्रे चमत्कारः, अपरत्रानुप्रासविरहिण्यपि व्यंग्यानुभूतिमयेऽर्थे वैचित्र्यमिति चमत्कृतिजनकतायाः शब्दमात्रगतत्वविरहात् काव्यं श्रुतं काव्यं बुद्धमिति व्यवहारस्य शब्दार्थोभयविषयगतत्वात् कथकार केवलस्य शब्दस्य काव्यत्वं ग्राह्यं स्यात् ।

मानवस्य रसाभिलाषितया, दोषरहितस्य च वाक्यस्य तदर्थस्य च विशेषेणानन्दप्रदत्वसंभवात् काव्यस्य निर्दोषत्वं सर्वस्यापीष्टम् । अतो लक्षणे दोषरहितत्वं तूपन्यसनीयमेव भवति । यथा 'हतवृत्तो हतो नरः' इति वचने 'धर्मेण हीना: पशुभिः समाना:' इत्यादौ च न हतपशुशब्दयोर्मुख्या वृत्तिः । लक्षणया स्वरूपेणाक्षतेऽपि नरस्य नरत्वे गुणादिदृष्ट्यैव तदभावस्य विवक्षितत्वम् । एवमेव निर्दोषत्वं काव्यस्य सर्वेषामपीष्टं तत्खलु परमरमणीयं स्यात् । दुष्टं काव्यमिति व्यवहारस्तु लोके दुष्टो मानव

इतिवत् क्व न लभ्यते । परमसम्भवति सर्वथा दोषरहिते मानवे स्वरूपघातकत्वेनादुष्टत्वस्य किं दोषयुक्तत्वं मानवत्वमिति लक्षणं भवतोऽभिप्रेतं स्यात् ? एवमेव काव्यप्रकाशकारस्य लक्षणे सगुणाविति पदे दर्शिताऽनुपपत्तिरपि न सगच्छते । गुणाना रसधर्मत्वे विवक्षितेऽपि व्यवहारे तदुद्‌बोधकशब्दार्थगतत्वेनैव प्रतीते स्वरूपघटकता तेषामेव न तु रसस्य। 'नहि गौ स्वरूपेण गौर्नाप्यगौर्गोत्वाभिसम्बन्धात्तु गौरिति' पातञ्जलोक्तदिशा गो स्वरूपाधायक गोत्व सत्त्व सास्नालाङ्गूलादिमत्त्व न त्वात्मवत्त्वम् । तथाहि 'मृतो गौ' इति वाक्ये गतात्मनो गो शरीर एव गोत्वव्यवहारो न तु धर्मिणि । हस्तपादाद्याकारविशिष्ट एव मानवो भवति न केवल आत्मा स्वतस्तस्य शुद्ध-निरुपाधि-रूपत्वात् । एव च गुणैर्माधुर्यादिभि समन्वितौ शब्दार्थौ काव्यमिति स्वीकारे को दोष ? अलकारस्याऽस्फुटत्वे सर्वथाभावेऽपि वा माधुर्यादिमत्त्वाद् रसवत्त्वेन तस्मादास्वादस्याक्षति । न हि कोऽपि सौन्दर्योदार्यादिबाह्याभ्यन्तरगुणविशिष्टोऽक्षतपाणिपादवान् जनो भूषणविहीन सन् मानवधर्मतोऽवहीयते । तथा सति धनिका एव कतिपये वेशप्रिया वा लोका मनुजपदवाच्या भवेयु । यच्च विश्वनाथेन 'य कौमार हर' इति पद्ये विभावनाविशेषोक्त्यो स्फुटत्वसिद्धये भावमुखेन तयोरुक्ति समार्थ्यत, तत्समर्थनमेवानयोरलकारयोरस्फुटत्वे बीजम् । अभावमुखेन वक्तव्यस्यार्थस्य भावमुखेन प्रतिपादनात्। अत काव्यप्रकाशकृतो लक्षणमेव साधीयो निर्दुष्टत्वात् ।

—०—

# काव्येऽलंकाराणां स्थानम्

विश्वस्मिन्नपि जगति चेतनम्, चेतने मानवः, मानवे वाणी, वाण्यां भाषा, भाषाया साहित्यम् तत्रापि काव्यम् सारः। तद्धि महतो वाङ्मयाम्बुधेर्निर्मथ्यमानादमृतमिवोद्भूतं नवनीतमिव दध्नः। काव्यस्य साहित्यसारत्वं च प्रतिपादितवरं विह्लणेन—

साहित्य-पाथोनिधि-मन्थनोत्थं
  काव्यामृतं रक्षत हे कवीन्द्राः।
यत्तस्य दैत्या इव लुण्ठनाय
  काव्यार्थचौराः प्रगुणीभवन्ति ॥
गृह्णन्तु सर्वे यदि वा यथेष्टं
  नास्ति क्षतिः क्वापि कवीश्वराणाम्।
रत्नेषु सर्वेषु हृतेष्वमर्त्यै
  रद्यापि रत्नाकर एव सिन्धुः॥ (वि. च)

एवं सारभूतेऽपि काव्ये किं तावत्सारमिति विचिकित्सायां केचिदाचार्या अलंकारान्, केचिद् रसान्, अपरे गुणान्, इतरे रीतीः, अन्ये च भणितिभंगीविशेषान् सर्वोपजीव्यं तत्त्वमंगीकुर्वते। अलंकारारमवादिनः काव्यस्य विशेषोत्कर्षाधायकानलंकारान् मन्वानास्तदभाववतीरुक्तीर्वार्ता एव कथयन्ति। तथाहि—

गतोऽस्तमर्को भातीन्दुर्यान्ति वासाय पक्षिणः।
इत्येवमादि किं काव्यं वार्तामेनां प्रचक्षते ॥ (भा. का. अ.)

आदौ च काव्येऽलंकाराणामेव प्राधान्यमासीत्। न यतस्तदवधि रसवादस्य प्रतिष्ठा जाता। आमहादयोऽलंकारवादिनो रसं रसवदलंकारतयैव स्वीकुर्वते। एवं च रसस्याप्यलंकारतयैव ग्राह्यत्वेनालंकाराणामेव प्राधान्यमापतति न तेषां मतेऽलंकारहीना कविता कविता, सत्यपि सा विधवेव न विराजते। उदाहृतं च—

न कान्तमपि निर्भूष विभाति वनितानम् । (भामह)

अलकाराश्च चमत्कृतिपूर्णोक्ति —

वक्राभिधेयशब्दोक्तिरिष्टावाचामलकृति । (भामह)

अलकारेषु चार्थस्यैव महिमातिशय इति अर्थालकारा एव मुख्यत्वेन स्वीक्रियन्ते । अलकाराश्च न वक्रोक्तिम्—भणिति-वैचित्र्यमन्तरा साधु सम्पद्यन्ते । तथाहि—

'न नितान्तादिमात्रेण जायते चारुता गिराम् ।'
सैषा सर्वत्र वक्रोक्तिरनयाऽर्थो विभाव्यते ॥
यत्नोऽस्या कविना कार्य कोऽलकारोऽनया विना । (भा.

दण्डी च तानेव काव्ये महत्तमान् मन्यते, तैरेव शोभाया सम्पादनात् ।

काव्यशोभाकरान् धर्मानलकारान् प्रचक्षते । (काव्या०)

तदुत्तर काव्यालकारसूत्रकारो वामनो रीतीरेव काव्यात्मतया स्वीकुर्वाणोऽलकारान् काव्यस्य शोभाधायकान् गुणाश्चापरिहार्यान् प्रतिपादयति । 'रीति काव्यस्यात्मा', 'काव्य ग्राह्यमलकारात्', 'काव्यशोभाया कर्तारो गुणा, तदतिशयहेतवस्त्वलकारा' इति । एव तस्य मते च रीति, गुणा, अलकारा इति पूर्वपूर्वभावेन प्राधान्यम् । नवम्या शताब्द्या च रुद्रटेनालकारान् विवेचयताऽपि रसस्यापरिहार्यता स्वीकृता, 'तस्मात्तत् (काव्यम्) कर्तव्य यत्नेन महीयसा रसैर्युक्तम्' इति ।

अस्मिन् काले ध्वनिसम्प्रदायस्य महत्त्व रसस्य च ध्वन्यात्मकत्व ध्वनिविषयस्य रसस्य काव्ये मुख्यत्व च साधितमासीत् । ध्वनिवादिभिरपि न स्वीकृतोऽलकाराणा विशेष, पर रसाद्यपेक्षया तेषा गौणमेव स्थानम् । ध्वनिसिद्धान्त स्वीकुर्वन्तो मम्मटादयो रसमेव प्रथम स्वीकुर्वाणाश्चमत्कारावहतयाऽलकारान्ककणादिरूपेणैव काव्यस्य शोभाधायकान् मन्वते, तत्प्रधानस्य च काव्यस्याधमत्वमेव स्थापयन्ति । अनलकृती पुन क्वापीति वदता मम्मटेन स्फुटमेतन्निरणायि । विश्वनाथादयोऽपि तस्यैव पक्षमनुसरन्ति । ते हि काव्यपुरुषस्य शब्दार्थौ शरीरम्, रस आत्मा, माधुर्यादयो गुणा शौर्यादिवत्, रीतयोऽवयवसस्थानरूपिण्य, अलकाराश्च हारादिवत्, इत्येव प्रतिष्ठापयन्ति ।

'उपकुर्वन्ति त सन्त येऽङ्गद्वारेण जातुचित् ।
हारादिवदलकारास्तेऽनुप्रासोपमादय ॥' (का० प्र०)

इति यद्यपि तत परमपि जयदेवोऽप्पय्यदीक्षितश्चालकारानेव विशेषेण काव्यशोभाकरान् मन्वाते पर रसस्यैव प्राधान्य तदा बहुसम्मतमभूत् । जगन्नाथस्तु 'रमणीयार्थप्रतिपादक शब्द काव्यम्' इति काव्य लक्षयन् तत्रालकारानपरिहार्यानेव

स्वीकरोति। वक्रोक्तिजीवितकारः कुन्तकः, औचित्यप्रतिष्ठापकः क्षेमेन्द्रश्च न तत्सम्बन्ध उदासाते। यद्यमलंकारा आत्मतया शोभाधानमूलतया वा स्वीक्रियेरन्, काव्ये तेषां स्थितिरुत्कर्षाधायकत्वेन नानादरास्पदम्। न वस्तुत एतान् विनोक्तिश्चारुतामावहति। प्रथमं सृष्टिकाव्यं वेदा अपि तान् प्रयुञ्जत एव।

"अभ्रातेव पुंस एति प्रतीची, गर्तारुगिव सनये धनानाम्।
जायेव पत्य उशती सुवासा उषा हस्रेव निरिणीते अप्सः ॥"

अत्रोपोवर्णने उपमालंकारस्य साधीयान् प्रयोगः। 'अनेजदेकं मनसो जवीयः' इति विरोधालंकारः, 'अपाणिपादो जवनो ग्रहीता' इति विभावनालंकारश्च साधुप्रयोगावर्यमुपकुरुत एव।

द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते।
तयोरन्यः पिप्पलं स्वाद्वत्ति, अनश्नन्नन्यो अभिचाकशीति।

अस्यामृचि रूपकातिशयोक्तिनं कथमपि साधारणी।

रामायणे, महाभारते च काव्यतयाऽलंकाराणां यत्रतत्र प्रयोगोऽर्थवैशद्याय कृत एव। कवेर्भावो न यानन्तरा रोचकतया स्फुटीभवति। बहुधाऽमूर्तभावैरुपमितः पदार्थः प्रत्यक्षायते। यथा सुन्दरकाण्डे सीतावर्णने—

आयतीमिव विच्छिन्नामाज्ञामिव विलोपिताम्।
तां बुद्धिमिव संदिग्धामृद्धिं निष्पतितामिव।
विहतामिव च श्रद्धाम् आशां प्रतिहतामिव।
सोपसर्गां यथा सिद्धिं बुद्धिं सकलुषामिव ॥ (वा. रा.)

एतासु पंक्तिषूपमितायाः सीतायाः विरहदशा साधु व्यज्यते।

शब्दालंकारा अपि यथास्थानं योजिता नादसौन्दर्यं जनयन्तः कविताया हृद्यतामापादयन्त्येवेति निश्चप्रचम्। अतएव पण्डितराजस्य काव्यमतिशयेन काव्यरसिकान् रसयति रसम्।

उपनिषदः परिपीता गीता च हन्त मतिपथं नीता।
तदपि न हा विधुवदना मानससदनाद् बहिर्याति ॥
इत्यत्र

येनामन्दमरन्दे दलदरविन्दे दिनान्यनायिषत।
कुटजे खलु तेनेहा तेने हा मधुकरेण कथम् ॥ (भा. वि.)

अस्मिन् पद्ये च शब्दानुप्रासेनार्थ-सौन्दर्यसहकारिणी नादभङ्कृतिरतितमां प्रमोदं आवहति। आंग्लभाषायामपि काव्ये निडम्बरतया स्वीकृतेऽपि उपमा (Simile) रूपकम् (Metaphor) शब्दनाद (Onomatopoeia) मानवीकरणम् (Personification) विशेषणविपर्यय (Transferred Epithet) आदयोऽलङ्कारा (Figures of Speech) इतिनाम्ना व्यवह्रियन्त एव। स्वच्छन्दतावादधारयाऽन्दोलितेऽपि हिन्दीकाव्ये भावाभिव्यक्तिसौकर्याय कवयो यत्र तत्राऽलङ्कारानवश्यमेव स्वीकुर्वन्ति, न तेषां छायावादसम्बन्धिनी कविता समासोक्त्या रूपकेण वा परिहीयते।

यथा सुमित्रानन्दनकवेः 'परिवर्तन' कवितायाम्—

'सरल भौंहों का शरदाकाश घेर लेते घन घिर गम्भीर'

अत्र पद्यांश एकदेशविवर्तिनो रूपकस्य साधीयसी योजना।

अद्यत्वे काव्येऽलङ्काराणां प्रयोगविषये महान्विवादः। बहवो जना एतान् भावाभिव्यञ्जनाया मार्गे बाधकान् गडुभूतानेव मन्वते। अपरे च तान् विना काव्यस्य सत्त्वमपि न स्वीकुर्वते। एतादृशी विप्रतिपत्तिस्तु नाद्यतन्येव। पुराऽपि तेषां प्रयोगो निन्दितः समर्थितश्च। 'मुण्डे मुण्डे मतिर्भिन्ना' हि। परं कैस्ताववैतेषां सर्वथा वर्जनं कृतम्। लोकेऽपि भूषणानां धारणमनावश्यकं मन्वाना अपि प्रेयसी लावण्यचाकचिक्यायित चक्षुर्विधिरसव के न तानि निर्मापयन्ति। कथं तानि निध्यागारेषु (Banks) निक्षिपन्ति? चिरन्तन्येव मानवस्य सौन्दर्यग्रहग्रहिला प्रवृत्तिः। कवितायां कामिनीत्वेनोपन्यासे कामनीयकमस्या एधयितुकामास्तामपि मधुरपदभङ्कारिणीं, मृदुभावाभिरामां हृदयाश्लेपकृतरोमहर्षां कामयन्ते कवयः। परं नात्र सन्देहो यद् भूषणानि भूषणान्येव भावाश्च भावाः। जीवनप्रतिबिम्बायिते मनोवेगमूलायिते काव्ये तस्याऽऽधारशिला भावसम्पदेव, न तु शब्दयोजना। जीवन्त्येव हि रमणी रमयति रमणीयमसृणस्वनक्वणत्किङ्किणी-भ्रणभणायितमञ्जीरमञ्जुपदक्रमैः। मृतायास्तु भीषणतामेव जनयन्तितेः। एवं सौन्दर्यमात्रनिर्वाहकतया प्रयुक्ता अलङ्कारा अलङ्काराः। स्वभावोपनतं भावगरिमाणं प्रतिच्छादयन्तस्तु तस्या नैसर्गिकमपि सौन्दर्यं नाशयन्त्येवेति शोभासाधनतया प्रयुज्यमाना काव्यस्यालङ्करणं सम्पादयन्त एव ते शोभनाः। तादृशे तेषां प्रयोगे न कस्यापि वैमत्यं भवेदिति शम्।

# काव्ये रसाः

सकलमपि जगदिद प्रमेयात्मक भूत भविष्यद् वा ब्रह्मैव, 'द्वावेव ब्रह्मणो रूपे मूर्तं चामूर्तं च।' ब्रह्माथ सत् चित् आनन्दघनश्च, सर्वानन्दमयत्वाद् विलक्षण-रमणीयतामय पदे पदे नवनवरहस्यवश्य विश्वमिद चराचरात्मक तस्य काव्य यन्न क्षीयते, न च जीर्णता व्रजति।

'पश्य देवस्य काव्य न ममार न जीर्यति,'

तदेव रस्यते चक्षुरादिभि, अनुभूयते हृदयेन, चिन्त्यते मनीषया, रसयिता रसिता च स्वयमेव जीवभूत। सोऽपि रस रसते रस्यते च साक्षात्कर्तृभि। 'रसो वै स रसं ह्येवायं लब्ध्वानन्दी भवति।' इति छान्दोग्या। तस्यैव प्रतिकृति शब्दब्रह्मणा ग्रन्थाकारेण पुरत स्थाप्यते प्रस्तूयते, विधीयते च रसमयी। आनन्दो जीवधर्म। न रस आनन्दाद् व्यतिरिच्यते रस्यत आस्वाद्यत इति व्युत्पत्त। सकलोऽपि व्यापार प्राणिना रसाभिलाषमूल। न केवल काव्यजगति, व्यवहारजगत्यपि च प्राणवता रसमभिलक्ष्यैवाहारविहारादिप्रवृत्ति। आनन्दमुद्दिश्यैव हि विषयेष्वभिनिवेश। अतएव काव्यजनित आस्वादोऽपि रस एव। तस्य स्वरूप हि न ब्रह्मणो रूपाद भिद्यते—

'सत्त्वोद्रेकादखण्डस्वप्रकाशानन्दचिन्मय।
वेद्यान्तरस्पर्शशून्यो ब्रह्मास्वादसहोदर॥
लोकोत्तरचमत्कारप्राण कैश्चित्प्रमातृभि।
स्वाकारवदभिन्नत्वेनायमास्वाद्यते रस॥" सा० द० ३।

तदर्थमेव काव्यरचनायामभिरुचि। अविद्यापतितस्यापि हि जीवनस्य काव्यास्वादद्वारेण स्वचिन्मयस्वरूप-मुलभ आनन्दे वास। काव्यस्य प्रयोजन ह्युक्तम्।

काव्य यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये।
सद्य परनिर्वृतये कान्तासम्मिततयोपदेशयुजे॥ (का० प्र० १।२॥)

सद्यः परनिर्वृतिरेव हि काव्यस्य जीवातुभूतो रसः। तदर्थमेव काव्यं श्रूयते, पठ्यते, बुध्यते दृश्यते च सामाजिकैः। एतदेवाभिप्रेत्य चोक्तं भरतेनापि—

'न हि रसादृते कश्चिदर्थः प्रवर्तते।'

कथं तावत्तस्यानुभूतिः, नानाद्वन्द्वात्मकेऽनभिमतघटनाकटुकायिते हि जीवने कुतस्तादृशस्य चरमसुखस्योपलब्धिः ? सिताऽपि हि, मधुरमधुरा मिश्रितवंशच्छेदा विरसो भवति, छिनत्ति च रसनां स्वदमानस्य, इह तु जगति प्रत्यहं, प्रतिघटि, प्रतिमुहूर्तं प्रतिक्षणं च विषमविषमा परितोषवसादयन्ति दशापरिणामाः। उच्यते, भवति सा भावोदयात्। मूलं हि सकलस्याऽपि व्यापारचक्रस्य य एते मनोभावा हर्षशोकादयः। वशीकृतास्तरलिता गुम्फास्तावदेभिर्वयं प्रवर्तामहे नैकविधासु क्रियासु। न हि तावदेतद्विधोजनः कोऽपि यं न स्पृशन्ति ते। काव्यं च वर्णयतीतिहासमन्तर्जगतो बहिर्जगन्मुखेन। विश्वमिदं हि निभालयत उद्यन्ति चेतसि विविधा वृत्तयः। काश्चिदनुभूतिपर्यवसायिन्योऽपराश्च पाकावसाना इति भेदात् स्थायितां सचारितां च प्रतिपद्यन्ते। कुतोऽजागरयद् पदार्थजात चालम्बनं तदवर्धकं तूद्दीपनम्। उभये च विभावा विशेषेण भावयन्ति रसान् यतः। उदितासु च तासु वृत्तिषु न स्थूला प्रतिपत्तिरिति विविधाभिरेव चेष्टाभिर्लक्षयन्तेऽतोऽनुभावास्ता उदिताः। एवं स्थायिन एव भावा विभावादिसहकारेण रसे विपरिणमन्ति। उक्तं च भरतेन—

"विभावानुभावसंचारिसंयोगाद्रसनिष्पत्तिः" इति। तथा च—

'यथाहि गुडादिभिर्द्रव्यैर्व्यञ्जनैरोषधिभिश्च षाडवादयो रसा निवर्तन्ते, तथा नानाभावोपगता अपि स्थायिनो भावा रसत्वमाप्नुवन्तीति।' भ. ना. षा. ७

रसस्य परिणतिविषये च मम्मटस्य विश्लेषणमभिनवोक्तं हृद्यतमं विशदं च—

"लोके प्रमदादिभिः स्थाय्यनुमानेऽभ्यासपाटववतां काव्ये नाट्ये च तैरेव कारणत्वादिपरिहारेण विभावनादिव्यापारवत्त्वादलौकिकविभावादिशब्दव्यवहार्यैर्ममैवैते, शत्रोरेवैते, न ममैवैते, न शत्रोरेवैते, न तटस्थस्यैवैते इति सम्बन्धविशेषस्वीकारपरिहारनियमानध्यवसायात्साधारण्येन प्रतीतैरभिव्यक्तः सामाजिकानां वासनात्मतया स्थितः स्थायी रत्यादिको नियतप्रमातृगतत्वेन स्थितोऽपि साधारणोपायबलात्तत्कालविगलितपरिमितप्रमातृभाववशोन्मिषितवेद्यान्तरसंपर्कशून्यापरिमितभावेन प्रमात्रा सकलसहृदयसंवादभाजा साधारण्येन स्वाकार इवाभिन्नोऽपि गोचरीकृतश्चर्व्यमाणतैकप्राणो विभावादिजीवितावधिः पानकरसन्यायेन चर्व्यमाणः पुर इव परिस्फुरन् हृदयमिव प्रविशन् सर्वाङ्गीणमिवालिङ्गन्नन्यत्सर्वमिव तिरोदधद् ब्रह्मानन्दास्वादमिवानुभावयन्नलौकिकचमत्कारकारी शृंगारादिको रसः।'

आत्मा हि शुद्धो बुद्धश्चिन्मयः, सत्वमयं, प्रकाशमयं, ज्ञानमयश्च निर्विकल्पः, उपाधिरहितः। तदवस्थतामनुप्रपन्नो हि सामाजिको द्वन्द्वमूलं कटुकमनुभवं सर्वं जहाति। 'सुखमात्यन्तिकं यत्तद्बुद्धिग्राह्यमतीन्द्रियम्।' अविद्यापदपतितस्यापि च जीवस्य नैसर्गिकोऽभिलाषः स्वपदप्राप्तौ। काव्यरसन-काले, कामं न द्राघीयसी परं भवत्येव स्वरूपानुभूतिस्तस्य। महानयं लाभो रसयितुः।

रसोऽयं स्थायिभेदेन बहुविधतामापद्यते। स्त्रीपुंसोरनुरागरूपिणी रतिः विभावादिसहकृता रसरूपेण परिणता शृंगारसंज्ञया व्यवह्रियन्ते। एवमिष्ट-नाश-विपत्तिकृतविषादरूपः शोक एव करुणरूपे, विकृतवाक्चेष्टावेषादिदर्शनोद्भवो हासश्च हास्ये, शत्रुविजयादिगत उत्साहो वीरे, अपराधदर्शनानुभवोद्भूतक्रोधाख्यो भावो रौद्रे, मलमूत्रादिकुत्सितवस्तुवीक्षणजो जुगुप्साभिधश्च बीभत्से, कौतुकजननहेतुरपूर्वपदार्थ-दर्शनादिकृतो विस्मयोऽद्भुते जगदनित्यतानुभवतत्त्वज्ञानादिकृतनिर्वेदाकारः शमः शान्ते परिणमति। रौद्रस्य च फलं भयानको नीचपात्राश्रयः।

क्वचिच्च शुद्धोऽपि, स्थायी स्वाद्यते। तत्राप्यालम्बनादिसहकृतोऽनुभवः। काव्यस्य जीवातुभूततया रसस्य न किमपि तादृशं वस्तूपन्यास्यं येन मुख्यतत्त्वस्य प्रतीति-र्व्याहन्यते। अत एव च माधुर्योज प्रसादाख्यास्त्रयो गुणा वैदर्भ्याद्या रीतयश्च निरूपिता आचार्यैः। रसोचितैव हि पदावली गुणादिमुखेनेष्टं रसं प्रत्याययति। यथा शृंगारे करुणे च ललितललिता समासरहितैव पदावली विशेषेण प्रभवति।

शमिता सविधेऽप्यनीश्वरा सफलीकर्तुमहो मनोरथान्।
दयिता दयिताननाम्बुजं दरमीलन्नयना निरीक्षते॥ (र. गं.)

वीरे, रौद्रे, भयानके च संयुक्तवर्णानां टवर्गप्रायाणां प्राचुर्यं समस्तानाम-समस्तानां वा प्रभवति तदुद्बोधे। यथा—

चञ्चद्भुजभ्रमितचण्डगदाभिघात-
संचूर्णितोरुयुगलस्य सुयोधनस्य।
स्त्यानावनद्धघनशोणितशोणपाणि-
रुत्तंसयिष्यति कचांस्तव देवि भीमः॥ (वे. सं. १)

रसोऽप्ययं पूर्वैरलंकारवादिभिराचार्यैः रसवत्प्रेय ऊर्जस्विरूपालंकारेण स्वीकृत आनन्दवर्धनादिभिश्च ध्वनिवादिभिः काव्यात्मतया प्राधान्यं नीतः। स एव काव्यस्य मुख्योऽर्थः। यथा—

मुख्यार्थहतिर्दोषो रसश्च मुख्यः.......... (का. प्र. ७)

# व्यञ्जना व्यापारः, तस्य स्वरूपं परम्परा च

ध्वनिप्रस्थापकैरानन्दवर्धनाचार्यैः प्रधानस्य काव्यार्थस्य द्वौ भेदावुदितौ—

> अर्थः सहृदयश्लाघ्यः काव्यात्मा यो व्यवस्थितः ।
> वाच्यप्रतीयमानाख्यौ तस्य भेदावुभौ स्मृतौ ॥

तत्र वाच्योऽभिधाबोध्यः शब्दार्थः । प्रतीयमानस्तु ततो विलक्षणः—

> प्रतीयमानं पुनरन्यदेव वस्त्वस्ति वाणीषु महाकवीनाम् ।
> यत्तत्प्रसिद्धावयवातिरिक्तं विभाति लावण्यमिवाङ्गनासु ॥ (ध्वन्या०)

यथा कामिनीशरीरे हस्तपादादिमति वर्णादिव्यतिरिक्ता काऽपिच्छाया रसिकहृदयान्यावर्जयति तद्वदेव काव्येऽपि शब्दार्थव्यतिरिक्तः सुन्दरतमोऽन्य एवार्थः प्रतिभाति येन कवीनां वाणी निरतिशयाह्लादजनकं कमपि विशेषं पुष्णाति । तथाहि—

> सरस्वती स्वादु तदर्थवस्तु निष्यन्दमाना महतां कवीनाम् ।
> अलोकसामान्यमभिव्यनक्ति परिस्फुरन्तं प्रतिभाविशेषम् ॥ (ध्वन्या०)

यथा कालिदासस्य शकुन्तलां दृष्ट्वा 'अहो, लब्धं नेत्रनिर्वाणम्' इति वचने शकुन्तलादर्शनोपजातोल्लासमानिशमनुभूतिः सूच्यते, सा च न शब्दस्यार्थः, सामर्थ्यादेव तु सूच्यते । यथा 'गतोऽस्तमर्कः' इत्यत्रापि शब्दार्थोऽपि कस्यचिन्महापुरुषस्य मृत्युः प्रतीयते । काम न स बुध्येत स्थूलमतिभिः, रसिकानां तु सुखेन बोध्य एव । अत एवोक्तम्—

> शब्दार्थशासनज्ञानमात्रेणैव न वेद्यते ।

> सहृदयसचेतसां सोऽर्थो व्यापारविमुखात्मनाम् ।
> बुद्धौ तत्त्वार्थदर्शिन्यां झटित्येवावभासते ॥ (ध्वन्या०)

अयमेव विलक्षणोऽर्थो व्यङ्ग्यः, तद्बोधकः शब्दो व्यञ्जकः, तस्य वृत्तिर्व्यञ्जना चेति वर्णितमालङ्कारिकेषु । अस्मिन्नेवार्थे च ध्वनिशब्दः प्रयुज्यते । परं स व्युत्पत्तिभेदेन वाच्यवाचकौ, व्यङ्ग्यव्यञ्जकौ वृत्तिं च प्रतिपादयति । यदाहुरभिनवगुप्ताचार्याः—

'तेन वाच्योऽपि ध्वनिः, वाचकोऽपि शब्दो ध्वनिः, द्वयोरपि व्यञ्जकत्वं ध्वनतीति कृत्वा । गम्यते विभावानुभावसंवलनयेति व्यङ्ग्योऽपि ध्वनिः, ध्वन्यत इति कृत्वा ।

"अत्रान्तरे कुसुमसमययुगमुपसंहरन्नजृम्भत ग्रीष्माभिधानः फुल्लमल्लिका-धवलाट्टहासो महाकालः।"

अत्र शब्दवैशिष्ट्याद् युगोपसंहारकारी महाकालाख्यः शक्तिविशेष उज्जृम्भमाणः प्रतीयते। सा च प्रतीतिः शब्दावेतावाश्रयतीति शब्दशक्तिमूला। अत्र वस्तुनो बोधाद् वस्तुध्वनिः। अत्रैव च प्रसक्ते ग्रीष्मवर्णनेऽप्रसक्तस्य महाकालस्य बोधाद-सम्बद्धार्थाभिधायित्वं मा प्रसाङ्क्षीदिति महाकाल इव महाकाल इत्याकारक उपमानो-पमेयभावो द्वयोः सूच्यत इत्युपमालंकारध्वनिः।

असंलक्ष्यक्रमव्यंग्यस्तु रस-भाव-रसाभास-भावाभास-भावोदय-भावशान्तिभाव-संधि-भावशबलतारूपी विभावानुभावादिबोधसहकारापेक्षः क्रमे सत्यपि वाच्यार्थ-प्रतीतिसमकालमेव तत्पिण्डीभावपरिणतः सहृदयैरवबुध्यत इति न लक्ष्योऽनुभवितुं शक्योऽर्थबोधक्रमो यत्र स इति व्युत्पत्त्या तथोच्यते। यस्य च भावानामानन्त्यादेकस्यापि रसस्य विविधानुभावमुखेन प्रतीतेर्न विभाजनं सम्भवतीत्येकविध एव।

एष च यत्र परस्याङ्गतामापद्यते तत्र रसवत्, प्रेय., उर्जस्वि, समाहितम् इत्या-ख्या अलंकाराः सम्पद्यन्ते। यत्र चैते स्फुटायन्ते तत्र गुणीभूतव्यंग्यतैव तेषाम्।

घण्टानुरणनरूपो वाच्येऽर्थे पर्यवसितेऽपि स्वसामर्थ्यमहिम्ना प्रतीयमानोऽर्थो यत्र सोऽर्थशक्तिमूलो ध्वनिर्वस्त्वलंकाररूपः स्वतः सम्भवी, कविप्रौढोक्तिसिद्धः, कविनिबद्ध-वक्तृप्रौढोक्तिसिद्धश्चेति त्रिविधः। यथापूर्वोदाहृते 'गतोऽस्तमर्कः' इत्यादौ शब्देष्वेकार्थे-ष्वपि वक्तृबोद्धव्यादिवैशिष्ट्यान्महापुरुषदेहावसानरूपो विपरिणसप्रहारमको वाऽर्थो बोध्यते। कविप्रौढोक्तिसिद्धो यथा—

सज्जयति सुरभिमासो न तावदर्पयति युवतिजनलक्ष्यमुखान्।
अभिनवसहकारमुखान् नवपल्लवपत्रलानङ्गस्य शरान्॥

अत्र वसन्तारम्भदशा कविकल्पनासिद्धा। एवमेव कविनिबद्धवक्तृप्रौढोक्ति-सिद्धोऽपि भवति। एषोऽनुरणनरूपो व्यंग्यः शब्दार्थोभयशक्त्युत्थोऽपि।

अत्र काश्चिन्नवा मान्यता.। तथाहि मम्मटादीनामाचार्याणां मतेन शब्दशक्ति-मूलो वस्तुध्वनिस्तत्रैव भवति यत्र शब्दस्यानेकार्थस्य प्रकरणादिवशादेकस्मिन्नर्थे नियमनेऽभिधायास्तत्र विरतत्वात्तद्भिन्नोऽन्योर्थः कथं बोध्य.। शब्दबुद्धिकर्मणां विरम्य व्यापाराभाव इति नयेनाभिधया पुनर्नार्थान्तरबोधः। तत्र व्यञ्जनैव सहकारिणी भवति यथा 'अत्रान्तरे' इत्यादौ। एतस्मिन् विषये जगन्नाथस्य मतं भिद्यते। तथाहि—अनेकार्थेषु शब्देषु प्रकरणादिबलादभिधायामेकत्रार्थे नियतायां पुनस्तदन्यस्यार्थस्य कथं नाभिधया बोधः संभवति तदबोधकपदस्य विद्यमानत्वात्। यथा पयो रमणीयमित्यादौ

पांसुरपादाः प्रथमं प्रसंगेन पयसो जलमेवार्थं गृह्णन्ति पश्चाच्च दुग्धगतं तात्पर्यं बुध्यन्ते। प्रकरणज्ञानेनान्यार्थ-बोधप्रतिबन्धे सति जलाभावेऽपि तत्र जलग्रहणं न सम्भवेत्।

अतस्तन्मते योगरूढस्थलेऽभिधया रूढार्थावबोधे सति योगजार्थस्य न व्यञ्जना विना बोधः सम्भवति। यथा—

अबलानां श्रियं हृत्वा वारिवाहैः सहानिशम्।
तिष्ठन्ति चपला यत्र स कालः समुपस्थितः॥

अत्रावला-वारिवाह-चपला-शब्दाः स्त्रीमेघविद्युत्सु योगरूढा इति न केवलं योगदशयाऽशक्तानां धनमपहृत्य जलवाहकैः पुरुषैः सह पुंश्चल्यो रमन्त इति विशेषार्थस्यबोधः संभवति। अतो रूढार्थस्याभिधया बोधे सति द्वितीयस्य यौगिकार्थस्य व्यञ्जनया बोधः।

अन्यच्च। जगन्नाथो रसभावादीन् लक्ष्यक्रमव्यंग्यानपि मनुते यत्र तेषां प्रतीतिः विभावादिपर्यालोचनसापेक्षा भवति, परं तत्र वस्तुरूप एव ध्वनिः।

यथा— एवं वादिनि देवर्षौ पार्श्वे पितुरधोमुखी।
लीलाकमलपत्राणि गणयामास पार्वती॥

अत्र कुमारीस्वाभाव्यादन्यथाऽपि लीलापत्रगणनस्य संभवात् पर्यालोचन-सापेक्षा अनुभावाश्रिता लज्जाहर्षप्रतीतिरिति वाच्यार्थापेक्षया व्यंग्यस्य स्पष्टः पूर्वपश्चाद्भाविताकारः क्रमः। परं तस्य वस्तुव्यंग्यतास्वीकारे न रसादीनां लक्ष्यक्रमत्वं सिध्यति।

इतिहास—ध्वनेर्बीजानि रामायणादौ प्राचीनकाव्येऽपि वर्तमानान्यपि नाचार्य-निरूपितान्यासन्। तथाहि—'रविसंक्रान्त०' इत्यादौ पद्येऽत्यन्ततिरस्कृतवाच्यस्य ध्वनेः सत्त्वं पूर्वं दर्शितमेव। महाभारते च—

धृतिः क्षमा दया शौचं कारुण्यं वागनिष्ठुरा।
मित्राणां चानभिद्रोहः सप्तैताः समिधः श्रियः॥

अत्र समिच्छब्देऽत्यन्ततिरस्कृतवाच्यो ध्वनिः। भामहादिभिराचार्यैस्तु रूपकालंकारनिरूपणप्रसङ्गे संकेतितोऽपि न स प्रस्तुतः। यथा स सन्देहालंकार-प्रस्तावे 'तस्याः पाणिरयं नु मारुतचलत्पत्राङ्गुलिः पल्लव' इत्यादौ। अत्र संशयस्यौपम्यमूलत्वेनोपमालंकारस्य व्यंग्यतया तत्स्वीकरणमेव, परं न तैरा-चार्यैरस्यार्थस्य विवेचनं व्यधायीति ध्वनिकार एव प्रथम एतां व्यंग्यतां साधु साधितवान्। स ध्वनिं काव्यस्य मुख्यतमं तत्त्वं स्वीकृत्य रसानां व्यंग्यतां गुणीभावे च तेषां रसवदाद्यलंकारतां स्थापितवान्। तस्य सहृदयालोकोप-

नाम्नो ध्वन्यालोकस्य व्याख्या लोचनाख्या निर्मायाभिनवगुप्तो ध्वनिविरोधिना मतानि खण्डयित्वा ध्वनिसिद्धान्तं साध्वपूपुपत्।

पर कतिपये परम्परावादिन आचार्यास्तत्र विप्रतिपद्यन्ते। ध्वनिसिद्धान्तस्य मूल वैयाकरणाना स्फोटवादे सर्वप्रथम दृश्यते। तदनुसारेण प्रथम शब्द. पश्चाच्च घण्टानुरणनाकारेण तदुद्भवोऽर्थोऽपि ध्वनित्वेन स्वीक्रियते। यथाह भर्तृहरि-र्वाक्यपदीये—

'य: संयोगवियोगाभ्यां करणैरुपजन्यते।
स स्फोट शब्दजाश्शब्दा ध्वनयोऽन्यैरुदाहृता॥'

स स्फोटस्त्वन्त्यबुद्धिनिर्ग्राह्य एव। तदभ्यञ्जका वर्णा अपि ध्वनयः। तदुच्चारणे क्रियमाणे द्रुतविलम्बितादिवृत्तिभेदोऽपि ध्वनिपदवाच्य। एतत्सर्वं वाक्यपदीये—

प्रत्ययैरनुपाख्येयैर्ग्रहणानु गुणैस्तथा।
ध्वनिप्रकाशिते शब्दे स्वरूपमवधार्यते॥
अल्पीयसापि यत्नेन शब्दमुच्चारितं मतिः।
यदि वा नैव गृह्णाति वर्णं वा सकलं स्फुटम्॥
शब्दस्योर्ध्वमभिव्यक्तेर्वृत्तिभेदे तु वैकृता।
ध्वनय समुपोहन्ते स्फोटात्मा तैर्न भिद्यते॥

इत्यादिना वर्णितम्। इत्थ भर्तृहरिणा स्वीकृतेऽपि व्यङ्ग्यव्यञ्जकभावे नागेशा-न्तरा सर्वेऽपि वैयाकरणास्तत्रोदासत। पर नागेशभट्टेन निरूपितोऽय पक्ष 'मुख्यार्थ-बाधनिरपेक्षबोधजनको मुख्यार्थसम्बन्धासम्बन्धसाधारण प्रसिद्धाप्रसिद्धार्थविषयको वक्त्रादिवैशिष्ट्यज्ञानप्रतिभाद्युद्बुद्ध संस्कारविशेषो व्यञ्जना' (परमलघुमञ्जूषा) इत्यादिना। एव व्याकरणोपज्ञोऽयं ध्वनिवाद सहृदयालोकादेव प्रवृत्त।

अस्य विरोधिनस्तु नैयायिका, मीमासका वेदान्तिनश्च। तेषु नैयायिकास्त्रि-विधाल्लिङ्गाल्लिङ्गिज्ञानाद् व्यङ्ग्यत्वेन निरूपितस्यार्थस्य बोध मन्यते। पर तन्नूनेऽनुमाने व्याप्तिज्ञानस्यावश्यकत्वेन व्यङ्ग्येऽर्थे च तस्य व्यभिचरिततया न तद्‌बोध सभवति। यथा 'गतोऽस्तमर्क.' इत्यादौ वक्तृबोद्धव्यादिवैशिष्ट्यकृतोऽर्थबोध क्व व्याप्त्या सभवति तस्यापदार्थत्वात्। अनुमितोऽप्यसौ सर्वान् प्रत्येकधैव भवेन्न तु प्रतिव्यक्ति-भिन्न। महिमभट्टोऽमीषामनुमानवादिना मुख्यो व्यक्तिविवेककार। पश्चाच्च गुण-वृत्त्यैव व्यङ्ग्यार्थबोध स्वीकुर्वाणा लक्षणाया व्यञ्जनाया अन्तर्भावमकुर्वन्नैयायिका। जयन्तभट्टस्तु माध्यमतो विलक्षणता स्वीकुर्वन् तस्या अभावे विवादमेव—

'अथवा नेदृशी चर्चा कविभिः सह शोभते ।'
'परमगहनस्तर्कज्ञानामभूमिरयं नयः ॥' इत्याद्युक्त्वा त्यक्तवान् ।

मीमांसकाश्चाभिधायामेव व्यंजनामन्तर्भावयन्ति । तेष्वभिहितान्वयवादिनोऽन्वयार्थबोधेऽपि तात्पर्याख्या चतुर्थी वृत्तिं स्वीकुर्वते निमित्तेन । अन्विताभिधानवादिना वाक्यार्थं एव सङ्केतज्ञानं मन्वानानां मते च पदार्थोऽपि नाभिधाविषयस्तर्हि चतुर्थकक्षागतस्यार्थस्य तया बोध इति नोपपद्यते । वेदान्तिनोऽपि निर्विकल्पकज्ञानेनाखण्डबुद्धिना 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यादावखण्डमेव वाक्यार्थं बुद्धिविषयं तदर्थं चाभिधामेव समर्थां स्वीकुर्वते । परं सविकल्पकज्ञानदशायामविद्याग्रस्तैस्तैरपि पदपदार्थकल्पना विधेया । तदा च मत व्यंग्यत्वेनेष्टस्यार्थस्याभिधया प्रतीतिः स्यात् ।

इत्थं सर्वेषामेतेषां मतानि निरस्तदय ध्वनिसिद्धान्तं प्रस्थापितवान् मम्मटः । परमाश्चर्यमत्र यद् वक्रोक्तावेव व्यञ्जना स्वीकुर्वाणस्य कुन्तकस्य न चर्चा कुत्रापि साहित्यदर्पणादृते । तत्कर्ताऽपि स्वोपजीव्यस्य काव्यप्रकाशस्यैव खण्डने बद्धपरिकरो वाक्यमयमुक्त्वा विरराम ध्वनिं स्वीकुर्वन्नपि । जगन्नाथस्य तु ग्रन्थ एवापूर्ण इति विवक्तव्यम् । एवं साधीयान् व्यञ्जनामार्गः ।

—०—

# लक्षणावाद:

भावा हृदयसरोवर्तिन सलिलमिव जीवनमुद्वेल्लयन्ति । प्रभवति च तेषामुद्रेक परीवाहाय । सोऽपि वाचा चेष्टाभिश्च सम्भवतीति जनसम्मुख तेषा प्रकाशन वाण्या मुख्य प्रयोजनम् । साऽपि जाह्नवीव गिरिकुहराज्जनमुखान्नि सरन्ती यथोत्तर पटुप्रवाहा सम्पद्यते महानद्या इव साहित्या स्वरूपमासादयतीति न कस्याप्यविदितम् । साहिती च वैचित्र्याधायिपदार्थनिर्भरा तारुण्यविलासविलासितलावण्यसातिशयकामनीयका कमनीया कामिनीव रसिकाना रसातिरेकान्मनो मदयति । वैचित्र्य च लोकोत्तरमार्गानुसरणेन वैदग्ध्यभगीभणितया । यथा कस्यचिद् गेहेनर्दिन परपरामक्षमीरोर्भीरुता प्रकटयितु 'ग्रामसिंहोऽयम्' इति प्रयोग । ग्रामसिहश्च कुक्कुरो य खलु ग्रामेऽकुतोभय स्वबन्धूनशस्त्राञ्जनाश्च दृष्ट्वा वर्धितोत्साहो भषते, पर लगुडहस्ते, प्रबले वा समापतति दन्तानेव दर्शयति, लागूलमेव चालयति । तथाविधा वृत्तिर्नरस्य यथाऽनेन शब्देन द्योत्यते न तथा कुक्कुरशब्दप्रयोगेण । इयमेव वक्रता वचासि रोचयति, चेतश्चमत्करोति, भाव प्रसादयति ।

नात्र शब्दस्य प्रचलितोऽर्थश्चित्ते विश्रान्ति लभत इति तेन लक्षितस्य तत्सम्बन्धिनो भिन्नार्थस्य लक्षणादिय वक्रता लक्षणा वृत्तिरिति प्रसिद्धा। अस्या स्वरूपनिर्वाहाय तत्त्वत्रयमावश्यकम्—मुख्ये सकेतितेऽर्थे बाधोऽसगति , लक्ष्यमाणस्यान्यार्थस्य वाच्यार्थेन सह सम्बन्ध , रूढिरन्यार्थसूचनाकार प्रयोजन वा निमित्तम् । तदेवोक्तम्—

मुख्यार्थबाधे तद्योगे रूढितोऽथ प्रयोजनात् ।
अन्योऽर्थो लक्ष्यते यत्सा लक्षणाऽऽरोपिता क्रिया ॥

अत्रारोपिता क्रियेति विशेषार्थम् । आरोपस्तथाऽवर्तमानस्य पदार्थस्य तथा वर्तमानेन सहाभेदीकरणम् । यथा सर्वथा भिन्नयोर्मुखचन्द्रयो सादृश्यातिशयमहिम्नाऽभेदीकरण मुख चन्द्र इति । अय चाभेदारोप परस्परसम्बन्धसापेक्ष । सम्बन्धश्चानेकविध, तादर्थ्यात् समवायात् आश्रयाश्रयिभावेन, अङ्गाङ्गिभावेन, स्वस्वामिभावेन, कार्यकारणभावेन सादृश्येन च । यथा चाग्निपुराण उक्तम्—

अभिधेयेन सम्बन्धात् सामीप्यात्समवायतः ।
वैपरीत्यात् क्रियायोगाल्लक्षणा पञ्चधा मता ॥

एषु च सम्बन्धेषु यत्र सादृश्यकृत सम्बन्ध स एव गुणकृतस्तदाश्रिता च गौणी लक्षणेत्युच्यते, तद्व्यतिरिक्ता तु शुद्धा । यथा 'सिंहो माणवक' अत्र मानुष्यकमूल सिंहेन सहानुपपन्नोऽभेदान्वयो माणवकस्य सिंहवर्तिसाहसनिर्भीकत्वादिगुणविशिष्टता लक्षयति, गुणकृतोऽयमारोप । एतदतिरिक्ताश्चान्ये सम्बन्धा यत्र भवन्ति सा शुद्धा लक्षणा,यथा—करशाखविषये 'करोऽयम्' इति प्रयोग । यथा वा 'गगाया घोष' इत्यत्र सामीप्यसम्बन्धात् गगाशब्दस्य तीरपदे लक्षणा ।

एषा च क्वचित् सकेतितमर्थमपरित्यज्यैवार्थान्तरबोधनस्थले भवति, परञ्च यदा शब्द. स्वार्थं सर्वथा परित्यज्यान्यार्थं प्रकटयति । यथा—

स्निग्धश्यामलकान्तिलिप्तवियतो वेल्लद्बलाका घना
वाता शीकरिण पयोदसुहृदामानन्दकेका कला ।
काम सन्तु, दृढ कठोरहृदयो रामोऽस्मि सर्वं सहे,
वैदेही तु कथ भविष्यति हहा हा देवि धीरा भव ॥

अत्र वक्तू रामस्य स्वविषये 'रामोऽस्मी'ति कथन न सगच्छत इति सीतानिर्वासनवनवासकष्टसहिष्णुत्वादिविशिष्टरामत्वे लक्षणा । अत्र रामशब्दो न स्वमर्थं जहातीति साऽजहल्लक्षणा, उपादानलक्षणा वा कथ्यते । स्वार्थं सर्वथा परित्यज्यार्थान्तर प्रकटयति शब्दे तु जहल्लक्षणा लक्षणलक्षणा वा भवति । यथाऽत्यन्तमपकारिण प्रति—

उपकृत बहु तत्र किमुच्यते सुजनता प्रथिता भवता परम् ।
विदधदीदृशमेव सदा सखे सुखितमास्स्व तत शरदां शतम् ॥

अत्रापकारिणि न घटतेऽयमर्थ इति नितरामपकृत त्वया मम किं वक्तव्य तव दौर्जन्यस्य विषये । न त्वादृशा जीवनार्हा इति विपरीतोऽर्थोऽत्र बोध्यते ।

एषा लक्षणा क्वचन लक्ष्ये लक्षिते च शब्देन गृहीतेऽन्यत्र च लक्षिते लक्ष्येण ग्रस्ते भवति । तदा पूर्वस्मिन् स्थले विषयविषयिणो सत्त्वे सारोपा, परस्मिन् च साध्यवसाना । यथा—'आयुर्घृतम्' । अत्रायुष्कारण घृतमित्यर्थे द्वयोरभेदेनोक्ति । घृतस्यायुषा निगरणे तु सैव साध्यवसाना ।

लक्षणा च रूढे प्रयोजनाद् वा भवति । रूढौ यथा 'वदति बिसिनीपत्रशयनम्' इत्यादौ वदति क्रिया चेतनधर्मिणि रूढा बिसिनीपत्रमचेतनेऽसगच्छमाना बोधयतीति लक्षयति । यत्र तु किमपि प्रयोजन प्रकटयितु लक्षणोपास्यते तत्र प्रयोजनवती ।

यथा पूर्वोदाहृते -'स्निग्धश्यामलकान्ति' इत्यादौ रामोऽस्मीति लक्षकशब्दस्य प्रयोगो हृदयस्य कठोरतातिशयं व्यनक्ति । प्रयोजनञ्चेदं व्यञ्जनयैव बोध्यम् । यथा—

> लक्षणोपास्यते यस्य कृते तत्तु प्रयोजनम् ।
> यया प्रत्याय्यते सा स्याद् व्यञ्जना लक्षणाश्रया ॥ (सा. द. २)

न चेदं पुनर्लक्षणया बोध्येत, शब्दबुद्धिकर्मणा विरम्य व्यापाराभावात् । अस्तु नाम बादिसल्लोपः । परं न तत्र लक्षणाया प्रसक्ति । यतो नात्र मुख्यार्थे बाधः ; न च रूढिप्रयोजनयोरन्यतरन्निमित्तम् । नापि प्रयोजन-विशिष्टे लक्षणा, तदापि प्रयोजनान्तरमपेक्षितं स्यात् । तद्विशिष्टेऽपि लक्षणास्वीकारे पुन. प्रयोजनमिति नितरामनवस्थाप्रसंग: । अत एवोक्तम्—

> लक्ष्यं न मुख्यं नाप्यत्र बाधो योग. फलेन नो ।
> एवमप्यनवस्था स्यात् सा मूलक्षयकारिणी ॥ (का. प्र. २)

प्रयोजनवत्यपि व्यंग्यस्य गूढत्वागूढत्वेन द्विविधा । एवं मम्मटोक्तानुसारेण लक्षणा प्रथमं रूढा प्रयोजनवतीति द्विविधा । द्वितीयाऽपि शुद्धा गौणी चेति द्विविधा । गौणी च सारोपा, साध्यवसानेति पुनर्द्विधा । शुद्धा खलूपादानलक्षणा लक्षणलक्षणेति च द्विप्रकारा सती पुनः सारोपा साध्यवसाना चेति द्विविधा । एवं षट् प्रयोजनवत्या एकश्च रूढ्या इति सप्तसु भेदेषु पुनः प्रयोजनवत्या गूढव्यंग्यत्वेनागूढव्यंग्यत्वेन च द्वौ भेदौ । एवं सपीड्य प्रयोजनवती द्वादशधा, रूढा त्वेकविधैवेति लक्षणा त्रयोदशविधा । विश्वनाथस्तु लक्षणा गौणी शुद्धा चेति द्विविधा पुनारूढा प्रयोजनवतीति कृत्वा चतुर्धा, तत उपादानलक्षणा लक्षणलक्षणा चेति साऽष्टधा । ततः सारोपा साध्यवसाना चेति षोडशधा । पुनः प्रयोजनवत्या व्यंग्यस्य गूढत्वागूढत्वाभ्या द्वौ भेदाविति सा षोडशधा । प्रयोजनस्य धर्मगतत्वेन धर्मिगतत्वेन च द्वैविध्यमिति द्वात्रिंशत्प्रकारा तदाश्रया । रूढाया अष्टाभिर्भेदैः सह मिलित्वा चत्वारिंशद् भेदाः । पुनर्लक्षणायाः पदवाक्यगतत्वेनऽशीतिधा सा इति स्वीकरोति ।

केचिच्च लक्षणाय. जहदजहत्स्वार्थाख्यं तृतीयं भेदमपि स्वीकुर्वन्ति । क्वचिदंशेऽर्थत्यागः क्वचिन्नेति तस्य मूलम् । परं नैतत्स्वीकारस्यावश्यकता । जहत्स्वार्थायामेव तस्य अन्तर्भावात् ।

लक्षणाया. स्वरूपविषयेऽपि त्रिविधा विप्रतिपत्तयो विदुषाम् । तथाहि तत्र प्राचां मते लक्षणायाः परिभाषा—

> शब्दव्यापारतो यस्य प्रतीतिस्तस्य मुख्यता ।
> अर्थावसेयस्य पुनर्लक्ष्यमाणत्वमुच्यते ॥ (अभिधावृत्तिमातृका)

इति । अन्येषां च लक्षणांश वयसम्बन्धेनाशक्यप्रतिपत्तिरिति । कुमारिलभट्टस्य लक्षणं तु—मानान्तरविरोधे तु मुख्यार्थस्य परिग्रहे ।

अभिधेयाविनाभूतप्रतीतिर्लक्षणोच्यते ॥ इत्यस्ति ।

केचित्तु शक्ये शक्यतावच्छेदकारोपमेव लक्षणां स्वीकुर्वन्ति । अन्ये च वक्तुस्तात्पर्यमेव । अन्वयानुपपत्तिः तात्पर्यानुपपत्तिर्वा लक्षणेरपि मतम् । परमस्ति किमप्यस्वारस्यम् । तथाहि—

यदि वाच्यार्थसम्बन्धेनान्यार्थस्य स्मरणमेव लक्षणेत्युच्यते, तत्तु नोचितम् । तथाहि स्मरणं स्वयमपि ज्ञानम् । अर्थबोधस्य कारणं न ज्ञानमपि तु वृत्तिः । सा च सम्बन्धविशेषः ।

कुमारिलस्य लक्षणेऽपि च वाच्यार्थस्याविनाभावेनान्यार्थज्ञानमेव लक्षणेति स्वीकृतम् । अतस्तत्रापि पूर्ववर्णितैवापत्तिः । शक्यतावच्छेदकस्यारोपोऽपि न तावल्लक्षणा । तादृशारोपस्वीकारे हि—

कचतस्त्रस्यति वदनं वदनात् कुचकुड्मलं बिभेति ।
मध्याद् बिभेति नयनं नयनादधरः समुद्विजति ॥

अत्र न लक्षणाया उपयोगः । तथाहि पद्येऽस्मिन् कचानां राहौ, मुखस्य चन्द्रे, कुचकुड्मलस्य कमले, मध्यस्य सिंहे, नयनस्य मृगे, अधरस्य च पल्लवार्थे लक्षणा । आरोपे चारोपणीयेन सहारोपितस्याभेदप्रतीतिर्भवति, सत्यां चाभेदप्रतीतौ लक्षिता राहुप्रभृतयः केशादभिन्ना एव भवेयुः । ततः प्रस्तुतं तात्पर्यमेवापह्न्येत ।

नापि तात्पर्यं लक्षणा, वक्ष्यमाणे हि मते तात्पर्यानुपपत्तिरपि लक्षणाया कारणत्वेन मता । परं स्वयं तात्पर्ये लक्षणारूपेण स्वीकृतेऽनुपपत्तेर्मूलमेवोपहन्येत । मुख्यार्थस्य बाधोऽपि लक्षणाया मूलत्वेन स्वीकर्तुं न शक्यः 'काकेभ्यो दधि रक्ष्यताम्'. अत्राप्यार्थे । अत्र हि न तावद् वाच्यार्थबोधे कोऽपि बाधः । परं वक्तुस्तात्पर्यं न सिध्यति । दध्युपघातकेभ्यो हि दध्नोऽत्र रक्षणमभीष्टम् । तात्पर्यानुपपत्तिरत्र विद्यत एव ।

परं तात्पर्यानुपपत्तिः किंरूपा ? वाच्यार्थधर्मस्तात्पर्यान्वयविषयीभूतो वा धर्मो यत्र पृथक् स्यादथवा मुख्यार्थत्वविशिष्टस्याभावो भवेत् । तत्र नाद्यः, तथा सति न लक्षणायाः प्रयोजनम्, गंगायां घोष इत्यादौ गंगाशब्दस्य मुख्यार्थधर्मो गंगात्वम्, तस्य तात्पर्यविषयीभूतोऽन्वयः प्रवाहादिना स्यादेव । एवं च गंगातटस्य घोषस्य चाधाराधेयसम्बन्धवत्त्वात्तयोरन्वयः, स धर्मश्च तटे वर्तते, तद्विशिष्टं च गंगात्वम्, तत्र हि शैत्यं पावनत्वं च तिष्ठतः । एवं गंगायां तात्पर्यविषयान्वयित्वविशिष्टत्वं गंगापदे वर्तत एव । एवं मुख्यार्थतावच्छेदकरूपेण तात्पर्यानुपपत्तावेव लक्षणेति सिद्धम् ।

यथा गंगायां घोष इत्यत्र मुख्यार्थो गंगा तद्धर्मो गंगात्वम्, तस्य विशेषणं च तटः। घोषस्य तेन सम्बन्धेन न गंगापदेन सहाधाराधेयसम्बन्धाकारकोऽन्वय इति तात्पर्यानुपपत्तिः। अतो नान्वयानुपपत्तिर्लक्षणाबीजम्, मीनशैवालप्रभृतिभिः सहापि गंगापदस्यान्वयसम्बन्धात्। न च केवलं तात्पर्यानुपपत्तिरेव लक्षणा बीजम्, तथाहि वक्त्रा किमपि कथिते यत्र कुत्रापि तात्पर्याभावे लक्षणा स्यादिति रूढि-प्रयोजनयोरेकतरस्यावश्यमपेक्षितत्वम्। अतः शक्यसम्बन्धो लक्षणेति लक्षणं सगतम्। तस्याशयः—शक्येन मुख्यार्थेन सह सम्बन्धे सत्यशक्यार्थप्रतीतिर्यदा भवति, स व्यापारो लक्षणा। इदं जगन्नाथस्य मतम्। विश्वनाथस्य लक्षणमपि नासंगतम्। यथा—

मुख्यार्थबाधे तद्युक्तो ययाऽन्योऽर्थः प्रतीयते।
रूढेः प्रयोजनाद् वाऽसौ लक्षणा शक्तिरर्पिता॥ (सा. द.)

एतदनुसारेण मुख्यार्थे वाच्यार्थेऽविश्रान्तिमूले बाधे तेन चलज्जलप्रवाहरूपेण गंगापदेन सह सामीप्यसम्बन्धेन युक्तोऽन्योऽर्थस्तटाकारको लक्षणया बोध्यते। तात्पर्यानुपपत्तिश्चात्र लक्षणाया मूलम्। एवं लक्षणाभिधावोधितेऽर्थे तात्पर्यानधिगतावेव भवतीति साऽभिधापुच्छभूतेव। तस्याः प्रयोगं च भाक्तं गुणवृत्ति वदन्त्याचार्याः। परं भक्तिर्गुणवृत्तिर्वा विशेषेण सादृश्यमूलाया लक्षणायां भवति। सा च रूपकालंकारस्यातिशयोक्तेश्च मूलम्। शुद्धा लक्षणा तु प्रयोजनवती ध्वनेरविवक्षितवाच्यस्य बीजम्। अतः काव्यवृद्धिः सततं सोपयुज्यते चमत्कारि च तदन्वितं काव्यं सम्पद्यते।

—०—

# काव्येषु नाटकं रम्यम्

यथा मानवस्य भौतिकमुदन्तजातमितिहासः स्फुटीकरोति, तथैव तदीयान् नहि नहि, समेषामपि प्राणिनां मानसान् व्यापारान् विशकलयति साहित्ती। तस्यां हि स्थूलकार्याणां मूलभूता भावा एव प्रकाश्यन्ते। साहित्ये च विशालवाङ्मयाभिन्ने नवनीतमिव दुग्धस्य काव्यं तस्य सारः। तद्धि रम्यतमं मनोवृत्तीरुपाश्रयति। तत्रापि नाटकं रूपकमिति यावत्, सर्वाधिकं रमणीयमुच्यते। काव्यस्य हि दृश्यश्रव्यत्वेन द्वैविध्ये दृश्यं रूपकम् तत्र नटेऽनुकार्यवस्तुन आरोपात् ।तथाहि—

'तद्रूपारोपात्तु रूपकम्'। (सा. द.)

वस्तु, नेता रसश्चेति त्रयाणां तत्त्वानामुभयत्र सामान्येन स्थितावपि चतुर्थमभिनयात्मकं तत्राधिकम्। अभिनयश्च तावदवस्थानुकारः। लोके मानवस्य परिस्थितिविशेषेषु यादृशी स्थितिः संभवति सा रूपके दर्शकाणां पुरतः प्रस्तुता सती व्यतीतमपि वृत्तं प्रत्यक्षं कारयति। प्रकृतिसिद्धं चैतत्। घटितपूर्वा शब्दजालेन वर्णिता रोचिकाऽपि घटना न तथा वशीकरोति मनो यथा स्वल्पमपि पुरस्ताद् वृत्ता। दिने दिने स्वभावोपगता घटना न जनेन लक्ष्यते न च समष्टिरूपेण तथा गण्यते। परं सैव यदा रंगपीठेऽनुकर्तृभिस्तथैव प्रस्तूयते विविधभावव्यंजनाभिः सह, प्रत्यक्षायिता काममपूर्वां सविदं वेदयति सामाजिकान्, निमज्जयति परमानन्दमहोदधौ, विस्मारयति स्वपरसंविभागस्य, लुम्पति यथार्थजीवनस्य द्वन्द्वान्।

सर्वव्यापिन आनन्दमयस्य प्रकाशात्मनो ब्रह्मण एवांशो लोकाधिकरणो जीव इति वेदैरुपनिषद्भिश्चोदितम्।

> द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते।
> तयोरेकः पिप्पलं स्वाद्वत्ति, अनश्नन्नन्यो अभिचाकशीति॥

अयं कर्मफलभोक्ता जीव इन्द्रियाणि समनास्यधिष्ठाय जगति विद्यमानोऽपि न परमानन्दमयीं स्वस्थितिं सर्वथा विमुञ्चति। तां लब्धुमेव निरन्तरं प्रयतते। कलानां

विकासेन, सौन्दर्योपासनेन, ऐन्द्रियोपभोगेन, विविधैर्विलासराशिभिरानन्दमेवायमनुबुभूषति। तत एवोक्तम्—

'रसो वै सः। रस ह्येवायं लब्ध्वाऽऽनन्दी भवति'।

अतएव स मनो रञ्जयितुं विविधानि साधनानि समन्तादन्वेषयति। एतां प्रवृत्तिमभिजानद्भिर्विपश्चिद्भिराचार्यैः काव्ये नाटके विशेषतो रसपरिपाको मुख्यत्वेन स्वीकृतः। स एव प्रधानं प्रयोजनं परनिर्वृतिरूपम्। नाटके च तस्य साधु समास्वादो भवति विविधस्य लोकवृत्तस्य तत्र परिचयः। देवा मानवा अमानवास्तिर्यञ्चः सर्वेऽप्यनेन रसाप्लुताः क्रियन्ते। कालिदासस्तावदस्य महत्त्वं साधु गीतवान्—

देवानामिदमामनन्ति मुनयः कान्तं क्रतुं चाक्षुषं
रुद्रेणेदमुमाकृतव्यतिकरे स्वाङ्गे विभक्तं द्विधा।
त्रैगुण्योद्भवमत्र लोकचरितं नाना रसं दृश्यते
नाट्यं भिन्नरुचेर्जनस्य बहुधाऽप्येकं समाराधनम्॥ (माल० १।४)

कीदृशमुदात्तस्वरूपमुपवर्णितमत्र कविना नाट्यस्य! नाटकं च तस्यैव प्रकार इति न तावद्विद्यते। रूपकमेव तस्याभिप्रायः।

आर्याणां संस्कृतिर्वेदमूला। सर्वा अपि प्रेरणास्तत एव गृह्यन्ते तैः। अत एव नाट्यमपि तत एवोद्भूतमिति प्रतिपादितं भरतेन—

"जग्राह पाठ्यमृग्वेदात् सामभ्यो गीतमेव च।
यजुर्वेदादभिनयान् रसानाथर्वणादपि"॥१।१॥

पञ्चमवेदत्वेन चास्य नाट्यस्य महिमा गीतः। सर्वप्रथममिन्द्रध्वजमहोत्सवे तस्य प्रयोग इति नाट्यशास्त्रे वर्णनम्—

अयं ध्वजमहः श्रीमान्महेन्द्रस्य प्रवर्तते।
अत्रेदानीमयं वेदो नाट्यसंज्ञः प्रयुज्यताम्॥ (ना० शा० १।२१)

लोकवृत्तसारसंग्रहस्य विद्यमानतया न किमपि परिहीयतेऽत्र। ब्रह्मण उक्तिरेवेदं साधयति—

भवतां देवतानां च शुभाशुभविकल्पकः।
कर्मभावान्वयापेक्षी नाट्यवेदो मया कृतः॥
नैकान्ततोऽत्र भवतां देवानां चापि भावनम्।
त्रैलोक्यस्यास्य सर्वस्य नाट्यं भावानुकीर्तनम्॥ (ना. शा. १।७२-७३)

यत्किमपि लोके दृश्यतेऽनुभूयते, श्रूयते वा, तदखिलमपि प्रत्यक्षतामापद्यते सामाजिकानामिति कथं न भवेत्तेषां परितोषः। अत्र हि क्वापि द्वन्द्वः, क्वचित्क्रीडा, क्वाऽपि व्यवहाराः, क्वापि साम्यम्, कुत्रापि परिहासोऽन्यत्र युद्धम्, इतो विलासोऽपरत्र वधः

प्रदर्श्यते। धर्मिणा धर्माचरणं, कामिना च कामेष्वासक्ति (१७३-७४) विविधभावानां जीवनस्य दशाना ज्ञापकं लोकस्य वृत्तस्य यथावदनुकरणमेतस्मिन् (११७) न केवलमवस्था-प्रत्यक्षीकरणमत्र, सन्मार्गप्रवर्तनं धृतिप्रदानं चार्तानाम्। गरीयसा लघीयसा मध्य-मानां च मनोरञ्जनद्वारेण शिक्षाप्रदम्, सर्वेषामपि दुःखिनां वा विश्रान्तिदम्। शास्त्रम्, शिल्पम्, सकला अपि विद्या, निखिला अपि कला, योग, कर्म वाऽपि तत्र निबध्यते। (७८-८२) नेदं स्वोपज्ञं तावत्, लोकस्य प्रवृत्तिरेव याथार्थ्येनात्र सुखदुःखमयी साभिनया नाट्ये प्रस्तूयते। अतएव प्रकृतिरत्र वर्ण्या लोकधर्मी नाट्यधर्मीति च द्वैविध्येन वर्णिता। सा च याथार्थ्येनाविसंवादिनी लोकधर्मीति कलाविन्यासेन रुचिरीकृता च नाट्यधर्मीति प्रतिपादिता। तेनैव हि रसप्रतिपत्ति।

जीवनं नैकधा सर्वेषाम्, उत्थानं पतनं च, सुखं दुःखम् च, हासो रोदनं च, प्रेम घृणाऽपि, रोषः प्रसादश्च, हर्षः शोकोऽपीति वैविध्यं तत्र। एकस्यैव जीवने ता सकला अप्यवस्था, यथाकालं समापतन्ति। तेन न तावन्नाट्यं केवलमानन्दमयं सम्भवति। अत क्वाऽपि शृङ्गारस्य, क्वापि करुणस्य, अपरत्र च वीरस्यैव परिपाकः क्रियते। न च करुणे प्रधाने सामाजिकानां शोकोदयान्न तत्रानन्दानुभूति, पूर्ववृत्तस्यैव प्रस्तुतीकरणात्, अनुकार्यस्य तत्राविद्यमानतया, नटे च कस्यापि भावस्याभावात् शोकोदयाप्रसङ्गात्। अभिनयस्य च दर्शनाच्छ्रवणाच्च वासनाकारो भाव सामाजिकानां सहृदोद्भावितो हृदयं द्रावयन् कामपि परमानन्दमयीमवस्थामनुभावयति। तदा लोक किल विस्मृतान्यानुभवश्चिन्मयीं निर्वृतिं परमामास्वादयति।

कटुप्राय खल्वनुभवो जीवनस्य। दैनिके व्यवहारे बहुधा वयं जीवितेऽपि खेदं भजामस्तद्व्यतिरिक्तं च किमपि दिदृक्षाम। अनवसितश्रमश्रान्ता क्षणमप्येकं विश्रामसुखमनुबुभूषाम। नेयं पलायनात्मिका प्रवृत्तिर्जीवितमुपेक्ष्य, अपितु द्विगुणं बलमेवाधीयतेऽनेन। 'सुस्थे चित्ते बुद्धय सस्फुरन्ति' हि। विश्रामार्थिना च मनोरञ्जनस्य साधनं किमप्यन्विष्यते। नाट्यं च साधिष्ठ उपाय। अनेन तस्य वृत्तिस्तुष्यति। एक श्रमिकोऽपि परिहितराजार्हवस्त्रस्तस्य भूमिकां भजन् अनुकुर्वाणस्तस्यावस्था परं तोषमनुभवति परिचिनोति चावस्थान्तरम्। एवं स्वात्मविस्तारं सपद्यते, हीनताभावना च लुप्यते। व्यङ्ग्यात्मकानि रूपकाणि दृष्ट्वा च नृपा धनिकाश्च स्वस्खलितानि साधु विभावयितुं क्षमा। विविधैर्दृश्यैं कृता विस्मयसृष्टिर्विकासयति लोकस्य चेत।

भावानुसारेणैव करुणप्रधानानि (Tragedies) हास्यप्रधानानि प्रहसनानि (Comedies) एकाङ्कानि (one act plays) व्यङ्ग्यरूपकाणि भाणादयश्चै-तामेव प्रवृत्तिमनुरुध्य विहिता। पाश्चात्येषु नाटकेषु सङ्ग्रामो वधो भोजनं चुम्बनालिङ्ग-नानि च रङ्गमञ्चे प्रस्तूयन्ते। परं संस्कृतनाटकानां परम्परा नैतत् साधु मन्यते।

कामं तेषां लोके प्रतिदिनमनुभवः परं समाजः खलु किमपि वैशिष्ट्यमभिकामयते स्वविस्मरणाय। सितां रसयितुमभिलषन् कटुकद्रूनः पुनस्तस्यैवोपस्थितो क्षिप्त एव।

अधुना चलचित्राणि सर्वतः प्रचलितानि येषु गानं क्रीडा, संग्रामः, वधः, दूरादुत्प्लवनं, वायुयानयुद्धम्, पोतभ्रंशः, सेतुध्वंसः, यानपतनम् किंबहुना प्रत्युत परिवर्तमानानि प्राकृतदृश्यान्यपि याथार्थ्येन दर्श्यन्ते। कौतूहलस्य मनोरमणस्य च साधीयसी पूर्तिस्तैः सम्पद्यते इति नात्र विवादलेशः। परं न जनो विस्मरति कदापि यच्चित्रमिदम्। न नाटकस्य व्यर्थता तस्यास्तित्वेन साध्यते। परं स्वयमेव मन्दादरा जना नाटकेषु। शोभने सुलभसर्वसाधने रंगमंचे कुशला अभिनेतारः पटीयसी कृतिमभिनयेयुश्चेत् स्मरेदपि न लोकश्चलचित्रस्य। स्वजीवनस्य प्रत्यक्षायितं यथा नाटकेन न तथा चित्रैः। गानं नृत्यमातोद्यमभिनयश्च चत्वार्यंगानि निपुणं प्रयुक्तानि तिरश्चोऽपि रंजयन्ति का कथा मानवानाम्? अतः साध्विदमुक्तम्—

'काव्येषु नाटकं रम्यम्' इति।

# आदि-कविर्वाल्मीकिः

कूजन्तं रामरामेति मधुरं मधुराक्षरम् ।
आरुह्य कविता शाखां वन्दे वाल्मीकि कोकिलम् ॥

अहो परमकारुणिकस्य स्वप्रतिभाप्रवर्तितकाव्यपीयूषप्रवाहस्य भगवतो वाल्मीकेर्महिमा यस्याद्यापि चरमपरिपाका सरलाऽपि भावगहना, ऋजुरपि नानावृत्तकुटिला, वर्णितभुवनाभिरामरामाऽपि योजितोचितविरामा शोभना मृद्वीकापाकस्फीतरसा कविता वर्षाणामनेकसाहस्र्यामतीतायामपि जगन्मानसं स्वरसैः सरसीकरोति । निन्दन्तु नाम केऽप्यप्रमाणयन्तो महर्षि परं खिद्यते विश्वोपकारकरणानां तादृशानां प्रतिभाप्रभाकराणामुदन्तमनुपलभ्य । सर्वत्र द्विजोत्तमत्वेन वर्णितोऽप्ययं महर्षिः प्रामाणिकोदन्तालाभादद्य महत्तराणामेव (मेहतर) पूर्वजत्वेन ख्याप्यते इति महतो विस्मयस्य विषयः ।

यथाश्रुति पूर्वमयं रत्नाकरनामा विप्रवंशभूषणोऽपि दुर्दैववशात् पाटच्चरवृत्तिमाश्रयन् मार्गकण्टकीभूय पान्थानवलुण्ठ्य तदेव धनमुपजीवतिस्म । कदाचित्तस्य बन्धनमुपगतो देवर्षिर्नारदः 'किमिति स्वार्थ-निरतेऽपि परिजने नृशंसामुमपराधमाचरसि । तव धनस्य भागमिच्छन्त एते न त्वत्कृतस्य पापफलस्यांशभागिनः । कथं स्वपरलोकं क्लेशयसि पापाचार' इति बोधितः कौटुम्बिकैश्च न्यक्कृतस्तमेव कारुणिकमृषिं शरणमगात् । देवर्षिस्तु सकलदुरितापनोदक्षमं मन्त्रराजं तस्मा उपदिश्य 'कल्याणं तेऽस्तु' इत्याशीभिस्तं नियुज्यायात् । रत्नाकरश्चोन्मुद्रितहृदयचक्षुष्को विरागस्तत्रैव निरुद्धाखिलवृत्तिर्नितरां संयतो रामेति मन्त्रमजपत् । तपोनिलीनस्य तस्य कायो वम्रीभिरात्मसात्कृतो वल्मीकभावमापेदे । तेन वल्मीकादुत्थित इति वाल्मीकिसंज्ञया व्यपदिष्टो लोकेनेति ।

महर्षिरवमापन्नस्यास्याश्रमपदं तमसायाः (टोंस) सरितस्तीरेऽवर्ततेति प्रसिद्धम् । भारतीय-परम्परा प्रथममेनं संस्कृतस्य कविं वर्णयति । नातः पूर्वं लोके पद्यमुपायुज्यत

वेदेष्वेव तस्य वृत्ते । तप कठोराणामपि तादृशामृषीणां वीततामस मानस मृदुतम भवतीति विरोधिनी विस्मयजननी च वृत्ति । कदाचित्कुशसमिदाद्यानयनाय वन गतो विहरत क्रौञ्च ( बगुला ) मिथुनस्य मध्याद् व्याधेन निहत प्रिय क्रौञ्ची च विरहविधुरा करुणकरुण विलपन्ती निभाल्य करुणा—तरलित मना सहसैव शापव्याजमाणमपि सरसमिद पद्यमुज्जगार—

मा निषाद प्रतिष्ठा त्वमगम शाश्वती समा ।
यत्क्रौञ्चमिथुनादेकमवधी काममोहितम् ॥

अभूच्चायमनुष्टुभ प्रथम श्लोको जगति । तत परमेष्ठिना चोदितो नारदोदित वृत्तमाश्रित्य स्वोपज्ञ रामायणमहाकाव्यमरीरचत् ।

कथेय परवर्तिभि कविभिर्बहुश सूचिता । ध्वन्यालोककृदानन्दवर्धन स्वग्रन्थे व्यग्रार्थं वर्णयन्नलिखत्—

काव्यस्यात्मा स एवार्थस्तथा चादिकवे पुरा ।
क्रौञ्चद्वन्द्ववियोगोत्थ शोक श्लोकत्वमागत ॥

भवभूतिरपि स्वनाटक उत्तररामचरिते वृत्तमिद सचिकेत, महाकवि कालिदासश्च सीतात्यागप्रसग उदाहरत्—

तामभ्यगच्छद् रुदितानुसारी मुनि कुशेध्माहरणाय यात ।
निषाद विद्धाण्डज दर्शनोत्थ श्लोकत्वमापद्यत यस्य शोक ॥ (र घ )

अथ हेतुर्मदसौ सस्कृत आदिकविपद समाजयति ।

महर्षेरस्य कृति काण्डषट्कनिबद्धा, रामकथाया जगति प्रवर्तिका, रामायणाभिधाऽऽदिकाव्यसम्मानभागिनी परमरमणीया । बुद्धिवादाकुले आधुनिके जगति यत्र न जन स्वपितरपि विश्वसिति तर्कप्रिय, राम न विश्वसितु कालदृशाऽस्यादिकाव्यत्वे पर सरससरसया मधुरमधुरया सरलसरलया भावतरङ्गया सहज प्रसृतया तयाऽसमग्रासृतिमिव-धनीयते हृत्सहृदयजनमनोमन्यनया रचनया, रसानुगुणं प्रसादादिभिगदो गणनीयतामेवाहृति । परिनिष्ठितमेय शैली वल्मीकजन्मनोऽस्मा त्प्रवृत्ता व्यासमपि कृतार्थयन्ती कालिदासकाव्याम्बुधौ समाविशत् । न तत पर दृश्यते तादृश रामनीयक भजन्तीति विनाश्वाद्यानुमायिनोऽद्यतनामाह्वयते । रामकथाऽत्र प्रचारिता रसम विषाय देशमिम पावयन्ती मानवमानसानि कृतकपद देशान्तराण्यपि पावयामास । वक्तुं दिशवमि येन केनापि यथा स्यादितिमितय यथा भारतीया सस्कृतिमपि तत्र तत्र समदिशविति महानुपकारोऽनया कृत भाषाणामिति विभावनीय सुधीभि ।

बुद्धिवादोपहता पण्डितम्मन्या अनेके जना अद्य रामकथा कपोलकल्पना वाल्मीकिं च शशश्रृंगायमाणं काव्यं च खीष्टाब्दारम्भकालिकमेव स्वीकुर्वते । तत्र च—

"यथा हि चोर स तथाहि बुद्धस्तथागत नास्तिकमत्र विद्धि" इत्यादि श्लोके बुद्धनाम्नो दर्शनात्तदुत्तरकालिक केचिन्मन्वते । प्रक्षेपपाठे शाखाबाहुल्येन च रामायणमाकुलता गतमिति नास्ति सन्देह । पर महाभारते रामकथा विस्तरशो वर्णिता, वाल्मीकेर्नाम[1] च तत्रोल्लिखितमिति ततोऽपि पूर्वकृतत्वे रामायणस्य कुत सशम । तेनाऽपि सुतरामस्य प्राचीनता सिध्यत्येव ।

रामायणे रामस्य यथाऽविकला वर्णितेति महाकाव्यकोटिं स्पृशदपि प्रणीततर्यपरिणाऽऽख्यानपदमेव भजते । उपलभामहे च सकलान्यपि महाकाव्योचितानि तत्त्वानि तत्र । भारतीय साहित्य शास्त्रानुमतानि पाश्चात्यालोचककृतानि च महाकाव्यलक्षणानि तत्र सघटन्त इति चित्रम् । सुनिर्मल, सुबन्धश्च कथा-प्रवाह, पात्राणा चारित्र-वैशद्यम्, निसर्गमधुरा सवादा, युगानुकूला आदर्शा, प्रसादमधुरा भावबन्धुरा नाना-वृत्त-मनोहरा, निर्डम्बरा, निष्काठिन्या च शैलीति कस्य न प्रसादयन्ति चेत इमे गुणा । नारदवर्णितस्य महामानवस्य चारित्र देवभावेऽपि तथा प्रस्तुत यथा लीलामानवोऽय विशिष्ट गुण शील सपन्नोऽस्माक सनिकृष्ट एव प्रतिभातीत्यहो कौशल काव्यबन्धे । न काचिदेतादृशी वृत्तिर्याऽत्र न वर्णिता भवेत् सरला घोरा वा पावनी अपावनी वा । आदर्शे दृष्टिर्न च यथार्थस्य विस्मरति । वस्तुवर्णनेऽतिनैपुण्य महाकवे । अयोध्याया लकायाश्च वर्णनयोर्न मुञ्चति भव्यता किमपि । लकावर्णन यथा—

कैलासशिखरप्रख्याम् आलिखन्तीमिवाम्बरम् ।
दीप्यमानामिवाकाशे काञ्चनैर्भवनोत्तमै ॥
सपूर्णां राक्षसैर्घोरैर्नागैर् भोगवतीमिव ।
वप्रप्राकारजघना विपुलाम्बुधराम्बराम् ॥
शतघ्नीशूलकेशान्ताम् अट्टालकवतसकाम् ।
अचिन्त्यां सुकृतस्पर्शां कुबेराध्युषितां पुरीम् ॥ (सु २ अ)

रावणस्य अपूर्वा अट्टालिका विस्मयावहा—

जाम्बूनदमयैर्जालैर् वैडूर्यकृतवेदिकै । मणिस्फाटिकमुक्ताभि प्रवालकृत भूमिभि ॥
तप्तहाटकनिर्यूहै रजतामलपांडुरै । वैडूर्यतलसोपानैर् हाटकान्तरतोरणै ॥
(सु २ अ)

विरह विधुराया सीताया वर्णन मूर्तमप्यमूर्तोपमानै सूक्ष्मायितम् ।

---

१ वन० ८५।३७६ तीर्थयात्रा पर्व ।

"कुर्वन्तीं प्रभया देवीं सर्वा वितिमिरा दिशः ।
तां नीलकेशीं बिम्बोष्ठीं सुमध्यां सुप्रतिष्ठिताम् ॥
पीनांचितगुरुश्रोणीं वृत्तोरुं सहतस्तनीम् ।
सीतां पद्मपलाशाक्षीं मन्मथस्य रतीमिव ॥

× × ×

तां बुद्धिमिव संदिग्धामृद्धिं निपतितामिव । विहतामिव च श्रद्धामाशां प्रतिहतामिव ॥
(सु १० स)

हिमहत-नलिनीव नष्टशोभा व्यसनपरम्परयाऽनुगम्यमाना ।
सहचररहितेव चक्रवाकी जनकसुता कृपणां दशां प्रपन्ना ॥

कथं न ग्रावा रोदितु न वा दलतु वृक्षस्य हृदयं वर्णनमिदं पठित्वा ? विरागोऽपि महर्षिरयं न निरपेक्षः कोमलानुभूतिषु । वियुक्तायाः सीतायाः लक्ष्मणमूर्च्छा जनितसंतापस्य रामस्य च विलापः सुतरां मर्मभित्"। यथा—

हा राम हा लक्ष्मण हा सुमित्रे हा रामभातः सह मे जनन्या ।
एषा विपद्ये भूहमल्पपुण्या महार्णवे नौरिव वायुनुन्ना ॥
हा राम सत्यव्रत, दीर्घबाहो, हा पूर्णचन्द्रप्रतिमानवक्त्र ।
हा जीवलोकस्य हितः प्रिया त्वां वध्यां न मां वेत्स्यसि राक्षसानाम् ॥
(सु २२ स)

यथा वा—

एष रावणवेगेन लक्ष्मणः पतितो भुवि ।
सर्पवच्चेष्टते वीरो मम शोकमुदीरयन् ॥
भ्रातरं निहतं दृष्ट्वा लक्ष्मणं पांसु गुण्ठितम् ।
किं मे युद्धेन किं प्राणैर्युद्धकार्यं न विद्यते ।
हा भ्रातर् मनुजश्रेष्ठ शूराणां प्रवर प्रभु ।
एकाकी कस्य मां त्यक्त्वा परलोकाय गच्छसि ॥

ओजोभूयिष्ठाऽप्युक्तिर्न परिहीयतेऽस्य । युद्धकाण्डं सर्वमप्युत्साहपूर्णम् । वीररौद्रबीभत्साद्भुतानामसाधारणी व्यञ्जनाऽत्र । रामस्योत्साहमयः श्लोकः साधु व्यनक्ति—

अस्मिन् मुहूर्ते न चिरं सत्यं प्रतिशृणोमि वः । अरावणमरामं वा जगद् द्रक्ष्यथ वानराः । राज्यनाशं वने वासं दण्डके परिसर्पणम् । वैदेह्याश्च परामर्शं रक्षोभिश्च समागमम् । एतद् दुःखं महाघोरं क्लेशं च निरामयम् । त्यक्ष्यामि सद्यमेवाऽहं हत्वेमं राक्षसं रणे ।
(यु ८०।८-९)

प्रकृतेर्वर्णने वाल्मीकिरप्रतिम एव । तस्य वर्षर्तु वर्णनं सश्लिष्टं सजीवं च । यथा—

रविसंक्रान्तसौभाग्यस्तुषारावृत-मण्डलः ।
निःश्वासान्ध इवादर्शश्चन्द्रमा न प्रकाशते ॥
स्निग्धैरभ्रायत-च्छेदैर्बन्धु-प्राणमिवाम्बरम् ।
कशाभिरिव हैमीभिर्विद्युद्भिरिव ताडितम् ॥
मत्ता गजेन्द्रा मुदिता गवेन्द्रा वनेषु विश्रान्ततरा मृगेन्द्राः ।
रम्या नगेन्द्रा निभृता नरेन्द्राः प्रक्रीडिता वारिधरैः सुरेन्द्राः ॥
क्वचित्प्रकाशं क्वचिदप्रकाशं नभः प्रकीर्णाम्बुधरं विभाति ।
क्वचित् क्वचित् पर्वतसन्निरुद्धं रूपं यथा शान्तमहार्णवस्य ॥ (रा कि.)

एवमेव शरदृतुवर्णनमपि कमनीयतरम्—

स्निग्ध-गम्भीर-निर्घोषाः शैलद्रुम-पुरोगमाः ।
पूरयित्वा महामेघाः प्रतिशान्ता महाद्युते ॥
दर्शयन्ति शरन्नद्यः पुलिनानि शनैः शनैः ।
नवसंगमसव्रीडा जघनानीव योषितः ॥
शरत्काले तु कान्तानां मञ्जर्यो मारुतेरिताः ।
वरासवमदक्षीबा विलोला इव योषितः ॥ (रा कि)

चन्द्रवर्णनमपि प्रकृष्टम्—

ततोऽरुण परिस्पन्द मन्दीकृत-वपुः शशी ।
दध्रे काम परिक्षाम-कामिनी गण्डपाण्डुताम् ॥
या भाति लक्ष्मीर्भुवि मन्दरस्था तथा प्रदोषेषु च सागरस्था ।
तथैव तोयेषु च पुष्करस्था रराज सा चारु निशाकरस्था ॥
हंसो यथा राजति पुष्करस्थः सिंहो यथा सुन्दर-कन्दरस्थः ।
वीरो यथा दर्पित-कुञ्जरस्थश्चन्द्रो विबभ्राज तथाम्बरस्थः ॥

वाल्मीकेः प्रभावः—रामायणस्य परममहिम-मूलं न केवलं काव्यचारुताऽपि तु तस्या प्रभावोऽपि । कति न कवयः कृतास्तेन स्ववस्तुसम्भारानुकरणे ? रामकथां तत उपादाय कति न काव्यानि दृश्यानि श्रव्याणि च रचितानि ? देशे विदेशे च सर्वत्रादिकवेस्तस्य कीर्तिः कथयानया सह प्रगुणाऽद्यापि श्रूयते । कविता-विलासिनी-विलासः कालिदासस्तु स्फुटमेवास्याधमर्णः । रघुवंशे, कुमारसम्भवे मेघदूते च भूयानुभावः कवेः प्रत्यक्ष दृश्यः । हनूमतो दौत्यान्मेघदूतस्य कल्पनोदेदिति सिध्यत्यनेन पद्यमादौ । तथाहि—

'इत्याख्याते पवनतनयं मैथिलीवोन्मुखी सा ।' (उ. मे )

एवच—'खिन्न खिन्न शिखरिपु पद न्यस्य गन्तासि यत्र' ।

अत्र-'महत्सु शृंगेषु महीधराणा विश्रम्य विश्रम्य पुन प्रयान्ति ।'

अस्य पद्यांशस्य स्फुट प्रभाव ।

न स सकुंचित पन्था येन वाली हतो गत । वचने तिष्ठ सुग्रीव मा वालिपथमन्वगा ॥

अत्रापि—

एकेनैव रणे वाली शरेणाभिहतो मया । समये तिष्ठ सुग्रीव मा वालिपथमन्वगा ॥

इत्यस्यानुकरणम् । अतो धन्योऽयमाद्योऽपि सदा नव सर्वेषा प्रेरणाप्रद कवयता मूर्धन्यो महर्षिर्वाल्मीकिर्यस्यामृतसरसया वाण्या वयमद्याप्यात्मान पुनीमह । काम कालदोषहृता प्रक्षेपास्तस्य कृति सलिलमिव क्षीरे क्षिपन्ति मिश्रणाम्बुधौ तथापि स्वरूपतस्तस्य महिमाऽक्षत एवेति शम् ।

—०—

# कालिदासस्य काव्यसौष्ठवम्

केनापि कविनोक्तमासीत्—

> पुरा कवीना गणनाप्रसगे कनिष्ठिकाधिष्ठितकालिदासा।
> अद्यापि तत्तुल्य-कवेरभावादनामिका सार्थवती बभूव ॥

एवभूतस्य कविताविलासस्य कालिदासस्य जीवनादिविषये न वय किमपि प्रमाणपुरस्सर जानीम इति महत खेदस्य विषय । भारतीया परम्परा विक्रमसवत्सर-प्रवर्तकस्य शकारातेर्विक्रमादित्यस्य पारिषद्यमेन मनुते। एव च तस्य काल खीष्टजन्मत पटपञ्चाशद्वर्षपूर्व निर्णीयते। परमैतिहासिका विद्वास नैवविध कचन विक्रम जात-चर स्वीकुर्वते । तेषा मते शकोच्छेत्ता विक्रमादित्योपाधिधारी द्वितीयश्चन्द्रगुप्त एव । एव च कालिदास खीष्टाब्दस्य चतुर्थ्यां शताब्द्या सन्त प्रतिपद्यन्ते । तेषा विचारेण रघुवशे वर्णितानाः रघुवश्याना भूपाना मिषेण गुप्तवश्या एव नरपतयो वर्णिता । मातृगुप्त इति च तस्य वास्तविक नामेति साधयन्ति । राजवली पाण्डेयस्तु तर्कैरनेकै खीष्टाब्दात्प्राचीन कालिदास स्वीकरोति । कवे रचनासु शैवतत्त्वस्य वर्णनप्राचुर्यात्केचन काश्मीरकमपरे बगभव प्रतिपादयन्ति । तस्य मृत्युविषयेऽपि च विविधा प्रवादा । पाश्चात्यविदुषो वेन्दालस्य मतेन सिंहले कस्याश्चिच्छद्मलल्या षडयन्त्रेणास्य कविशिरोमणेरन्तोऽभूत् । भोजस्य समकालिकमप्येन स्वीकुर्वते जना ।

अस्य कृति-विषयेऽपि मतभेद एव। यद्यपि रघुवशम्, कुमारसम्भवम्, ऋतुसहार, शाकुन्तलम्, मालविकाग्निमित्रम्, विक्रमोर्वशीयम्, मेघदूतम् इति सप्त तस्य प्रसिद्धतमा सर्वसम्मताश्च रचना, तथाऽपि श्यामलादण्डकम्, गगाष्टकम्, ज्योतिर्विदा-भरणम्, श्रुतबोध, नलोदयचम्पू, पुष्पबाणविलासश्चेत्येता कृतयोऽपि तत्कर्तृत्वेन व्यपदिश्यन्ते। केषाचिन्मते समुद्रगुप्तप्रशस्तिर्हरिषेणनाम्ना, प्रवरसेनापदेशेन च सेतुबन्धकाव्य वस्तुत कालिदासेनैव कृते इति विवादस्यैवास्पदम्। क्षेमेन्द्रस्यौचित्य-

विचारचर्चायां कुन्तलेश्वरदौत्यं कालिदासकृतमिति लिखितम्। केचित् शाकुन्तल-स्यैकम्, मालविकादेर्ग्रन्थषट्कस्य द्वितीयं ज्योतिर्विदाभरणादिकाव्यवर्गस्य रचयितारं च तृतीयं स्वीकुर्वन्ति। इत्थं प्रतिव्यक्ति विचारभेदाद् दुःशकोऽस्य कालस्य जीवनादेश्च निर्णय इति विरम्यतेऽस्मात् प्रयासात्। 'वाचो विग्लापनं हि तत्' स्यात्। अतस्तस्य काव्यगताः काश्चिद् विशेषता एवेह प्रस्तूयन्ते।

पूर्वमुल्लिखितमेव यत् कालिदासस्याद्य कृतिसप्तकं तत्कृतत्वेन बहुसम्मतम्। तत्र पूर्वास्तिस्रः चरमं च श्रव्यकाव्यानि।

तत्र ऋतुसंहारः कवेराद्या कृतिः। अत्र प्रसादमरसं श्लोकैः षड्ऋतूनां वर्णनं सुन्दरं परं न पश्चाद्वर्तिनीं प्रौढिं भजति। रघुवंशं कुमारसम्भवञ्च द्वे अपि भावानां काव्यगुणानां च गौरवेण प्रशस्यतमे रचने। पूर्वस्यां लभ्यतेऽपूर्वं गाम्भीर्यमादर्शानां बाहुल्यं भावानामुदात्तता, वस्तुवर्णनस्य चारुत्वं च। व्यासं समासश्चेत्युभयविधे शैल्या-वत्र दर्शनीये एव।

रावणस्यापि रामास्तो भित्त्वा हृदयमाशुगः।
विवेश भुवमाख्यातुमुरगेभ्य इव प्रियम्॥ (र० वं० १२।९१)

अत्र कविनाऽल्पीयसाऽनुष्टुभा रावणे प्रहारः तज्जन्यो लोकानां प्रमोदश्च वर्णितः। महाकाव्ये क्वचन वस्तुवर्णनेन, क्वचित्कथाविकासेन चरित्रचित्रणेन च भवित-व्यमिति द्रष्टव्यं रघुवंशे। नात्र कालिदासो भारविवत् माघ इव वा प्रकृतिचित्रणा-सक्तमना मुख्यं कथानकं विस्मरति। कुमारसम्भवेऽपि आदौ षष्ठे सर्गे च हिमाचलस्य वर्णनं प्रसङ्गानुपतमेव। वसन्तोदयस्य निरूपणमपि प्रकृतस्य कामकृतशम्भुजयोद्योग-स्यैवाङ्गमिति न स्वतन्त्रम्। मेघदूते तु प्रकृतिः स्वयं चेतनीभूता कथानकस्य पात्रतां च नीता।

कवेरस्य कृतयः सोद्देश्या एव न तु निरुद्देश्याः। कुमारसम्भवे— 'धर्माविरुद्धो भूतेषु कामोऽस्मि भरतर्षभ।' इति प्रतिपाद्य जगज्जननीजनक-विवाहं निरूप्य तत्फलं देवसेनापतेः स्कन्दस्य जन्म वर्णयन् शिवेनैव जगत्कण्टकोद्धरण-रूपकार्यं भवतीति सूचितम्। रघुवंशेऽपि चादर्शप्रतिष्ठाहेतोर्दिलीपादारभ्योत्तरोत्तरं रामावधि महामानवानां चित्रणं पश्चाच्च क्रमेण ह्रासः। राघवभूपच्छलेन प्रस्तुतायामेकावल्यां रामचरितं नायकायते। तत्र दिलीपस्य रघोश्च चरिते विश्व साहित्येऽपि सर्वथाऽसाधारणे एव।

तस्य नाटकेष्वपि दृश्यत्वश्रव्यत्वयोर्गुणा असाधारणीं शोभां पुष्णन्ति। शाकुन्तलस्य विषये कियद्भिः समालोचकैर्न प्रदर्शित आदरातिरेकः? मालविकाग्नि-

मित्रे विक्रमोर्वशीये च काम ततो न्यूना पर वर्तते काचिदभिनवैव च्छटा। स खलु सौन्दर्यस्य प्रेम्णश्च कवि । तस्य रूपवर्णनान्युदात्तानि । रतेरुद्रेकश्च हृदयानन्दद । कोमलासु भावनासु सुतरा रमते तस्य वृत्ति । तथाऽपि नान्यरसव्यक्तौ भजत्यूनता कस्माच्चिदपि। सर्वेऽपि रसा यथायथ व्यक्ता एव यत्र तत्र ।

तस्य शैल्या भाषायाश्च विषये पर्याप्तमुक्त विद्वद्भि । तस्य वैदर्भी रीति ।

'वैदर्भी कविता स्वय वृतवती श्रीकालिदास वरम् ।'

इति च तत्र विदुषा प्रतिपत्ति । 'श्लेष प्रसाद समता, माधुर्य सुकुमारता। अर्थव्यक्तिरुदारत्वमोज -कान्ति समाधय । इति वैदर्भमार्गस्य प्राणा दश गुणा स्मृता' इति दण्ड्युक्तदिशा सर्वेऽपि काव्यगुणास्तस्य कृतिषु लभ्यन्ते । श्लेषादौ शब्दक्रीडाया च न तस्य मनो रमतेऽत एव क्वचिदनुप्रासादीन् विहाय न शाब्दचमत्कारे स कृतादरो दृश्यते । 'सुवशा कालिदासस्य मन्दाक्रान्ता प्रवल्गति' इत्येवविधास्तस्यच्छन्दोविषये रसिकानामुक्तय ।

कालिदास खलु भारतीयसस्कृतवैतालिक । न काऽपि रचना तस्यास्तत्त्वानि जहाति । तस्य पात्राणि मूर्तिमन्त आदर्शा । नाटकेषु प्रथमे मालविकाग्निमित्रे काव्यगुणै सह नाटकीयता समन्वेति । हास्यस्तु तत्रत्योऽद्वितीय । शृगारोऽस्य सर्वस्वम् ।

विक्रमोर्वशीये चोर्वशीपुरूरवसो प्रेमच्छलेन मन्ये कवि पृथिव्या स्वर्गस्य च सम्मेलन चिकीर्षति । त्रोटकाख्योऽय रूपकविशेषो नातिशय प्रदर्शयति चवार्णि । पर कलात्मक वैशिष्ट्य तत्रावश्य लक्ष्यम् । विलासपरोऽस्य नायको मालविकाग्निमित्रस्येव प्रकृतिकार्य उदासीन इवेति न तस्य चारित्र चारुतमम् । अभिज्ञानशाकुन्तल च कवेरपूर्वा सृष्टिरिति सर्वेषा विदुषा मतम् । शकुन्तलारूपेण कविना नवैवापूर्वा स्त्रीरत्नसृष्टि कृता । प्रभवति चात्र श्लोक —

शाकुन्तले जगति ते कविता विधात ?
शातोदरी प्रणय-भूतल-सप्रतिष्ठा।
भावातिरेकविहिता नवनाकसृष्टि
सत्य प्रजापतिपद सुकवेर्विधत्ते ॥

नवकुसुमलोभनीय सहज-रमणीय वपु, वनवाससुलभो मुग्धभाव, विकसितवयो जनितावयवारण्य तारुण्यम्, अवसरोपसर्पिणेवत्वादरो मन्मथविकार, निसर्गशालीनप्रकृतिमधुर गभीरत्व तस्या अनुपम चारित्र गुञ्जन्तितमाम् । हरिणसहचर्यास्तस्या प्रकृत्या सह यथा तादात्म्यमदर्शि कविना नान्यत्र तत्सुलभम् ।

सत्यमेताः कृतयः सरसाः सर्वपुण्याः सोदारभावाः परं न केवलं ताभिः कालिदासस्य गौरवम्। काश्चिद् विशेषतास्तस्यानन्यसाधारणयः सन्ति यास्तं सकल-कवि-मूर्धन्यं साधयन्ति। यथा —

अपूर्वोल्लासदा कविता—कालिदासस्य कविता सौन्दर्यसृष्ट्या पाठकान् उल्लासस्य परां भूमिमधिरोहयति। आनन्दश्चासौ सात्त्विको न भौतिकः। यथा शाकुन्तले शुद्धे वासना-प्रायश्चित्तात्मकतपसा विरहाकारेण परमानन्दानुभूतिः। रघुवंशादृते सर्वासामपि कृतीनामानन्द एव विश्रान्तिः।

प्रेम्णः सौन्दर्यस्य च कविः —कालिदासः प्रेम्णोऽद्भुतः कविः। प्रणयस्य तादृशी संवित् केवलं भवभूतावेव लभ्यते। परं स दाम्पत्यप्रेम्णश्चित्रणे दक्षः। कालिदासस्य पूर्वरागोऽपि महत्तरः। उद्रिक्तो यदपि वासनासंपुटेन कालुष्यमयते परं तपसैव तस्य शुद्धतां स्वीकरोति कविः। मेघदूतमस्य परतरं प्रमाणम्। न शुद्धः प्रणयो मानवं कर्तव्यपथाच्च्यावयति। विरहविकलोऽपि दुष्यन्तः प्रकृतिकार्यं करोत्येव। सौन्दर्यस्य तु सोऽपूर्वः स्रष्टा। न केवलं शकुन्तला, मालविका, उर्वशी, इन्दुमती, पार्वती, यक्षगृहिणी सर्वा अप्येता असाधारणसौन्दर्यशालिन्यः।

तन्वी, श्यामा, शिखरिदशना, पक्वबिम्बाधरोष्ठी,
मध्येक्षामा, चकितहरिणीप्रेक्षणा निम्ननाभिः।
श्रोणीभारादलसगमना स्तोकनम्रा स्तनाभ्यां
या तत्र स्याद् युवतिविषये सृष्टिराद्येव धातुः॥ (मे. दू. उ. २१)

यक्षपत्न्याः सकलमपि कामनीयकमत्र पद्ये निबद्धम्। पुरुषपात्राण्यपि तादृशानि।

व्यूढोरस्को वृषस्कन्धः शालप्रांशुर्महाभुजः।
आत्मकर्मक्षमं देहं क्षात्रो धर्म इवाश्रितः॥ (र. वं. १.१३)

अनेन श्लोकेन दिलीपस्य भव्याऽऽकृतिरक्ष्णोः समक्षमाविर्भवति।

शकुन्तला च—अनाघ्रातं पुष्पं, किसलयमलूनं कररुहै—
'रनाविद्धं रत्नं मधु नवमनास्वादितरसम्।
अखण्डं पुण्यानां फलमिव च तद्रूपमनघं
न जाने भोक्तारं कमिह समुपस्थास्यति विधिः॥ (शा. २.१०)

अस्ति कस्यचिदेतादृशी रूपसृष्टिः? अस्यैव प्रेम्णः प्रभावेणोदारभावान् जनयति सुजनमनःसु महाकवेः कविता।

आदर्श प्रियोऽपि यथार्थं वर्णयिता—कालिदास आदर्शप्रिय इति तस्य कृतय स्पष्ट व्यञ्जयन्ति। राज्ञा प्रकृतिपालकत्व स्त्रीणा पातिव्रत, धनिना वदान्यत्वम्, कर्मपराणा कर्तव्यपरायणत्व सोऽपरिहार्यं मन्यते। तस्य नायकास्तादृशा एव। रघुवशोऽप्यस्य निदर्शनम्। 'सोऽहमाजन्म शुद्धानाम्' इति प्रक्रान्त कवि सर्गे कर्तव्यपराङ्मुखेऽग्निवर्णे मृते काव्य समाप्नोति। तस्य नायका मानवानामादर्शभूता। दिलीपस्य शासन कवि सुनन्दामुखेन प्रशसति—

यस्मिन् महीं शासति वाणिनीना निद्रा विहारार्धपथे गतानाम्।
वातोऽपि नास्रंसयदशुकानि को लम्बयेदाहरणाय हस्तम्॥ (र व ६ ७५)

अस्त्यद्यतनाना शासकनामीदृश राज्यम्? सर्वस्वदाता रघु, प्रजारजनाय प्राणप्रियामपि त्यजन् राम, विरहविक्लोऽपि प्रजाना प्रेतप्रियबन्धुस्थान आत्मान स्थापयन् दुष्यन्त सर्वेऽपि निदर्शनानि। अग्निमित्र पुरूरवाश्च यद्यपि न तथा भूमिस्पृशौ, पर शाकुन्तले मालविकाग्निमित्रे च याथातथ्य वर्णयत्येव स। राज्ञ प्रकृतिकार्यपरता सर्वदाशसते—

'प्रवर्तता प्रकृतिहिताय पार्थिव'

तप. समन्वितस्य भोगस्य समर्थक —न स केवल भोगवादस्य समर्थक इति शृंगारप्रियतयाऽनुमेयम्। दुष्यन्त शकुन्तलयोर्वासनात्मकस्य प्रणयस्य दुरन्त दर्शयित्वा तपोऽन्वितमेव सुख विदिशनष्टि स। यक्षस्य वियोगोऽपि तादृश एव।

राष्ट्रीय कवि—भारतस्यैक्यता तस्यादर्श।

रथेनानुद्धातस्तिमितगतिना तीर्णजलधि
पुरा सप्तद्वीपा जयति वसुधामप्रतिरथ॥ (शा ७ ३३)

'आ समुद्रक्षितीशानामानाकरथवर्त्मनाम्' इति च तस्य भावना।

श्रेष्ठतमो वैदर्भो मार्ग—कालिदासकविता वैदर्भं मार्गमनुसरति नवनवालकारसज्जिता, कल्पनाविलसिता, प्रसादमरमा, मध्योपमा प्रणयप्रवणाऽपि श्लेषरहिता, इन्द्रवज्रादिचारुवृत्तशालिनी, मनोविज्ञानानुबन्धिनी च यस्य नाह्लादयति हृदयम्। व्यञ्जना-प्रधाना तस्य शैली क्वचिद् व्यासरूपाऽपरत्र च समासरूपा वहति कामप्यसाधारणताम्।

वर्णनकौशलम्—कविरय यत्किमपि वर्णयति चित्रमिव पुरत स्थापयति। इन्दुमतीस्वयवरस्य, पार्वतीलावण्यस्य, कुशकृतजलविहारस्य, हिमाचलस्य च वर्णनम्, रघुवशे च सागरचित्रणम् कामपि प्रौढि वहन्ति।

प्रकृतिचित्रणम्—न केवलमन्तर्गताया, भौतिक्या अपि प्रकृतेश्चित्रणे कालिदासोऽनुपमान। वाल्मीके परस्तात्स्यैव काव्य तया वर्णिता प्रकृति। शाकुन्तले तु शकुन्तलाया प्रकृत्या सह सायुज्यमेव कृतमिति चित्रम्।

सार्वकालिको विश्वजनीनः कविः—कालिदासो न परं भारतीयोऽपि तु विश्वजनीनः कविः। तस्य काव्यानां प्रभावः क्व न दृश्यते। मध्यैशियाभागस्य दक्षिणप्रोलेवस्थानेऽजन्तास्थगुहामन्दिराणामिव भित्तिचित्राणि रघुवंशसम्बन्धीनि सत्ताऽस्य प्रमाणम्। फ्रेडरिक स्वर्ट (शिलर) नामाऽऽङ्गलकविः स्वकाव्ये 'मेरी स्टुअर्ट' नाम्नि मेघदूताद् भावानाजहारेति समीक्षकानां मतम्। के न प्रशंसन्ति तम्। के एस्. रामस्वामी शास्त्री स्वग्रन्थे कालिदासम्—

"Poet of all times and climes and of all minds and moods" इति निर्दिशति। विनयकुमारसरकारनामाऽऽलोचकश्च लिखति—'No body understands Asia who does not understand Kali-dasa—the spirit of Asia.'

(प्राच्यदेशानामात्मभूतं कालिदासं यो न बुध्यते, न स क्षमस्तेषां प्रकृतिमपि बोद्धुम्।)

कालिदासादुत्तरकालिकैः कविभिर्भारविप्रभृतिभिः स्वकाव्येषु स्वयंवरादिवर्णने प्रेरणा गृहीता परं ते निसर्ग-मधुरं प्रसादप्रवणं मार्गमुज्झित्वा चमत्कारप्रिया अजायन्तेति कृत्रिमता तेषां कृतिषु प्रधानतया विलसति। तस्य मेघदूतमनुकृत्य कानि न दूतकाव्यान्यरच्यन्त, परं कोऽलभत तस्य प्रकृतिमरसं द्राक्षापाक-सञ्ज्ञया विदितं नैपुण्यम्। धन्योऽसौ कविः, तस्यैव कविता धन्या या खलु—

शान्ता प्रसादसुमुखी, रतिलालनीया, भावाभिलोभिनरता, सुरतोत्सुका च।
श्लक्ष्णा मनःक्षणकराधिगुणैश्च मन्दाक्रान्ताञ्चितस्थिरपदध्वनि-लोभनीया॥
सूक्तिः पुनश्चरति मानस-जन्मनो या भावामृतं शिव विलोचनलोचितस्य।
आस्वादिताऽपि सततं रसिकैस्तदीयं रागं समर्थयति नित्य-नवस्वरूपा॥
सल्लक्षणा मधुरकान्तिविलक्षणा च श्लेषप्रभावविकला सकलाकलापा।
सा कालिदासकविता वनितेव भव्या चेतो न रञ्जयतु कस्य रसाभिरामा॥

—o—

# नाटककृत् कालिदासः

कालिदास कविता-विलासो न केवल सरस-काव्यरचना-सौष्ठवेन भारते सस्कृत-कवीना मूर्धन्यता गत, नाप्युत्कृष्टस्य गीत-काव्यस्य मेघदूतस्य कर्तृतया चरमस्य यशसो भाजनम्, नाटककारतयाऽपि स सर्वानपि नाट्यकृतोऽतिशेते। तस्य वस्तूपन्यासकौशल, चरित्रचित्रण, सवादा, देशकालनिबन्धन, शैली, रस परिपाक, अभिनय तत्त्वानि च सर्वाण्यपि निरुपमस्य नैपुण्यस्य निदर्शनम्।

मालविकाग्निमित्रम्, विक्रमोर्वशीयम्, अभिज्ञानशाकुन्तल चेति तस्य नाटक-क्रम। प्राथमस्य च द्वे नाटके, द्वितीय च त्रोटक रूपक-भेद। तत्र प्रथममर्धेतिहासिक मिश्र कथानक श्रूयते। शुग वश शासन स्थापकस्य सेनापते पुष्यमित्रस्य पुत्रोऽग्नि-मित्रोऽस्य नायक। मुख्या कथा प्रीति प्रधाना मालविका सम्बन्धिनी सा चाधिकारिकी। वैदर्भस्य यज्ञसेनस्य प्रसग, मिलिन्दस्य यवनेश्वरस्य चाक्रमण वसुमित्रसकाशात्तस्य राजयश्चेति प्रासगिक कथा। विदूषक-करे सर्पदशादि-कथा च प्रकरी। राज्ञ्या धारिण्या समीपस्थे चित्रे मालविका समीक्ष्य राज्ञोऽग्निमित्रस्य तस्यामनुराग, विदूषक षड्यन्त्रेण साक्षात्करणम्, मिथोदर्शनेन च रते पल्लवनम्, मालविकाया निग्रह, दोलाया पतित-धारिणी पादस्य सरुजत्वात् तामेव तपनीयाशोकदोहद-कार्ये नियुङ्क्ते, तस्या पाद-प्रहारेण च शीघ्रमशोकस्य पुष्पितत्व ज्ञात्वा स्वय राज्ञी तामग्निमित्र परिग्राहयति। अस्मिन् काव्ये प्रणयकथा कविकल्पना-प्रसूता अन्या चैतिह्य सम्बन्धिनीति द्वयोर्मिश्रणम्। शृगारस्य प्राधान्येन कौतूहलाय च रक्षायै कविर्मिलिन्दाक्रान्तिकथामन्ते वैदर्भनिग्रहा-योजन च प्रथम एवाङ्के निरूपितवान्। लक्ष्यमत्र वस्तु योजन पाटव तस्य। विदूषक-शेमुषीकौशल च कथानके द्वन्द्व जनयति वस्तु च जटिलता गमयति। घटनाचक्र च कथाया स्वाभाविके विकासे रमयति सामाजिकान्। कथाया पल्लवन प्रीति विपाको-पयोगितयैव वृत्तमिति समागमौपयिका एव विवर्ता अत्र लभ्यन्ते। प्रथमेऽङ्के दर्शनो-पयुक्त आरम्भो मुख-सन्धिश्च। द्वितीयेऽपि स एव। तृतीये तु यत्नावस्था प्रतिमुख-सन्धिश्च। मदोत्-पादाधातन मनोरथपूर्त्या च प्राप्त्याशा। परमिरावरयागमनेन

विघ्नो नयिकाया निग्रहश्च गर्भसंधिं योजयति। चतुर्थेऽङ्के चैवैव स्थितिः। परं विदूषक-पाटवेन मोक्षे समागमाशा पुनरिरावती प्राप्त्या विघ्न इति जाटिल्यम्। अन्ते चोद्यान-पालिकायास्तपनीयाशोकं पुष्पितं दृष्ट्वा विस्मयं प्राप्ति निश्चिततां सभावयति। पञ्च-मेऽङ्क आरम्भ एव तपनीयाशोकदर्शनायामन्त्रणं नियताप्तिं विमर्शसंधिं च सपादयति। अन्ते च मालविकाया परिचय-प्राप्तिर्वसुमित्र-विजय समाचाराधिगतेरुल्लासातिशयः। तादृशे हर्षमये वातावरणे मालविका-परिग्रहेण नाटकस्यान्त इति परस्परानुबन्धिनी घटना-परम्परा। एवं वस्तु-योजना नाटकोपयोगिन्येव।

पात्रेषु नायकस्याग्निमित्रस्य चरित्रं नायकुदात्त धीरोदात्तस्य धीरललितस्य च कोटिं स्पृशति। नृत्यसगीताद्यभिज्ञतया कलाविदयं विशेषेण शृंगार-निरतः। परं न सर्वथा कार्यभारं मन्त्रिषु विसृजतीति न पूर्णतया तस्य सीमानं प्रविशति। तथापि धारिण्या 'यदि राजकार्येष्वपीदृश्युपायनिपुणतार्यपुत्रस्य तत शोभनं भवेत्' इति कथनं तस्य धीरललितोपयोगिता द्रढयति। स दक्षिणो नायकोऽपि शठतामवलम्बते, स्त्रैणोऽपि प्रतापं धारयति, विलासपरोऽपि राजकार्यमपेक्षते, अन्यसक्रान्तहृदयोऽपि देवीं बहु मानयति। एवं मिश्रं तच्चरित्रमादर्शकोटिं स्पृशदपि न याथार्थ्यं परित्यजति। मालविका खलु मुग्धा नायिका नातिविकसितस्वरूपा। तदपेक्षयेरावती स्पष्टव्यक्तित्व-शालिनी, मानवती, प्रगल्भा। धारिणी च धीराऽतिशयोदात्तरूपा। विदूषकश्चास्य नाटकस्य परिहास-निपुणो भोजन-प्रियोऽपि न तन्मात्र-सीमित पाटवं प्रत्युत्पन्नमतिः। नैतद्विधो विदूषकोऽन्यस्मिन् संस्कृत नाटके। संवादास्तु संक्षिप्ताः, व्यङ्ग्यमयाः सरसा-श्च। देशकालस्य विधानं चावसरोचितमेव। चरित्र चित्रणे मनोविज्ञानस्य प्रयोगः साधीयान्।

शैली—नाटकस्यास्य भाषा निर्माणकौशलं च सर्वथा रूपकोपयोगिनी स्वरूप-स्य, भावाना स्थितेश्च यथावस्थानं साधयत। श्रामाणकैर्भाषाऽस्य व्यवहारः लघुः। यथा—'बन्धन-भ्रष्टो गृह कपोतश्चिल्लाया मुखे निपतित,' 'मुग्धे भ्रमर-सबाध इति वसन्तावतारसर्वस्वं किं न चूत प्रसवोऽवतंसयितव्य,' 'विमर्द-सुरभिर्बकुलावलिका खल्वहम्' इत्यादीनि वाक्यानि निदर्शनानि। नाटकीयता च नास्य कथमपि परिहीयते।

अभिनय—नाटकेऽस्मिन्न खल्वदर्शनीयानि दृश्यानि। पञ्चैव चाङ्का, न बहूना पात्राणा सत्ता, पद्यानामपि अल्पसख्यत्वं, सरलो भाषाविन्यासः, कथनापेक्षया चेष्टानां प्राधान्यं चाभिनययोग्यतामस्य साधयन्ति।

रस—शृंगारोऽत्र प्रधानो रसः। परं यत्र-तत्र वीरस्य हास्यस्य, अद्भुतस्य, रौद्रस्य, करुणस्य चाभिव्यञ्जना वर्तत एव। हास्यमत्रान्य-नाटकापेक्षयाऽति पटीय इति नाटकस्य वैशिष्ट्यम्। मन्ये, युक्तमेवात्मनि विस्रम्भन् कवि साधिकारमस्य विषये कथयति—

पुराणमित्येव न साधु सर्वं न चापि काव्यं नवमित्यवद्यम्।
सन्तः परीक्ष्यान्यतरद् भजन्ते मूढ परप्रत्ययनेय बुद्धिः ॥

विक्रमोर्वशीयम्—

त्रोटकाख्येऽस्मिन्नपि रूपके सैव शृंगारकथा। परमत्र रतिर्न केवलं रूपावलोकनसमुद्भवाऽपि तु वीर्यानुभवप्रवृत्ततोषमूला नायिकायाम् 'पूर्वं वाच्य स्त्रिया राग पुंस पश्चात्तदिङ्गितैः' इति वचनात्। नायकस्य तु सौन्दर्यवीक्षणमेव। इलाया चन्द्रपुत्राद् बुधाज्जात पुरूरवा नृप केशिना हृता नारायण-तपो निर्मितामुर्वशी नामाप्सरस मोचयतीति सा तस्मिन्ननुरज्यते। राजाऽपि तल्लावण्य-पण्य-हृदय सम्पद्यते। राज्या औशीनर्या भर्तृ-प्रसादन व्रतद्वारा तस्या उर्वश्या स्वच्छन्दोपभोगाय नायकोऽनुमन्यते। तया सह विहरन् गन्धमादने स्त्रीवर्जित कुमारवन प्रविष्टाया लतारूपेण परिणताया तस्या प्रियाया विरह-विधुरो नृप प्रमत्त चेष्टितानि कृत्वा सगमनीय मणि करे कृत्वा पुन प्रेयसी लभते। पश्चात् कुमारस्यायुष प्राप्त्या नाटकस्यान्त। कथेयमैतरेयब्राह्मणे, पुराणेषु, महाभारते च वर्णिता परं स्वप्रतिभया कालिदास स्वोपज्ञामेव ता कल्पयति। केशिनो दानवान्मोचितोर्वशी न केवल रूपेणापि तु पराक्रमेण निर्जित-हृदया जायते। दिनाद्दिनं परिवर्धमानोऽसौ प्रणयो महेन्द्र-माहात्म्यात्पर पोषमानीतो राज्ञ्यौशीनर्या समागमाय परिकल्प्यते। अत्रापि पञ्चस्वङ्केषु क्रमशोऽवस्थाना सधीनाञ्च योजना विहितेति नाट्यावलोकनेन परिज्ञायते। वस्तु चात्र देशकालापेक्षया व्यापकम्। प्रथमेऽङ्के हेमकूटपर्वतो घटनास्थलम्, द्वितीये तृतीये च प्रतिष्ठानपुरे राजभवनम्, चतुर्थे पुनर्गन्धमादनवनम्, पञ्चमे च पुन प्रतिष्ठान-पुरम्, इति नैक-देशव्याप्त कथानकम्, कालोऽपि बहीयानतिवर्तते।

अस्य पात्रेषु चरित्र चित्रण दृष्ट्या नातीवोज्ज्वल पक्ष। धीरोदात्तोऽपि नायक केवल स्व-प्रणय-व्यापारे लीन इव लक्ष्यते। इन्द्रेण माहात्म्यायाभ्यर्थितस्यास्य महानुभावता यदपि सूचिता पर तस्य लोक रञ्जकपक्षो नितरामुदास्ते कविरिति खेदस्य विषय। स्त्री पात्रेषु चारित्र्य गौरवेण राज्ञ्येव तावत्सर्वानतिशेते। उर्वशी तु प्रगल्भा नायिका वाराङ्गनेव सहजविश्रम्भा पतिविरहभीरुतया जातमपि पुत्र च्यवनाश्रमे निभृत निक्षिपति। वात्सल्य विरुद्धमेतत्कृत्य न जननी-हृदयसवादि। विदूषकस्तु मूढ एवास्य चपलो भोजन प्रियश्च। भूर्जपत्रलोपनमन्तरा न स कथानकस्य किमप्युपकुरुते। परिकल्पना दृष्ट्या खलु महत्त्व विक्रमोर्वशीयस्य। त्रोटकस्यास्य दिव्य-मानुष-मध्यतया मिश्र चारित्रता नाट्य विधान च पार्थक्यमेव भजेते। चतुर्थेऽङ्के विविधाना जम्भलिकाऽऽक्षिप्तिकाचर्चरिकादीना-गीतीना योजना नाट्यशास्त्रानुसार चित्रैव वृत्तादि सूचने मनो-दशा वर्णने च सौकर्यमाचरति। पाठ्यापेक्षयाऽऽङ्गिकाभिनयस्यात्र बाहुल्यमिति

विशेषेऽपि दिव्यादिव्योभयहृदयोपयोगिनी रमणालापेऽपि यते प्रयोपायेति दुष्करताऽभिनये। रसराजस्य परिपाकस्तु प्रश्नानुबन्धो वात्सल्य चित्रित परा प्रौढि भजति। परिनिष्ठितस्यापभ्र शस्य योगोऽत्र कालिदास-काले तस्य पूर्ण विकास सूचयति। भाषा तु सुतरा रसोपयोगिनीति न कथनस्यावश्यकता।

## अभिज्ञान-शाकुन्तलम्

अत्र तावत्कालिदासस्य कला परमुत्कर्ष व्रजन्ती लक्ष्यते। नादसीया शकुन्तला महाभारतीयेव प्रगल्भा केवल फलाद्याहरणाय याते पितरि स्वजन्मोदन्त स्वयमेव श्रावयति, पुत्रराज्यप्राप्तिनिष्क्रयेण च रह ससर्गमाचरन्ती जनक न प्रतीक्षते। न चासौ वाक्शीलवल्लभाया राजान धर्माचरणमुपदिशति। नाऽप्ययं दुष्यन्तश्चौरो वा महाभारतीय इव सहसा दर्शनसमकाल समागम प्रार्थयते। समायामागतायाश्चाभिजानन्नपि सुत द्वितीया ता कलङ्क भयात्प्रत्याचष्ट। सर्वथा विसवादिनी सा कथा स्व प्रतिभाया स्वर्णोपमेन लोहमय्यपि काञ्चनायिता। प्रथमेऽङ्के चक्षूरागो दर्शने, वृत्तान्त श्रवणे च चिन्तासग सकल्पश्च। अत्रैवारम्भ कार्यस्य बीजोत्पत्तिश्च। द्वितीयेऽङ्के सैन्यप्रेषणेन यत्न, विदूषकाय वृत्तान्तश्रावणेनाश्रमवासनिमन्त्रणेन च प्रतिमुखसन्धि। तृतीये च द्वयो प्रजागरादि-कृता कामदशा, समागमश्चेति प्राप्त्याशा, भावि-दुर्वास शापेन च वियोग-सभावनया गर्भसन्धि, पचमाङ्कावधि स एव सन्धि। मुद्रिकालाभेन षष्ठेऽङ्के नियताप्तिर्विमर्श-सन्धिश्च। सप्तमे च फलागमो निर्वहण च। एव कथानकस्य क्रमिको विकास प्रणयस्य स्वाभाविक परिपाक सम्पादयति, सहसा भाविता ( चट्ट रोटी पट दाल ) तु विघ्नाकाङ्क्षिणी। अत एव तृतीयाङ्क-गत समागमस्यानन्तर पुनर्वियोग पश्चात्तापेन च शुद्धि।

अत्र पात्राणा चरित्र सर्वातिशायि। नायको नायिका चोभे अप्यसाधारण-स्वरूप। नायकश्चेदर्हता प्राग्रसरस्तर्हि नायिका मूर्तिमती सत्क्रिया। सा यदि मुनि-कन्या तर्हि दुष्यन्तो राजर्षि। सा तपोवन वर्धिता, असावपि सर्वभोग्य गृहस्थाश्रम मधितिष्ठति। शकुन्तला प्रकृति सात्त्विकता प्रमाणम् दुष्यन्तस्तु छलदम्भपरायणाया नागरसभ्यताया प्रतिनिधि। साध्वीय तुलना विशदीकृता पञ्चमेऽङ्के शार्ङ्गरवेण—

> आजन्मन शाठ्यमशिक्षितोयस्तस्याप्रमाण वचन जनस्य।
> पराभिसधानमधीयते यैर्विद्येति ते सन्तु किलाप्तवाच ॥ (५।२५)

एतादृशी कटुभर्त्सना नान्यत्र सुलभा।

प्रियवदानुसूये च स्वभाव विषमे अपि नायिकाया व्यक्तित्वस्यैवाशाविव यत्र प्रीति प्रतिभा च सहैव विलसत। जी पी भट्टाचार्यस्य वचनमत्र द्रष्टव्यमेव—

"Priyamvada & Anasuya were but the two Shades of her own character—tenderness, imagination and innocence, as moulded by nature amidst her ever charming environments of an isolate hermitage."

"किमत्र चित्रं यदि विशाखे शशाङ्कलेखामनुवर्तेते" । शकुन्तलाऽत्र प्रकृति-कन्या "A true child of nature" तस्यास्तादात्म्यमेव लताभिर्वल्लरीभिर्वनवासिभिस्तिर्यग्भिश्च । तदेव ते प्रस्थानावसरे वासोऽलङ्काराणि च प्रयच्छन्ति, वियोगाश्रूणि च मुञ्चन्ति । पावक कण्वोऽपि न केवल होम ध्याय-नयनोऽरण्यवासजड श्रोत्रिय, पर निश्छलवात्सल्य निर्भर प्रकृति, गौतमी च तादृशी नैष्ठिकी ब्रह्मचारिण्यपि वत्सलैव । शाङ्‌र्गरव शारद्वतश्च तापस-युवानौ तपस्तेजसोद्दामस्वभावौ, प्रगल्भौ । तावपि न समप्रकृती, शारद्वतो मितभाषी गम्भीरश्च पर शाङ्‌र्गरव क्रोधनो धर्षकश्च, पुरोहितो राजकुल सहवासार्जित-नागर धर्मा व्यवहारनिपुण समयज्ञश्च । नात्र नायक पूर्वनाटक द्वय इव केवल भोग परायण कर्तव्य विमुखो वा । दान्त, शान्तो गम्भीर, प्रगल्भ, महानुभाव, धृष्णुरपि विनत, मधुकर-वृत्तिरपि प्रणयनिष्ठ, प्रसन्ततिरपि सहज वात्सल्य, शठोऽपि दक्षिण, मोहग्रस्तोऽपि सतत जागरूक, चपलोऽपि धीरवृत्ति ।

शकुन्तला तु मुग्धा नायिका । भाव प्रवणा सहजशालीना मानिन्यपि परवती, तरलिताऽपि धीरा, भोगोत्सुकाऽपि तापसी, प्रणयमूढाऽपि विवेकिनी, ह्रीमन्थराऽपि सहजाततेजस्विनी, वासना कलुषिताऽपि निसर्गपूता ।

सवादा अत्रापि चारित्रस्य प्रसगस्य चानुकूला व्यञ्जनामया सक्षिप्ताश्च । गद्यापेक्षयाऽत्र पद्यस्य बाहुल्यम् । देशकाल सम्बन्धिन्येकता तु नात्राऽपि । कण्वाश्रम, हस्तिनापुरम् हेमकूटपर्वतश्चेति त्रीण्यस्य घटना स्थानानि । कालकृत च व्यवधान न स्वल्पम् । भाषाऽत्रोत्कृष्टतमा परिमार्जिता च । भावना कल्पना चानुकूले, अभिनयस्तु मालविकाग्निमित्रापेक्षयाऽस्य दुष्कर एव । रथचालन दृश्ये, सिंह शिशुना सह क्रीडन चातिकठिनम् । आकाशगमनस्य स्वरूप कथमभिनेय स्यात् ? पुरा भवतु नाम तादृशी व्यवस्था परमद्य तु चलचित्र एव सा सभाव्यते ।

रसश्चात्रापि शृङ्गार एव । अन्ये तु यथास्थान पोषका एवाङ्गत्वेन व्यज्यन्ते । इत्य नाटकत्रयस्य स्वरूपे सामान्येन विवेचिते सति कानिचिद् वैशिष्ट्यानि तस्य नाट्यकारतया सर्वोत्कृष्टता-मूलानि । तथाहि—

विश्व जनीन कवि —कालिदास स्वकल्पनया विश्वमात्रसमवानामनुभूतीनां व्यञ्जनां चरति या कस्यापि हृदये समाप्यन्ते । परिस्थितय काम भारत एव

संभवन्ति । कीथमहोदयस्य कथनानुसारेण स प्रेमानुभूतेः करुणायाश्चासाधारणः कविः । मैक्डानलमहोदय स्वेतिहासे लिखति—

'The richness of creating fancy which he displays in his plays and his skill in the expression of tender feeling, assign him a high place among the dramatists of the world.

प्रेमानुभूतेर्मनोवैज्ञानिक विश्लेषण स करोति चतुर्थेऽङ्के शाकुन्तलस्य—

रम्याणि वीक्ष्य मधुरांश्च निशम्य शब्दान्पर्युत्सुकी भवति यत्सुखितोऽपि जन्तु ।
तच्चेतसा स्मरति नूनमबोधपूर्वं भावस्थिराणि जननान्तरसौहृदानि ॥
(शा ५।२)

सौन्दर्यस्य चित्रकार. —सौन्दर्य-वर्णने न कोऽपि तमतिशेते । विक्रमोर्वशीये राजोर्वशी दृष्ट्वा विस्मयते—

अस्याः सर्गविधौ प्रजापतिरभूत् चन्द्रो नु कान्ति-प्रद.
शृ गारैकरस. स्वयं नु मदनो मासो नु पुष्पाकरः ।
वेदाभ्यासजड. कथं नु विषय-व्यावृत्त कौतूहलो
निर्मातुं प्रभवेन्मनोहरमिदं रूप पुराणो मुनि ॥ (विक्र. १।१०)

मालविकाया सौन्दर्येऽपि तस्य शब्दाश्चित्रमिव पुरत स्थापयन्ति । शकुन्तलाया. स्वल्पे तु तस्य कल्पना खगीव लोकान्तर गच्छति सभार-समाहरणाय—

चित्ते निवेश्य परिकल्पित-सत्त्व-योगाद्
रूपोच्चयेन मनसा विधिना कृता नु ।
स्त्रीरत्न-सृष्टिरपरा प्रतिभाति सा मे
धातुर्विभुत्वमनुचिन्त्य वपुश्च तस्या ॥ ( शा. २।६)

भोगे योगस्य समर्थक —शृ गार-प्रियोऽपि कविस्तपःपूतमेव भोग समर्थयते । 'धर्माविरुद्धो भूतेषु कामोऽस्मि भरतर्षभ ।' अयमेव तस्य सिद्धान्त । उपाध्यायस्य भगवच्छरणस्य मतेन प्रथम परिणयोऽत्र वासना मय इति दुर्वासश्छलेन दण्ड एव प्रकृत्या प्रत्याख्यान रूपो निपात्यते । तपोरूपेण पश्चात्तापेन च प्रेम्णा शुद्धौ पुनर्मेलन भवति । मालविकाया विक्रमोर्वशीये च विरह-साधना तदर्थमेव । सर्ताति विवाहस्य परिणाम स्वीकुर्वन् शकुन्तलाया उर्वश्याश्च प्रणय कुमार-भरतयोर्जन्मना सफल दर्शयति । तस्य कला मानवमनस्युत्तमभावजागरण विदधती शाश्वत आनन्द एव नयति जनम् । तस्य लक्ष्य हि—

'ममापि च क्षपयतु नीललोहितः पुनर्भव परिगतशक्तिरात्मभूः ।' (शा भ. वा )

कर्तव्य-प्रिय —न कालिदास स्वपात्राणि कर्तव्य विस्मरन्ति द्रष्टु शक्त । राज्ञो हितञ्च प्रजाना रञ्जने । मालविकायामग्निमित्रस्तत्रोपेक्षावानिव दृश्यते, न यद्यपि मण्डलशासने । विक्रमोर्वशीये भुवनराज्याधिपतेर्नास्ति प्रभुत्व कृत कोऽपि लोप । पर त्रुटिरिय न शाकुन्तले । अत्र राजा विरह विक्लवोऽपि राजकार्यं पश्यति, स्वाभावदु खेन परस्य कष्टान्यनुमिमीते, आत्मान प्रकृतीना परेतबन्धुस्थाने गणयति, 'अहमिव सतति दु खेन दु खितस्तपस्वी' 'गर्भ पित्र्य रिक्थमर्हति' 'अनिर्वर्णनीय पर-कलत्रम्' इति तस्योदार दर्शनम् । नेदृशी प्रतिपत्ति कस्याप्यन्यस्य दृश्यते । धर्मारण्य प्रति तस्यादर । तपस्विना प्रतिष्ठा, तेषा व्रत लोपप्रतिरोधचिन्ता, आर्तत्राणाय शस्त्रोद्यमनम् । साधूच्यते—

'कुतो धर्म क्रिया विघ्न सता रक्षितरि त्वयि ।' (शा ५)

कण्वस्य वात्सल्य-पूर्णोक्ति स्ववैक्लव्य-वर्णनं च सर्वस्मिन्नपि सस्कृत-साहित्ये दुर्लभे ।

यास्यत्यद्य शाकुन्तलेति हृदय सस्पृष्टमुत्कण्ठया
कण्ठ· स्तम्भित-बाष्पवृत्ति कलुषश्चिन्ता जड दर्शनम् ।
वैक्लव्य मम तावदीदृशमिद स्नेहादरण्यौकस
पीड्यन्ते गृहिण कथ न तनयाविश्लेषदु खैर्नवै ॥ (शा ४।६)

शाश्वत सत्यमिह निहित कविना कस्यापि कन्यापितुर्हृदयेन मन्त्रयितव्य विशेषत भार्याणाम् ।

प्रकृतेरुपासक—चेतनेष्वचेतनाऽपि नियतिरियमस्माक चिर-सगिनी । कथ तादृश कविस्ता विस्मरेत् । अतस्तस्य पात्राणि तस्या एवाङ्के निर्वृतिं लभन्ते । विक्रमोर्वशीये नदी प्रणय कुपिता प्रियेव—

तरग-भ्रू भगा क्षुभित विहग-श्रेणि रशना
विकर्षन्ती फेन वसनमिव सरम्भ शिथिलम् ।
यदाविद्ध यान्ती स्खलितमभिसन्धाय बहुशो
नदीरूपेणेय ध्रुवमसहना सा परिणता ॥ (विक्र ४।५२)

शकुन्तलायास्तु लता सहात्मीयतैव । सा स्वयमपि लतायिता—

अधर किसलय राग कोमल विटपानुकारिणौ बाहू ।
कुसुममिव लोभनीय यौवनमङ्गेषु सन्नद्धम् ॥ (शा १।२१)

पतिगृहाय प्रस्थास्यमानायै वृक्षा एव वस्त्राभरणान्युपहरन्ति, पिकोऽनुमनुते, मयूरा नृत्य जहति, मृगशिशुर्वस्त्राग्ने कर्षति, भाविनीं विपद सूचयन्तोऽपि वृक्षा भारीराशीन् विसृजन्ति । न ता विना शकुन्तलाया पूर्णता । अतएव दुष्यन्त शकुन्तला·

चित्रे हिमाचलस्य पादाना वर्णन समाचरति । अत एवोक्तमचेतनानपि चेतनीकृतान् पदार्थान् दृष्ट्वा केनाऽपि—

'भावानचेतनानपि चेतनवच्चेतनान्यचेतनवत् ।
व्यवहारयति यथेच्छम्,'

व्यग्यमयी प्रवृत्ति —प्रेम्ण पावनता दर्शयितुकामोऽङ्कत्रये नायकनायिकयो स्खलन दर्शयति, तेन 'The Shakuntalam is Tragedy of errors' (स्खलितानां दु खान्तता) इति कथन सत्यम् । चतुर्थेऽङ्के चन्द्रास्तमन राज्ञोऽहङ्कृतेर्ध्वंस । पचमे च दुष्यन्तो मानवस्यार्थिचित्तरता (Human Vanity) सूचयति । दिव्ये मारीचाश्रमे तप कृता सफलता ।

शाश्वतानन्दे लक्ष्यम्—धर्माविरुद्ध काम भुक्त्वाऽपि स्वपदप्राप्तिरेव जीवस्य लक्ष्यभूता ।

'प्रवर्तता प्रकृतिहिताय पार्थिव सरस्वती श्रुतिमहती महीयताम् ।
ममापि च क्षपयतु नील-लोहित पुनर्भव परिगत शक्तिरात्मभू ।। (शा भ वा )

*अतएव भोगेऽपि योग समाध्य नित्यानन्दमुपदिशत शैवदर्शनस्य सर्वत्र* व्यञ्जना ।

कलाना सरक्षणम्—न कालिदास केवल पद्य योजना पटु कवि । चित्रकलायां, सगीते, नृत्ये च स गृहीतक्षण शाकुन्तले हसवत्या मद्याश्च गीती, विक्रमोर्वशीये चतुर्थेऽङ्के तद्बाहुल्यम्, मालविकाया नृत्यस्य सगीतस्य वर्णन च पुन शाकुन्तले चित्रकर्म तस्य रुचि व्यञ्जयन्ति । मालविकाया इद पद्य नादमाधुर्येण मृदगमिव वाद्यमानमनुभावयति—

जीमूतस्तनितविशङ्किभिर्मयूरैरुद्ग्रीवैरनुरसितस्य पुष्करस्य ।
निर्ह्रादिन्युपहितमध्यमस्वरोत्था मायूरी मदयति मार्जना मनांसि ।। (मा ल )

अस्मिन्नाटके तस्य नृत्यनाट्यसगीतादिविषये पारदृश्वता स्फुटतामापद्यते ।

सार्वभौमराष्ट्रस्य चित्रम्—कालिदासोऽखण्डभारतस्य भक्त । इय राष्ट्रप्रियता तस्य कृतिषु गूढा लभ्यते । 'आसमुद्रक्षितीशानाम्' इत्यादर्शस्तस्य । अतएव मारीच —

रथेनानुद्घातस्तिमितगतिना तीर्णजलधि
पुरा सप्तद्वीपा जयति वसुधामप्रतिरथ ।
इहाय सत्त्वाना प्रसभदमनात्सर्वदमन
पुनर्यास्यत्याख्यां भरत इति लोकस्य भरणात् ।। (शा. ७।३३)
इति भरतमाशास्ते ।

भूमिस्वर्गयोर्मेलनम्—कालिदासो भूमिं स्वर्गेण सख्यभाजं दिदृक्षुः। अतएव विक्रमोर्वशीये दिव्यादिव्ययोः प्रीतिं शाकुन्तले च स्वर्गभूमौ प्रेम्णः साफल्यं देवमानुषसहयोगं यज्ञसंस्कृते फलं दर्शयति। नहि नहि, देवा एव मानवसहयोगाकांक्षिणः प्रदर्श्यन्ते। अतएव स्वर्गामिनोऽपि दुष्यन्तस्य पृथिवी प्रत्युदारोक्तिः—

शैलानामवरोहतीव शिखरादुन्मज्जतां मेदिनी,
पर्णाभ्यन्तरलीनतां विजहति स्कन्धोदयात् पादपाः।
सन्तानात् तनुभावनष्टसलिला व्यक्तिं भजन्त्यापगा
केनाप्युत्क्षिपतेव पश्य भुवनं मत्पार्श्वमानीयते ॥ (शा० ७।८)

दूरारोहिणीयं कल्पना। किं कालिदासेनापि कदाचिदन्तरिक्षयानमारूढं भवेत् ? 'तव भवतु बिडौजाः प्राज्यवृष्टिः प्रजासु, त्वमपि विततयज्ञः स्वर्गिणः प्रीणयस्व,' इत्युक्त्या च स 'परस्परं भावयन्तः श्रेयः परमवाप्स्यथ' इति गीतावचनमेवानुसरति। परं स्मरन् 'क्षीणे पुण्ये मर्त्यलोकं विशन्ति' इति कथनं पुनर्भवं प्रणमेवात्यन्तिकं श्रेयः कामयते।

किं बहुना, विपुलेनापि प्रबन्धेन न शक्यन्ते गणयितुं कालिदासीयनाटकगरिमाणः किं तावदेतेन क्षुद्रेण निबन्धेन। स भारतस्य चित्रकारः, प्राणदाता, संस्कृतेरुज्जीवयिता। केवलं तस्य नाटकानि पठन्ति रसं चास्वादयन्ति रसिकाः। न तत्र निहितं शाश्वतं जीवनमयं समकालिकं राष्ट्रस्य व्यापकं चित्रञ्च लक्षयितुं पारयन्ते। आदर्शमुखी यथार्थं प्रिया च तस्य दृष्टिः। अतएव शाकुन्तले पात्रवैविध्यं दृश्यते। षष्ठेऽङ्के नगररक्षिणोर्नागरस्य च चरित्रं धीवरस्य स्वाभिमानपूर्णोक्तिरक्षिणी विस्फार्य पठनीये। न वृथैव कृता समालोचकैरस्य कवेर्भूयसी प्रशंसा।

कालिदासः शेक्सपीयरश्च—आंग्लभाषायां श्रेष्ठो नाटककारः शेक्सपीयरो ऽपि कालिदासवदेव जीवनस्य यथार्थं स्वरूपं प्रस्तौति, अन्तर्द्वन्द्वं बहिर्द्वन्द्वं च, समाजकृतानि स्खलितानि, अन्यायांश्च, मानुषप्रकृतिसुलभां दुर्बलतां साधु निरूपयति, परं स जीवने शश्वदनुभूतचरा अपि तास्तथैव प्रस्थापयन् वेदनामेव मनसि मुञ्चति न कालिदासवत्सुपरिणामदर्शनेन शाश्वतानन्दे सामाजिकान्मज्जयितुं क्षमः। अनेन न स कालिदासस्य साम्यं भजते।

कालिदासो भवभूतिश्च—संस्कृतसाहित्ये नाटककृतां बाहुल्येऽपि भवभूतिरेव सरस्वतीविलासेन कालिदासेन सह स्पर्धते। सत्यं तस्योत्तररामचरितं सुन्दरतरं करुणरसपूरप्लावितम्, *मज्जयति तत्रापि शृंगारतरंगिणी रसिकमनांसि तरंगयति तदपि जनमनस्स्वनुभूतितीव्रताम्*, परं वर्तते द्वयोर्महदन्तरम्। जी० पी० भट्टाचार्यस्य मतेन

कालिदासः संस्कृते भारतीयकाव्ये चातुर्यं भव्यतां सौन्दर्यं च, भवभूतिरपि तत्रापूर्वां दिव्यतामुदात्ततां च समचारयत्। तस्यैव शब्देषु च—

'As kalidasa is an ideal poet of nature, So Bhavbhuti is an ideal poet of human mind. kalidasa's art is suggestive and graceful like the evernew dawn and that of Bhavbhuti is expressive and eloquent glowing with everflowing splendour like the mid-day sun.'

वस्तुतो भवभूतिर्दाम्पत्यस्य प्रेम्णः कविः, कालिदासस्तु व्यापकस्य प्रेमतत्त्वस्य। कालिदासो व्यञ्जनाप्रियः, भवभूतिरभिधापटुः। कालिदासः परमरमणीयां प्रकृतिमेव वर्णयति, भवभूतिः सौम्यां घोरां च। कालिदासो वैदर्भमार्गस्य, भवभूतिर्गौडमार्गस्य कविः। कालिदासस्य कृतिषु नवनवा रमणीयता, कलायाश्चरमो विकासो भवभूते रचनासु च भावानामुदात्तता ऽनुभूतीनां तीव्रता च विद्यत इति द्वयोर्वैभिन्यम्।

सन्ति कालिदासे ऽपि स्खलितानि; स्पृशति तस्य रतिर्वासनाकालुष्यम्, पतन्ति पात्राणि स्वोदात्ततायाः, पद्यबाहुल्येनाभिनये वाचिकस्वव्याप्तिः, समयविभागोपेक्षा, अलौकिकानां (Supernatural) दृश्यानां बाहुल्यं च। न चैतानि सूक्ष्मेक्षिकया समीक्षितेषु नाटकेषु तिरोदधति, परं रसपरिपाकेन विस्मरन्त्येव लोकास्तेषामिति प्राक्कृता एव ते दोषाः। अतः सत्यमेव कालिदासो महान् नाटककारः। धन्या नन सुरभारती, धन्येयं भारतभूमिरतस्य प्रसूः, धन्याश्च तत्कृतिरसमाधुरीलम्पटा रसिकचञ्चरीका इति शम्।

---

तावद् भा भारवेर्भाति यावन्माघस्य नोदयः।
उदिते नैषधेकाव्ये क्व माघः क्व च भारविः॥

आदिकवेर्वाल्मीकेर्व्यासाच्चोत्तरं कालिदास एव काव्यकार्मणज्ञोऽभूदिति समालोचकानां निष्प्रत्यूहा मतिः। तदवधि कवीनां कौशलं प्रसादामलं कतिपयैः शब्दैः प्रचुरतरस्य चमत्कारवतश्चार्थस्य प्रकाशने सविशेषम्। व्यञ्जनामयी तेषां वृत्तिर्नातिगूढैर्नातिस्फुटैः सरसतमैर्भावैः काव्यरसं रसयति। श्लेषे, चित्ररचनायाम्, निर्मूलासु कल्पनासु च न तेषां प्रवृत्तिः। ध्वनिमयास्तेषां सदुक्तयश्चीनांशुकावगुण्ठितमिव कामिनीवदनमभिनवां कामप्यपूर्वां भावच्छटामभिव्यनक्ति। तदुत्तरकालिकाः कवयस्तु विहाय तादृशीं प्रवृत्तिमसाधारणीषु कल्पनासु पाण्डित्यप्रदर्शने, बहिरङ्गचमत्कारचणकृतिषु श्लेषाद्यलङ्कारबन्धेष्वतिप्रसक्तवर्णनेषु च सविशेषं प्रवर्तन्ते। अस्यां परम्परायाम् आदिमः कविर्भारविर्यस्य किरातार्जुनीयनामके महाकाव्येऽर्जुनस्य पाशुपतास्त्रलिप्सोरिन्द्रकीलपर्वतमभि गमनं, घोरं तपः, तुष्टेन छद्मकिरातेन शङ्करेण सह युद्धं वरप्राप्तिश्चेतीयन्मात्रं कथानकमेवाष्टादशभिः सर्गैः विस्तरेण वर्णितम्।

भारविरयं केषाञ्चिन्मते काञ्चीपतेर्विष्णुवर्धनस्य पारिषदः पश्चाद्वर्तिनो दण्डिनश्च पितामहः। तस्य कालश्च खीष्टाब्दस्य षष्ठशतकमित्यैहोलस्थित रविकीर्तेः शिलालेखे—

येनायोजि न वेश्म स्थिरमर्थविधौ विवेकिना जिनवेश्म।
स विजयतां रविकीर्त्तिः कविताश्रितकालिदासभारविकीर्त्तिः॥

इति पद्ये तस्य नाम्न उल्लेखात् सिध्यति। शिलालेखस्य च समयः ६३४ तम खीष्टाब्दम्।

अस्य महत्त्वे किरातार्जुनीयमित्येकमेव काव्य बृहत्त्रय्यामन्यतम गण्यते। अस्य कथा विश्वकोषात् महाभारताद् गृहीतेति न कस्यापि विवाद ।

अस्यारम्भ कौरवैर्द्यूतच्छलेन हृतसर्वस्वस्य यथासमयमतिवाहयतो वनवासकाले द्वैतवने निवसत पाण्डवोत्तमस्य युधिष्ठिरस्य पार्श्वे दुर्योधनशासने प्रणिहितस्य वनेचरस्य विदितवेद्यस्य प्रतिनिवृत्तेर्भवति। गते च तस्मिन् निवेदित-रहस्ये निकारस्मृतिकलुषनयना याज्ञसेनी परुषं दामशीलता निन्दन्ती शोचन्ती च तस्यारण्यवास दुर्गतनिवर्तनाय पौरुषावलम्बनाय च नृपति प्रेरितवती। मध्यमपार्थश्च वृकोदर ऊर्जस्वल दर्द्दस्तस्या एव वचन समर्थितवान्। तदा नृपो धर्मात्मज कोपपरीत-मानसमनुज सान्त्वयन् नयाश्रयणात्मक पक्ष पोषयतु सहसा समुपस्थितेन व्यासेन भीष्मादीना प्रतिरथाना पराक्रम प्रकाश्य शिवतोषणायेन्द्रादीना चोपास्त्यै वीरमर्जुन प्रेषयितु समादिष्ट । इन्द्रकील पर्वत गत्वा च घोर तपश्चरति कौन्तेये सहसा माया-किरातोऽरण्यकोलानुसारी प्रादुरास। तन्निमित्ते महासगरे तद्वीर्यतोषितेन शिवेनास्त्र-प्रदानेन सभाजितोऽर्जुन ।

'व्रज जय रिपुलोक' पादपद्मानत सन् गदित इति शिवेन श्लाघितो देवसघै ।
निजगृहमथ गत्वा सादर पाण्डुपुत्रो धृतगुरुजयलक्ष्मीर्धर्मसूनु ननाम ॥

श्रीशब्देन समारब्ध काव्यमिद प्रतिसर्ग लक्ष्मीशब्देनैव समाप्यते। एवैव लघीयसी कथा वर्णनपाटवेन भारविणाष्टादशभि सर्गैर्वर्णितेति कलाप्रियता कवे स्फुट प्रतिभासते। महाकाव्यमिति कृत्वेह सूर्यचन्द्रादिवर्णनानि कृतानि परमति-पल्लवनात् मूल कथाविषय मन्थरयन्ति काव्ये गह्वयन्ते ।

लघुराज्यबहुल तस्मिन् युगे राजसरक्षिताना कवीना विदुषा च वैदुष्य-प्रदर्शनमत्यभिमतमभूदिति भारविरपि तस्य प्रवृत्तेर्वशवद । द्वितीये सर्गे तस्य राजनीतिपाटव दृश्यते । नवनवाना कल्पनाना कविताप्रासगिकविषयाश्रिता । अन्तिमे सर्गे च चित्रकाव्यस्य प्रवृत्ति पराकाष्ठा स्पृशति यत्रैकाक्षरादिश्लोका बाहुल्येन वर्तन्ते। यथा—

॥ सासि सासुसू सासो येया येया यया यय ।
लली लीला ललोऽलोल शशी शशि शुशी शशन् ॥

कल्पनाया अलौकिकत्व च यथा—

उत्फुल्लस्थलनलिनीवनादमुष्मादुद्धूत सरसिजसभव पराग ।
वात्याभिर्वियति विवर्तित समन्तादाधत्ते कनकमयातपत्रलक्ष्मीम् ॥

भारवेरर्थगौरव प्रसिद्धम् । याज्ञसेनीकृतमुद्बोधनमतितमामोजोमयम्। तस्या इयमुक्तिरतिश्रयसी—

गुणानुरक्तामनुरक्तसाधनः कुलाभिमानी कुलजां नराधिपः ।
परैस्त्वदन्यः क इवापहारयेन्मनोरमामात्मवधूमिव श्रियम् ॥ (१ स.)

श्लेषस्य तु भारवेः काव्ये प्राचुर्यमेव । पदे-पदे भावाभिव्यक्तये कविस्तमाश्रयते । उदाहृत एव पद्ये गरीयसी श्लिष्टोपमा । नादसौन्दर्यमपि न सर्वथा न वर्तते । यथा युद्धप्रसङ्गे—

उन्मज्जन्मकर इवामरापगाया वेगेन प्रतिमुखमेत्य बाणनद्याः ।
गाण्डीवी कनकशिलानिभं भुजाभ्यामाजघ्ने विषमविलोचनस्य वक्षः ॥

इति पद्ये नारिकेलफलसम्मिते भारवेर्वचसि रसिकानां गरीयसी साधनाऽपेक्ष्यते । न तस्य काव्यमेकपद एव क्लिष्टमिति कृत्वा त्याज्यम् । बोधयति च स्वयं महाकविः—

सहसा विदधीत न क्रियामविवेकः परमापदां पदम् ।
वृणते हि विमृश्यकारिणं गुणलुब्धाः स्वयमेव सम्पदः ॥

तदनन्तरं शिशुपाल-वधकर्त्ता माघः समायाति यो वलभीपतेः सभासदः श्रीधरस्य पौत्र इत्येव ज्ञातः । अतः सप्तमशताब्दीभवः स प्रतिपदं भारविमनुकुर्वाणोऽपि तमतिशेतुं चेष्टते । स खलु तदीयमर्थगौरवं भजन्नपि शब्दसौन्दर्यमवगाहते । ततोऽप्यधिकं सकलविषयचुम्बि पाण्डित्यं प्रदर्शयति । तस्य वर्णनच्छटा चित्राऽपि न प्रसेदुषी । सोऽपि श्रीशब्देन काव्यमारभमाणः प्रतिसर्गं श्रीशब्दमन्ते प्रयुङ्क्ते । सोऽप्यर्थबोधाय श्लेषालंकारमालम्बते—

अनुत्सूत्रपदन्यासा सद्वृत्तिः सन्निबन्धना ।
शब्दविद्येव नो भाति राजनीतिरपस्पशा ।

भारवेरिवास्यापि काव्यस्य द्वितीये सर्गे राजनीतितत्त्वानां विस्तरशो-विवेचनम् । वनेचर इव नारदोऽत्र सन्देशहरः, भीम इव बलभद्रोऽत्र सङ्ग्रामैकप्रियः । वनादिवर्णनमिवात्रापि तथा रैवतकपर्वतवर्तियात्राविश्रामे विलम्बते ।

इन्द्रसंदिष्टं शिशुपालवधप्रार्थनं राजसूययियक्षया युधिष्ठिरात्प्राप्तं निमन्त्रणं च समकालमधिगत्य विकल्पद्वये मन्त्रिणा उद्धवस्य सम्मत्या श्रीकृष्णेन इन्द्रप्रस्थं प्रति प्रातिष्ठत, गत्वा च तत्र प्रवृत्ते यज्ञे पाण्डवेन च प्रदत्ते प्रथमसत्कारे रुष्टो शिशुपालः श्रीकृष्णं बहुशोऽधिचिक्षेप पश्चाच्चानेकवीरघस्मरे संग्रामे तेन यदुवीरेण कृत्तकण्ठो मृतः । इत्येव लघ्वी कथा दीर्घविलम्बितनिःसरया सर्गाणां वर्णिता । प्रतिमन्थरेयं गतिर्वस्तुनो न प्रबन्धकाव्यरसं स्वादयति । चित्रे च सर्गे भारवितोऽपि विशिष्टं चित्र-काव्यनैपुण्यं माघेन प्रदर्शितम् । सर्वतोभद्रादयोऽनेके बन्धास्तत्र लभ्यन्ते । समानेऽर्थ-गौरवेऽपि समे चित्रादिनैपुण्ये माघो वस्तुविन्यासेन पादशब्दयोजनया च भारविं समति-

दोते । तस्य ऋतुवर्णनम्, वनविहारः, जलविहारः क्षपाविलसितं च सुतरां रोचकानि । नादसौन्दर्यं तत्रानिदर्लक्षणम् । यथा—

मधुरया मधुबोधितमाधवीमधुसमृद्धिसमेधितमेधया ।
मधुकराङ्गनया मुहुरुन्मदध्वनिभृता निभृताक्षरमुज्जगे ॥

द्वारकाया इन्द्रप्रस्थस्य च वर्णनं नागरिकविभूतिं तद्गतं च माघस्य वैशारद्यमभिव्यनक्ति । यत्र तत्र गजतुरगरासभादिपशुपक्षिप्रकृतिचित्रणं तद्विषयं च कवेर्ज्ञानं स्फुटतां स्पृशति । परं सकलमिदं कौशलं न भारवेर्गाम्भीर्यं भजति । तत्र विलक्षणैव कृत्रिमताऽऽयासकृता प्रत्यक्षायते समालोचकानाम् । अतः तादृशेऽनैसर्गिककाव्यनिर्माणे सत्यमेव माघो भारविमतिक्रामति । यद्यपि न सहजा प्रातिस्विकी न स्पृशति प्रतिभाम् । तस्य प्रभातवर्णने प्रकान्तः —

कुमुदवनमपश्रि श्रीमदम्भोजखण्डं,
त्यजति मुदमुलूकः प्रीतिमांश्चक्रवाकः ।
उदयमहिमरश्मिर्याति शीतांशुरस्तं
हतविधिलसितानां ह्री विचित्रो विपाकः ॥

इति श्लोकौ रत्नायते संस्कृतकाव्ये । कल्पनाक्षेत्रेऽपि न माघो भारवेः कथमप्यून । तस्य—

उदयति विततोर्ध्वरश्मिरज्जावहिमरुचौ हिमधाम्नि याति चास्तम् ।
वहति गिरिरयं विलम्बिघण्टाद्वयपरिवारितवारणेन्द्रलीलाम् ॥

इति विशदकल्पनामयं पद्यं तं घटाघयमाघ साधयति । तदुत्तरं महाकविश्रीहर्षः कालिदासोत्तरकालिकीं चित्रकाव्यमयीं प्रवृत्तिं चरमं रूर्षं नयन् तदनुसारिणां कवीनां चूडामणीयते । खड्गबन्धादिषु न स तादृशीं रुचिं भजते यथा श्लेषादिषु क्लिष्टकल्पनासु वा । नैसर्गिकी काव्यसुषमा नास्यापि कृतिषु सुलभा सत्यामपि विलक्षणाया प्रतिभायाम् ।

अयं खलु कान्यकुब्जेशस्य जयन्तचन्द्रस्य सभ्यः कविरिति द्वादशीशताब्दी तस्य काल इति मतमनवद्यम् । स्वयं च तेनोक्तम्—

'ताम्बूलद्वयमासनं च लभते यः कान्यकुब्जेश्वरात् ।'

अयं न केवलं कविः परमतार्किको ब्रह्मविद्याविशारदश्चेति—

'यः साक्षात्कुरुते समाधिसमये ब्रह्मप्रमोदार्णवम् ।'

वाक्यमिदं प्रकटयति । अस्याद्भुता प्रतिभा स्वाश्रयभूतं राजानमधिकृत्य पठितेनानेन श्लोकेन स्फुटीभवति—

गोविन्दनन्दनतया च वपुःश्रिया च माऽस्मिन्नृपे कुरुत कामधियं तरुण्यः ।
अस्त्रीकरोति जगतां विजये स्मरः स्त्रीरस्त्री जनः पुनरनेन विधीयते स्त्री ॥

अस्य कृतयः नैषधीयचरितम्, गौडोर्वीशकुलप्रशस्तिः, स्थैर्यविचारप्रकरणम्, नवसाहसाङ्कचरितचम्पूः, विजयप्रशस्तिः, शिवशक्तिसिद्धिः, खण्डनखण्डखाद्यम् इति विशेषेण प्रसिद्धाः । तत्र नैषधम् चिन्तामणिमन्त्रजपफलमिति कविना स्वयमुक्तम् । अत्र कवेः पाण्डित्यप्रदर्शने रुचिः पराकाष्ठां भजते । श्लेषः (परीरम्भक्रीडा) यत्र तत्र बाहुल्येन प्रयुज्यते यस्य चरमसीमा त्रयोदशे सर्गे दृश्यते । इन्द्रवरुणयमानलानां नलस्य च युगपद् वर्णनं तत्रैव लभ्यते यस्येदमुदाहरणम्—

देव पतिर्विदुषि नैषधराजगत्या निर्णीयते न किमु न व्रियते भवत्या ।
नायं नलः खलु तवातिमहानलाभो यद्येनमुज्झसि वरः कतरः परस्ते ॥
(नै १३।३४)

नैषधस्य रचना निषधाधिपस्य नलस्य वैदर्भ्या दमयन्त्या सह प्रणयं पश्चात्परिणयं चाधिकृत्य विहिता । न तत्र सम्पूर्णा कथा दृश्यते । द्वाविंशतिसर्गेषु नलस्य प्रणयो हंसस्य दमयन्तीसमीपे गमनम्, तदाशयज्ञानम्, दमयन्तीविरहवर्णनम्, स्वयंवरः, परिणये प्रथमसमागमः इत्येतावती कथा विस्तरेण वर्णिता । अयं सर्गान् स्वयंवरमेव निबध्नातीति वैभिन्यम् । दमयन्तीसौन्दर्यं चानेकवारं वर्ण्यते मर्यादा च तत्र परिहीयते । स्थाने स्थाने कविः स्वपाण्डित्यं प्रकटयति ।

अस्या मुनीनामपि मोहमूहे भृगुर्महान् यत्कुचशैलशीली ।
नानारदाऽऽह्लादिमुखं श्रितोरुर्व्यासो महाभारतसर्गयोग्यः ॥ (नै ७।८६)

न नैषधं प्रसादगुणगुम्फितं कालिदासकृतिवत् । स्वतोऽपि कठिने कविना विद्वच्छेमुषीनिकषायिता कारवन ग्रन्थयस्तत्र गूढं निहिता इति स्वयमुद्घोषयति—

ग्रन्थग्रन्थिरिह क्वचित्क्वचिदपि न्यासि प्रयत्नान्मया ।
प्राज्ञम्मन्यमना हठेन पठिती माऽस्मिन् खलः खेलतु ॥ (२२।३)

अल्पज्ञा न तस्य रसने समर्था इति श्रीहर्षस्य तोषप्रदम्—

यथा यूनस्तद्वत् परमरमणीयाऽपि रमणी ।
कुमाराणामन्तःकरणहरणं नैव कुरुते ।
मदुक्तिश्चेदन्तर्मदयति सुधीभूय सुधियः,
किमस्या नाम स्यादरसपुरुषानादरभरैः ॥ (२२।१४२)

श्रीहर्षं शास्त्रीयविद्यासूत्राविकानेव रसिकरवेण स्वीकरोति । मन्ये, एवं प्रवृत्तिस्स विरहवर्णनेऽपि परपक्षानुमानसाधने नियोजयति यदसौ पाणिनिसूत्राणि परिभाषादच यत्र-तत्र निवेदयति ।

श्रीहर्षकाव्यं चमत्कारवादिनां कृतिषु मुख्यतमम् । अतएव तस्य वर्णनेषु न रसिकजनसुखदा सुकुमारता । न तस्योत्प्रेक्षा सहृदयहृदयस्पर्शिनी । न तस्यातिशयोक्तयो याथार्थ्यलेशविद । विभिन्नशास्त्रप्रावीण्यप्रकाशनविषये प्रयतेन काव्यमिदं शास्त्रीकृतम् ।

कथानक महाभारताद् गृहीतमिति तस्य प्रभाव स्पष्ट एव । पर माघभारविरत्नाकरादिचमत्कारवादिना प्रवृत्तिस्तत्र स्फुटा वर्तते । वर्णनेऽतिप्रसक्तिरेव वस्तुत प्रवाहमवरुन्धे ।

नवरसाना परिपाके प्रयत्नशीलोऽपि कवि शृङ्गारे गृहीतक्षण । सयोगे विप्रलम्भे च तस्य तुल्या प्रवृत्तिरुभयत्राप्यलङ्कारक्रीडा तनोति । दमयन्तीविरह-वर्णने काश्चित्कल्पना अतिसरसा । यथा—

श्रवणपूरतमालदलांकुर शशिकुरगमुखे सखि निक्षिप ।
किमपि तुन्दिलित स्थगयत्यमु सपदि तेन तदुच्छ्वसिमि क्षणम् ॥ (४।५९)

शशिकरपीडिता मुकुरस्थस्य तस्य चूर्णनाय सखी निर्दिशति दमयन्ती । स्वचकोरशिशु मृगस्य शिष्यता ग्राहयिष्यति सा । शृङ्गारे विशेषतो विप्रलम्भे श्रुतिकटुत्वस्य प्रतिकूलत्वेऽपि कविर्नितरामुदास्ते । अतएव—

वपुपहृत्यपमृत्युविरूपता शमयतेऽमर-निर्जर-सेविता ।
प्रतिशमाम्बवपु क्षतिपाण्डुता स्मर भवन्ति भवन्तमुपासितु ॥ (४।८५)

अत्र तवारस्यकारसयोगोऽऽनेकदाऽगत कर्णयोरतीवारुन्तुद । हास्यो निबद्धोऽपि श्रीहर्षस्य न मर्यादासह । तथापि बहुशोऽस्य गम्भीरानपि स्मेराननानाचरति—

उभयी प्रकृति कामे सज्जेदिति मुनेर्मन ।
अपवर्गे तृतीयेति भणत पाणिनेरपि ॥ (१७।७०)

श्रीहर्षो वैदर्भी रीतिमनुसरतीति तत्कृते पद्यमिदमुदाहरन्ति—

धन्याऽसि वैदर्भि गुणैरुदारैर्यया समाकृष्यत नैषधोऽपि ।
इत स्तुति का खलु चन्द्रिकाया यदब्धिमप्युत्तरलीकरोति ॥ (३।११६)

पर न तस्य वैदर्भी कालिदासरचनेव मसृणता बिभर्ति । बहुशो गौडी प्रधानतामाकलयति, तत्र कवे प्रतिभा सुतरा प्रतिभाति । पर कानिचित्स्थलानि सर्वथा मार्मिकाणीति न सन्देह । यथा—

मदर्थसदेशमृणालमन्थर प्रिय कियद्दूर इति त्वयोदिते ।
विलोकयन्त्या रुदतोऽथ पक्षिण प्रिये स कीदृग्भविता तव क्षण ॥ (१।१३७)

पदलालित्यकृते सर्वत्रैव नैषधस्याति.। नास्ति तत्र कतमदपि पद्यमनुप्रास-विरहितम् ।

उत्तुंगमंगलमृदंगनिनादभंगीसर्वानुवादविधिबोधितसाधुबोधा.।
सौधस्रज. प्लुतश्ताकतयाभिनिन्युर्मन्ये जनेषु निजताण्डवपण्डितत्वम् ।। (११।६)

अत्र पद-झंकृतिरतिशयेन कर्णयो सुखदा ।

इत्थं विमर्शनिष्पन्नं एतावान् यदखिलाः कवय कालिदासादर्वाक्तनाश्चमत्कार-धायिता काव्यसौष्ठवायावश्यकत्वेनामन्यन्त । राजससदा प्रभावोऽपि तेषा विशेष-दिग्ग्रहणहेतु । तेन सत्यामपि विलक्षणाया प्रतिभाया विद्यमानेऽपि कवित्वकौशले न प्राभवन् ते कवय आत्मान निरोद्धुम् पाण्डित्यप्रदर्शनात् । ततस्तदा कृत्रिमतामयं काव्यं कर्तुमेव ते प्रायतन्त । तेषु च श्रीहर्षकाव्य सर्वोत्तमम् । अत एवोक्तम् ।

'उदिते नैषधे काव्ये क्व माघ क्व च भारविः ।'

# महाकविर्भवभूतिः

कालिदासादनन्तरं भवभूतिरेव सर्वोत्तमो नाटककारः । असौ प्रेम्णि, प्रकृति-वर्णने, मानव हृदयस्य स्फोरणे, नाट्यकौशले च साटोपं कवीनाह्वयते । कालिदास प्रशंसकेषु रसिकेषु शृङ्गाररसप्रसङ्गे प्रतिपादितमेव केनचित्—

'उत्तरे रामचरिते भवभूतिर्विशिष्यते' ।

नात्र काचिदप्यतिशयोक्तिरिति हृदयवृत्त्यभिज्ञाना मतम् ।

समयः—भवभूतिः क्व कुत्र वा बभूव, किमस्य सत्यं नामेति विचिकित्सायां निराशे मनसि लभ्यते स्वल्पोऽपि तदुदितः एवोदन्तः उत्तररामचरितप्रस्तावनायाम्—

अस्ति खलु तत्र भवान्काश्यपः श्रीकण्ठपदलाञ्छनः पदवाक्यप्रमाणज्ञो भवभूति-र्नाम जातुकर्णीपुत्रः ।" (उ च प्र)

अयमौदुम्बरगोत्रः, पद्मपुराभिजनः, तैत्तिरीयशाखाध्यायी, नीलकण्ठस्य जातुकर्ण्याश्च पुत्रः श्रीकण्ठलाञ्छनः, कान्यकुब्जेश्वरस्य यशोवर्मणः परिषद-मलञ्चकारेति तस्यैव कृतिभिर्ज्ञायते । तस्यैव राज्ञोऽन्य सभ्यः कविर्वाक्पतिर्भवभूतिं स्वकाव्ये 'गउडवहो'सञ्ज्ञे स्मरति, काव्यालङ्कारकर्ता वामनश्च सर्वप्रथम-स्तमुल्लिखतीति खीष्टाब्दस्य ७३६ समीपे काश्मीरेण मुक्तापीडललितादित्येन पराजितो यशोवर्मेति कल्हण रचितायां राजतरङ्गिण्यां लेखादष्टमशताब्द्यां जातोऽयमिति सिध्यति ।

अस्योपाध्याय केचित्कुमारिलं कथयन्ति । भवभूतिरिति तस्योपाधिरेवेत्यनु-श्रुतिः

तपस्वी कां गतोऽवस्थामिति स्मेराननाविव ।
गिरिजायाः स्तनौ वन्दे भवभूतिसिताननौ ॥

इति श्लोकमूला । अयं पद वाक्य प्रमाणज्ञो वेदेषु, व्याकरणे, न्याये, काम-शास्त्रे च पारदृश्वा । काव्येऽप्ययं सिद्धवागिति स्वयमेवोदाहरति—

यं ब्रह्माणमियं देवी वाग्वश्येवानुवर्तते ।
उत्तरं रामचरितं तत्प्रणीतं प्रयुज्यते ॥ (उ. च. प्र)

भोज-प्रबन्धेऽपि भोजसभासत्कालिदासं प्रति स्पर्धमानश्च वर्णितस्तत्संबद्ध श्लोकश्च कथितः —

हठादाकृष्टानां कतिपयपदानां रचयिता
जनः स्पर्धालुश्चेदहह कविना वश्यवचसा ।
भवेदद्य श्वो वा प्रकृति-कुटिले पापिनि कलौ
घटानां निर्मातुस्त्रिभुवनविधातुश्च कलहः ॥ इति ।

परं न भोजप्रबन्धो विश्वासार्हो यत्र प्राक्तना अर्वाचीनाश्च सर्वेऽपि कवय एकत्र वर्णिताः समकालिकतया ।

भवभूतेः तथा प्रतिभावानपि नाप प्रतिष्ठां स्वकाले इति तस्य—

ये नाम केचिदिह नः प्रथयन्त्यवज्ञां
जानन्ति ते किमपि, तान्प्रति नैष यत्नः ।
उत्पत्स्यतेऽस्ति मम कोऽपि समानधर्मा
कालो ह्ययं निरवधिर्विपुला च पृथ्वी ॥
अनेन श्लोकेन प्रमाणीक्रियते ।

**कृतयः** —त्रीणि रूपकाण्येवाद्यत्वे भवभूतेर्मन्यन्ते— महावीरचरितम्, उत्तर-राम चरितम्, मालतीमाधवञ्च । तत्राद्ये नाटके तृतीयं तु प्रकरणम् । प्रथमे रामस्य जन्मतः प्रभृति लङ्काविजयावधि द्वितीये च सीतापरित्यागसम्बन्धिनी कथा वर्णिता । मालतीमाधवे तु भूरिवसुपुत्र्या मालत्या विदर्भमन्त्रिपुत्रस्य-माधवस्य च प्रणय-वर्णनम् । महावीरचरिते कथा रामायणोपज्ञाऽपि कवेः कल्पनया नवीकृता । न तत्र सीताहरणस्य मूलं शूर्पणखाया नासाच्छेदनाभम् । ताडकावधप्रसङ्गेन शिवधनुश्छेदे जानकीवरणा-त्प्रभृत्येव प्रवृत्तं रामस्य रावणस्य च मिथो वैरम् । तत्केशकृतेनाभिसन्धिना रामस्य वनवासो वैदेही-हरणं वालि वधश्च । रावणकुलनाशानन्तरं अयोध्यायां रामाभिषेकेनैव नाटकस्य समाप्तिः । अस्मिन्नाटके वीररसो मुख्योऽन्ये च गौणाः । नाट्यशास्त्रस्य मर्यादानां साधु पालनम् । कथायाः परिवर्तने कवेः कल्पना साधु प्रभवति ।

परं दिव्यैर्द्दृश्यैरभिनेयता नाटकस्यावहीयते । गौडी वृत्तिमावहच्च दुर्बोधतामा-चरति सामाजिकानाम् । ओजोनुरूपिणी शैली बौद्धृणां प्रमोदावहैव । तावान् कथा-भारो विस्तृतोऽपि सप्तस्वङ्केषु निवेशितः । नाटके वर्णिताः षड्यन्त्रं नये राजकीया कूटनीतयः साधु परिचिता लक्ष्यन्ते । वालिनो रावणेन सहाभिसन्धिस्तत्कथनेन च राम

हनुमुद्योग परिणतौ व्यापतितश्च नायकस्य चिरप्रवृत्त प्रच्छन्नवधशलङ्कू परिमार्ष्टि परमय दु सहो रसभङ्गदोषो नेतृचरित्र आयातश्च यत् परशुरामेण सह प्रवृत्ते समर-निमन्त्रके परा प्रौढिमायते विवादे रामस्य कथन बन्धुगणमोचनाय गच्छामीति तस्या-वसरायसपंणशीलता द्योतयति । तेन च रणवातरत्व तस्य सूच्यते ।

उत्तरे रामचरितेऽपि कथा रामायणीयसैव सीता-परित्याग-सम्बन्धिनी । पर छायासीतादर्शन कवे. प्रतिभाया उर्वरता प्रकटयति । अनेन रामस्य जानकीं प्रति गाढा प्रीतिपरायणता स्वप्नमामाषादिना । अत्रैव च वासन्त्या सह सवादेन करुणस्य परा प्रौढि कृता । परमादितो गर्भसन्निला सरस्वतीव शृगारधारा यावदन्त प्रवहति तस्यामेव च सीता-पुन-प्राप्त्या शृगारस्यैव प्राधान्यम् । अतो मध्यगत करुणविप्र-लम्भ एव मन्तव्यो न तु शुद्ध करुण । यद्यपि कविर्यत्र तत्र तस्यैव प्राधान्य ध्वनयति स्वय प्रतिपादयति च 'एको रस करुण एव' इत्यादिना । सप्तमेऽङ्के मेलापकेन नव्यता प्रापितो रामायणीय कथा सन्दर्भ सुखान्तीकृत च नाटकम् ।

मालतीमाधवे वस्तुनि समवन कविकल्पोत्प्रवृत्ता कथैव रूपान्तरीकृतेति विविच्यते कीथमहोदय । परमाताहशकथानकोपलब्धि वृत्तस्य कल्पुपगतैव स्वी-कार्या भवत् । प्रमाण विना हि तादृशी कल्पनाऽऽहोपुरुषिकामात्रम् । प्रकरणे च कथानकस्य मौलिकत्व नाट्याचार्य प्रतिपादितचरम् ।

पद्मावती-सचिवस्य भूरिवसो पुत्र्या मालत्या वैदर्भमन्त्रिणो देवरातस्य पुत्रेण माधवेन सह परिणये राज्ञो नर्मसचिवस्य नन्दनस्य प्रतियोगिताच्छलेन कविर्वस्तु नायकनायिकयो प्रेमाण च रोमाचक (Romantic) समाचरति । मकरन्दस्य मालतीवेषधारण मदयन्तिकारक्षण च, माधवस्य नैराश्ये महामांसविक्रय कालीमन्दिरे चामोरघण्टसकाशान्मालत्या मोक्ष, कपालकुण्डलाया प्रतिशोधयत्न, सर्वैरप्येतै प्रसगै-र्बहूनि बाह्यस्यान्तरङ्गस्य च द्वन्द्वस्य, जटिलताया, हास्यस्य कौतूहलस्य च सृष्टिर्वि-धीयते । प्रणयोऽपि नायकनायिकयोर्मकरन्दमदयन्तिकयोश्च साधु परिपाक भजत्येतेन । नाटकीया कामन्दकी मालविकाग्निमित्रस्य कौशिक्या सवदते । अघोरघण्टवृत्तस्तात्का-लिकी वाममार्गस्य प्रबलता व्यञ्जयति । शृगारप्रधानेऽत्र धीरप्रशान्तो नायक, अन्येऽपि रसा साधु परिपाक व्रजन्ति ।

नाटककार सर्वास्वपि रचनास्वलौकिकतत्त्वानि (Supernatural elements) यत्र तत्र समावेशयति । इदानीतनी विचारसरणिमनुसृत्य काम तानि न रोचेरन् समालोचकेभ्य पर प्राक्तनी भारतीया परम्परा तु विश्वसित्येव तेपु । तेन नात्र काचिद् विसवादिता । नाद्यतनो हि भवभूति ।

कवेः शैली—कविरयमभिधाप्रधानोऽनुभूतीर्विस्तरेण वर्णयति । न स कालिदासवत् 'मनोरथानामतटप्रपाता.' इति वदन् पाठकैर्दर्शकैर्वा स्वयमनुभवनीयं किमपि विसृजति । प्रमसविदमपि विस्तरशो निरूपयति । यथा—

इयं गेहे लक्ष्मीरियममृतवर्तिर्नयनयो-
रसावस्याः स्पर्शो वपुषि बहुलश्चन्दन-रस. ।
अयं कण्ठे बाहुः शिशिरमसृणो मौक्तिकसरः
किमस्या न प्रेयो यदि परमसह्यस्तु विरहः ॥ (उ. च. १)

कीथमहोदय. कालिदासेन तुलयन् भवभूतिं लिखति—

"of the sweetness and charm of kalidasa he has as little as of the power of suggestion displayed by his predicessor, but he excels in drawing with a few strokes the typical features of a situation or emotion. He Seeks propriety in his characters' utterances"

(कीथः स. ड्रा. पृ० २०२)

(भवभूतौ न कालिदासकृतिवन्माधुर्यव्यञ्जकत्व च परं कतिपयाभिरेव रेखाभिः दशा भावाश्च वर्णयन् सोऽतिशेते । पात्रैरेव सकलमपि वस्तु स्फोरयति स.) मानसवृत्तीनां निरूपणे कुशलो भवभूतिः; चन्द्रकेतुर्लव स च त दृष्ट्वाऽन्तर्वृत्त्याऽऽकृष्टो मनसि सविस्मयं मन्त्रयते—

यदृच्छासम्पातः किमु गुणगणानामतिशय,
पुराणो वा जन्मान्तरनिबिडबन्ध परिचयः ।
निजो वा सम्बन्धः किमु विधिवशात्कोऽप्यतिशय
ममैतस्मिन्दृष्टे हृदयमवधानं रचयति ॥(उ. च. ५।१६)

प्रेमाकुलयोर्मालतीमाधवयोर्दशाऽस्मिन्पद्येऽतितरां स्फुटा—

भूयोभूयः सविधनगरीरथ्यया पर्यटन्तं
दृष्ट्वा दृष्ट्वा भवनवलभीतुङ्गवातायनस्था ।
साक्षात्कामं नवमिव रतिर्मालती माधवं च
गाढोत्कण्ठालुलितलुलितैरङ्गकैस्ताम्यतीति ॥ (मा. मा. १।१८)

गौडीं रीतिं प्रति भवभूतेरत्याग्रहः । समासबहुल. पदबन्ध. सर्वेष्वपि नाटकेषु प्रायो दृश्यते । वीरचरिते तस्यातिशय. । शिवधनुर्भङ्गज ध्वनिं वर्णयति सः—

दोर्दण्डाञ्चितचन्द्रशेखरधनुर्दण्डावभङ्गोद्यत—
ष्टङ्कारध्वनिरार्यबालचरितप्रस्तावनाडिण्डिम ।
द्राक्पर्यस्तकपालसंपुटमिलद्ब्रह्माण्डभाण्डोदर-
भ्राम्यत्पिण्डितचण्डिमा कथमहो नाद्यापि विश्राम्यति ।

हास्यवर्णने न भवभूते प्रवृत्ति । उत्तररामचरितस्य चतुर्थेऽङ्के दर्शितमसाफल्य तेन । वात्सल्यस्याभिव्यक्तिरपि साध्वी । लव दृष्ट्वा रामपुत्रत्वेन सदिहानस्य सुमन्त्रस्य सीतापरित्याग स्मृत्वा वचन कारुण्ये पर्यवस्यति—

मनोरथस्य यद् बीज तद्दैवेनादितो हृतम् ।
लताया पूर्वलूनाया प्रसवस्योद्भव कुत ॥ (उ च ५।२०)

क्वचित्क्वचि शब्दचित्राण्यपि साधु प्रस्तौति । मयूर नर्तयन्त्या सीताया यथा—

भ्रमिषु कृतपुटान्तर्मण्डलावृत्तिचक्षु प्रचलितचटुलभ्रूताण्डवैर्मण्डयन्त्या ।
कर-किसलय-तालैर्मुग्धया नर्त्यमानं सुतमिव मनसा त्वा वत्सलेन स्मरामि ॥
(उ च ३।१९)

दाम्पत्यप्रेम्ण स्वरूप भवभूतिरेव वर्णयितु शक्त—

अद्वैत सुखदुखयोरनुगत सर्वास्ववस्थासु यत्
विश्रामो हृदयस्य यत्र, जरसा यस्मिन्नहार्यो रस ।
कालेनावरणात्ययात्परिणते यत्प्रेमसारे स्थितम्
भद्र तस्य सुमानुषस्य कथमप्येक हि तत्प्राप्यते ॥ (उ च १)

भवभूति कालिदासवत्प्रकृतिप्रिय पर न केवल रम्येषु भीषणेष्वपि तस्या रूपेषु दृष्टिरामज्जतऽस्य, साऽपि विशेषेण भावान् प्रबोधयति । यथा—

स्निग्धश्यामा क्वचिदपरतो भीषणाभोगरूक्षा
स्थाने स्थाने मुखरककुभो झाङ्कृतैर्निर्झराणाम् ।
एते तीर्थाश्रमगिरिसरिद्गर्तकान्तारमिश्रा
सदृश्यन्ते परिचित भुवो दण्डकारण्यभागा ॥ (उ च २।१४)

भीषण दृश्य च यथा—

निष्कूजस्तिमिता क्वचित्क्वचिदपि प्रोच्चण्डसत्त्वस्वना
स्वेच्छासुप्तगभीरघोरभुजगश्वासप्रदीप्ताग्नय ।
सीमान प्रदरोदरेषु विलसत्स्वल्पाम्भसो यास्वय
तृष्यद्भि प्रतिसूर्यकैरजगरस्वेदद्रव पीयते ॥ (उ च २।१६)

न केवलं भौतिकवृत्तिर्मानस्यपि स्पष्टं विश्लिष्यतेऽनुभावमुखेन संविन्मुखेन वा, उभयोरपि हृदयविलेखनी तीव्रता । यथा मालत्याम्—

> वारं वारं तिरयति दृशोरुद्गमं बाष्पपूरः
> तत्संकल्पयोपहितजडिमा स्तम्भमभ्येति गात्रम् ।
> सद्यः स्विद्यन्नयमविरतोत्कम्पलोलांगुलीकः
> पाणिर्लेखाविधिषु नितरां वर्तते किं करोमि ॥ (मा. मा. १।१८)

अपरतश्च विरहस्य तीव्र आवेगः—

> हा हा देवि स्फुटति हृदयं ध्वंसते देहबन्धः
> शून्यं मन्ये जगदविरलज्वालमन्तर्ज्वलामि ।
> सीदन्नन्धे तमसि विधुरो मज्जतीवान्तरात्मा
> विष्वङ् मोहः स्थगयति कथं मन्दभाग्यः करोमि ॥ (उ. १।३८)

मनोवैज्ञानिकं विश्लेपणं चात्र लघुन्यपि पद्ये—

> पूरोत्पीडे तटाकस्य परीवाहः प्रतिक्रिया ।
> शोकक्षोभे च हृदयं प्रलापैरेव धार्यते ॥ (उ. च. ३।२९)

अयं तावन्निष्कर्षः । भवभूतिर्मानवहृदयस्य निपुणो व्याख्याता, प्रेम्णः कारुण्यस्य च सफलो वर्णयिता । परं वैदिकः प्रभावो गौढां प्रति मोहश्च तस्य कृतीः काठिन्यं नयतः । तस्य प्रेमा विशुद्धस्तीव्रानुभूतिमयश्चेति वासनामयीं प्रीतिं वर्णयन्तं कालिदासमतातिशेते । मानमीनां वृत्तीनां तादृशं भव्यं स्वरूपं न तत्र वर्तते । अभवनयत्र कीथमहोदयस्य टिप्पण्यः—

'Bhavabhuti on his part, recognized wirh a truer insight sharpened perhaps by the obvious inferiority of *his fortunes and failure to enjoy substantial royal favour,* the difficulties and sorrows of life. His theme is not joys of a plealsure-loving great king·········but the bitter woes of Rama and Sita, who have for us the reality of *manhood.'* *(Sanskrit Drama 197)*

भवभूतिः स्वयं दुःखानुभवाना दारुणया गुरुतरामन्तर्दृष्टिमवाप । न तु स कालिदासवत् सुखं प्राप राज्याश्रयात् । अतस्तस्य नायको विलासी नृपो न, अत एव स करुणं रसं मुख्यतमं मन्यते सर्वानुभूतिमूलम्—

> एको रसः करुण एव निमित्तभेदाद् भिन्नः पृथक् पृथगिवाश्रयते विवर्तान् ।
> आवर्तबुद्बुदतरंगमयान्विकारानम्भो यथा सलिलमेव तु तत्समस्तम् ॥

# बाणोच्छिष्टं जगत्सर्वम्

धन्यास्ते महाकवयोऽन्तर्दृष्ट्या येऽतीन्द्रियमपि योगिनामपि दुराप वस्तु निभालयन्ति । प्रभातकल्पाया शर्वर्यास्तारा इव विवेया प्रगुलीषु विरला एव ते सहजाप्रतिहतप्रतिभा । तेषु बाण स्वकाव्यपाटवेन, वर्णनशक्त्या, कल्पनावैचित्र्येण, सकलजगद्व्यापारसाक्षात्कारक्षमशेमुषीप्रभावेणासाधारण गौरव भजते । कवयोऽन्ये हि पद्यबन्धमात्रसीमितकौशला, कतिपयं च गद्येऽपि चालयन्तो लेखनीं कृत्रिमतासमावेशनिहितहृष्टय सुबन्धुसदृशा श्लेषयमकादिविनष्टालङ्कृतिचित्रगद्यबन्धे माभिनिवेशा विस्मरन्ति स्वक्तव्यम् । पद्येऽपि यदा कवयोऽपि वस्तुवर्णनाग्रहग्रहिला सन्तश्च्यवन्ते समुद्दिष्टात्पथ का कथा कान्तारसदृशे मुक्तसीमनि गद्यप्रसङ्गे यत्र वर्ण्यं विस्मरन् कवयन् दूरमेव व्रजेच्च्युतलक्ष्य इव शर । अत एव घोषित सूक्ष्मधीभिरालोचकै —

'गद्यं कवीनां निकषं वदन्ति'

तस्मिन्नभ्रष्टसन्धानश्च्योतयन् रसधारा रसिकहृदयेषु, मदयन् काव्यामृत सम्पदान्, प्रत्यक्षयन् विश्वमपि विश्व विश्वरूपधारी नारायण इव, मञ्जूषामिव नवनवालङ्कारच्छुरितान्तराम्, विलासिनीमिव पटुश्लेषाम् कादम्बिनीमिव प्रवृष्ट-रस-पूराभाम्रवणीमिव रसालशोभनाम्, शारदी सुषमामिव पुण्डरीकानुपक्तमहाश्वेताम्, हरभालशोभामिव हृद्यचन्द्रापीडाम्, बहुलपक्षनिशामिव वृद्धतारापीडाम् वर्धनकुलराजलक्ष्मीमिव प्रस्फोटोच्छ्वासमयहर्षचरिताम् कथामिव विविधप्रसङ्गसङ्गिनीम्, प्रणयिनीमिव रतिप्रगल्भभावाम् पटीयसीम्, गरीयसी पदच्छुरितामसाधारणीं कृति कुर्वन् बाण इव मर्मभेदनपटुर्बाण पञ्चाननायते ।

हर्षचरिते कादम्बर्यां चानेन विस्तरशो वर्णित एव स्ववृत्तान्त इति नायासाय विदुषां तस्य जीवनकथा । वात्स्यायनगोत्रजोऽयं चित्रभानो पुत्रो मौखरिपूजिताद्भत्सोर्विद्यामनवद्यां सिन्धोरिव पीयूषमाजहारेति स्फुटमेव । बाल्य एवाधिगतसकल-

र्गेय पैतृकेन धनेन सम सह विविधाचारविचारैर्वयस्यैः प्रान्तेष्वनेकेषु भ्रमँल्लोक-साक्षात्कारेण जगदप्यनुभवाक्षिलक्ष्यीचकार । उपारूढयौवनश्च स्थाण्वीश्वराधीशस्य हर्षवर्धनस्य पारिषद्यता भेज इति तस्य हर्षचरितात्स्फुटम् । अतस्तस्य कालनिर्धारणमपि सुगमकमेव ख्रीष्टस्य सप्तम्या शताब्द्या पूर्वार्धमिति कीथमहोदयस्य मतम् ।

अथ बाण सर्वशास्त्रविशारदो विद्वदभिजनो लोकस्य राजकुलस्य च सकल-व्यवहाराभिज्ञ प्राकृतव्यापाराणा सूक्ष्मेक्षिकया निरीक्षक, मानसशास्त्रस्य विशेषज्ञ सिद्धवाक् । कादम्बरी, हर्षचरितम् इति द्वे गद्यकाव्ये तस्य यश स्तम्भभूते । मुकुट-ताडितकभाण, पार्वतीपरिणयश्चण्डीशतक चेति त्रीणि पुस्तकान्यपि तत्कृतान्युच्यन्ते । पर वामनभट्टबाणोऽपि तत्कर्ता सम्भवति । केचित्तु हर्षकृता रत्नावलीमपि वस्तुतस्तद्र-चितामेव मन्यन्ते । पर बाणस्यासाधारणी प्रतिभा न तत्र स्फुरतीति नादरणीय तन्मतम् । धावकनाम्नाऽपि तीव्रगत्या धावन् बाण एवौपम्यार्थेनोच्यत इत्यपि प्रवाद । बाल्येऽपि विशेषेण प्रतिभावानयमभ्येतु कस्यचित्सम्बन्धिनो गृहे वसन् प्रसङ्गादागतेन मातुलेन तद्वैदुष्यचमत्कृतेन 'किमश्नासि' इति पृष्टोऽय पद्यार्धमिदमनुप्रास-पूर्णमुत्तरयश्चमच्चकार तम्—

'अशेषशेमुषीमोष माषमश्नामि मातुल ।'

इति अस्य हर्षचरितमैतिहासिककाव्यतया स्वीक्रियते । आख्यायिकात्वेन परिगणित तदष्टोच्छ्वासपरिमित वर्धनवशभूपस्य राज्ञो हर्षवर्धनस्य वृत्त वर्णयति । आद्यौ तृतीयस्य चोच्छ्वासस्यार्धं कवेरात्मवृत्त प्रस्तुवन्ति । तत पुष्पभूते कुले प्रभाकरवर्ध-नस्योदय, राज्यश्रिया विवाह, राज्ञो मृत्यु, ज्येष्ठपुत्रस्य हूणविजयाय गतस्य राज्यवर्धनस्य प्रत्यागमनम्, मालव पतेराक्रमण राज्यश्रियो निग्रह च श्रुत्वा तस्य शत्रुविनाशाय प्रस्थानम्, कुन्तलस्य गौडाधिपेन छलेन राज्यवर्धनस्य वधोदन्ताहरणम्, हर्षस्य प्रतीकारप्रतिज्ञा, गौडेशोन्मूलनानन्तर राज्यश्रियोऽन्वेषणम्, एतावदेव वृत्तमत्र वर्णितम् । इतिहासेन सबद्धमपि घटनाचक्रमल्पमहत्त्वया नैतत्तथा महत्त्वपूर्णम् । तात्कालिकसामाजिकाचाराणा देशावस्थायाश्च साधुनिदर्शनमिति तु न कस्यापि विवादास्पदम् । पुलकेशिकृतपराभवेणैव दिग्विजयोत्साहो हतो हर्षस्येत्यपि सभाव्यते-ऽपूर्ते कारणम् । कादम्बरीत पूर्वमस्य रचनति तु काव्यशैल्या स्फुटम् ।

कादम्बरी तु यथा । अनोज्जयिनी-पनेस्तारापीडस्य चन्द्रापीडाख्यसुतोत्पत्ति, विद्याग्रहणानन्तर च यौवराज्येऽभिषेक, दिग्विजयाय प्रस्थानम्, तत्प्रसङ्गेनाच्छोदसरो-दर्शन महाश्वेतया च परिचय, गन्धर्वलोक हेमकूट गत्वा कादम्बरीसाक्षात्कार, राजधानीं प्रति प्रत्यावर्तनम्, मन्त्रि-पुत्रे वैशम्पायने सैन्यभारमारोप्य राजधानीप्राप्ति,

पत्रलेखामुखेन च नायिकाया वृत्तोपलब्धिरित्येतावती कथा पूर्वार्धे वर्णिता । उत्तरार्धं च तत्सूनुना पुलिन्देन भूषणभट्टेन वा कृतम्। कथाविच्छेदहेतुश्च बाणस्य मृत्युरेवेति 'यातेदिव पितरि' इति कथनेन सिद्धयति । पश्चाद् वैशम्पायने सैन्येन सह नायाति चन्द्रापीडस्य तदानयनाय गमनम्, महाश्वेतासकाशात्तन्मृत्यूदन्त, ततश्च चन्द्रापीडस्यापि हृदयभेदेन मृत्यु, कादम्बर्या आकाशवाणीं श्रुत्वा तच्छरीररक्षण पुन पतिप्राप्तिश्चेति तत्र वर्णितम्।

इय कथा च पूर्वं शूद्रक प्रति शुकेन पश्चाच्च जाबालिमुनिना स्वशिष्येभ्य श्राव्यत इति त्रिधा कथाया आरम्भ । मूलकथा च न कविना स्वय कल्पिताऽपि तु पूर्वं बृहत्कथाऽऽश्रिते कथासरित्सागरे बृहत्कथामञ्जर्यां च वर्णितेति स्फुटमेव। पर बाणेन स्वप्रतिभावैशद्येनोर्वरया कल्पनाशक्त्या च नवीकृता तत्प्रतिभातैव प्रतिभाति। कथानके विविधप्रसगासगेन भूयसी जटिलता कौतूहलस्य च साधीयसी रक्षा तया सम्पद्यते । लोकोत्तरतत्त्वाना (Super Natural elements) बाहुल्य तत्र विस्मयस्य सृष्टि साधयति । दीर्घतरैर्वर्णनैर्यद्यपि यत्र तत्र कथा विच्छिद्यते पर न सर्वथा कौतूहलोच्छेदाय प्रभवति ।

असाधारणो रसपरिपाक, वस्तुवर्णनवैशिष्ट्यम्, प्रकृते सूक्ष्म प्रसगानुकूल च वर्णनम्, अविच्छिन्ना भावशृङ्खला च पाठकान् तथा रमयति यथा ते विस्मरन्ति सकलमपि कार्यम् । अत एव 'कादम्बरीरसज्ञानामाहारोऽपि न रोचते', इत्याभाणकम् ।

वैदेशिका कीथ-वेबर-प्रभृतयोऽप्रभवन्तो बाणस्य ग्रन्थमवबोद्धु निन्दन्ति तम् । वेबरस्तु तस्य कृतिषु घन शब्दकान्तार वर्णयति । उपपन्न चैतत्तया कृते यथाहि न तत्त्वभाषासु प्राय सामासिकी वृत्ति । बाणस्य तु काव्यबन्धे गद्यस्यादर्श एव भिन्नोऽभूदिति हर्षचरितश्लोकाज्ज्ञायते । तथाहि—

> नवोऽर्थो जातिरग्राम्या, श्लेषोऽक्लिष्ट स्फुटो रस ।
> विकटाक्षरबन्धश्च कृत्स्नमेकत्र दुष्करम् ।।

न च तस्य गद्य सर्वत्रैव दीर्घसमासक्लिष्टम् । प्रसगानुकूला हि वृत्ति । हर्षचरिते खलु वीररसप्राये सम्यत तद्बाहुल्यम्। पर शृङ्गारप्रसगेषु सवादेषु च सन्ति लघीयासि स्फुटतराणि च वाक्यानि । समासस्योजोबहुलमेव निदर्शनञ्च—
"कुलिशशिखरखरनखरप्रचयप्रचण्डचपेटापाटितमत्तमातङ्गोत्तमाङ्गच्छटाच्छुरितचारुकेसरभारभास्वरमुखे केसरिणि।"

अत्र सिंह-वर्णनेऽतीवानुकूल्यं भजत्येतादृशो बन्धः। नवनवकल्पनासृष्टि शब्दरत्नभास्वरा कवियशोहेतुः स मन्यते। यथा—

अन्यवर्णपरावृत्त्या बन्धचिह्ननिगूहनैः।
अनाख्यातः सतां मध्ये कविश्चौरो विभाव्यते॥
सुखप्रबोधललिता सुवर्णघटनोज्ज्वलैः।
शब्दैराख्यायिका भाति शय्येव प्रतिपादकैः॥

परमधिगतशास्त्ररहस्यानां सकलकाव्यतत्त्वपारदृश्वनामेव सा रचना सुखप्रबोधा सम्भवति न तु कतिपयपुस्तकाधीतिनां भाषाशास्त्रसहचारमात्रेण संस्कृतमधिचिकीर्षूणामस्पृष्टशास्त्राणाम्।

बाणस्य कृतिषु रसस्याजस्रप्रवाहो, भूयसी कल्पनाशक्तिरसाधारणं वर्णनानैपुण्यमिति न लेखनस्यावश्यकता। महाश्वेतायाः प्रथमप्रणये कादम्बरीसाक्षात्कारावसरे च भावानुभावानां यादृश्युदात्ता सृष्टिस्तत्र विद्यते न साऽन्यत्र सुलभा। कादम्बर्यां हर्षचरिते च तदीया प्रकृतौ रोदिति हसति च पात्रैः सह। पात्राणि तस्य सजीवानि, व्यक्तिरव तेषां विशिष्टम्, सवादा सरसा स्वाभाविकाश्च। मानसवृत्तीनां सूक्ष्मविश्लेषणम्। हर्षचरितेऽश्वत्थवर्णनामपूर्वा व्यञ्जकता तीव्रा सविव जनयति।

बाणः पाञ्चालीं रीतिं साधिकारं प्रयुङ्क्ते। तस्य गद्यबन्धः उत्कलिकाप्रायश्चूर्णकबहुलश्च। अलङ्काराणां च परम्परा परस्परानुबन्धिनी। श्लेषे तस्य विशेषेण रुचिः। हर्षचरितस्यारम्भश्लोका अपि श्लिष्टाः परं विविध-पदि काव्यनैपुण्यख्यापका इति भृशमुपकारकाः। तस्य प्रेष्ठा अलङ्कारास्तु—श्लेषः, परिसंख्या, विरोधाभासः, उत्प्रेक्षा, उपमा, समासोक्तिः, रूपकं चेति। तेषां परम्परा प्रावृषि धारासार इव निरन्तरमितरेतरानुबन्धिनी। न चास्थाने तेषां प्रयोगः। तत्र रशनोपमायाः सुन्दरमेकं निदर्शनम्—

'क्रमेण च कृतं मे वपुषि वसन्त इव मधुमासेन, मधुमास इव नवपल्लवेन, नवपल्लव इव कुसुमेन, कुसुम इव मधुकरेण, मधुकर इव मदेन नवयौवनेन पदम्।'

पद्यविषये, 'यादृग्गद्यविधौ बाणः पद्यबन्धे न तादृशः' इति प्रसिद्धावपि न सर्वथा परिहीयते। हर्षचरितस्यारम्भगताः कादम्बरीमुखस्याश्च श्लोकाः सरसा ललिताश्च।

निष्कर्षे च बाणस्य दूरगामिनी कल्पनाशक्तिर्याऽतीन्द्रियानपि विषयानात्मसमति स्वप्रत्यक्षायितान्। साधारणमपि वस्तु तत्र भव्यायितम्। किं नाम परिहारेण तस्य

सिद्धवाचो दृष्टेः। भूमण्डलातिकपुरुषवर्यं यावत्तेन कथासंशेषीकृतो देशः। अदृष्टमश्रुतमचिन्तितं च पदार्थजातं चिरपरिचितमिव रमणीयतरमिव प्रतीयते। सन्ति यद्यपि कानिचित् स्खलितानि परं न तान्यशक्तिकृतान्यव्युत्पत्तिमूलानि वा, रसस्याविच्छिन्ने प्रवाहे विस्मृतिं व्रजन्ति। न केवलं कल्पना, बुद्धिमप्युत्तेजयन्ति कानिचित् स्थलानि यथा शुकनासोपदेशः। न लभ्येत लक्ष्म्या राजमदस्य च तादृशं विवेचनं यथा कादम्बर्याम्। हर्षचरिते दाहज्वरग्रस्तस्य प्रभाकरवर्धनस्य मृत्युवर्णनमतीव मार्मिकम्। सरसा परुषप्राया चोभयविधाऽपि शैली तत्र तस्य कृतिषु दृश्यते। पक्वणस्य, शूद्रकस्नानस्य, चाण्डालकन्याया रूपस्य, जरद्द्रविडधार्मिकस्यापि निरूपणं बीभत्सविस्मयहासजनकं वैलक्षण्यमेव भजते। तस्यैतादृशीं सूक्ष्मां दृष्टिमेवाभिलक्ष्योदितं केनापि—'बाणोच्छिष्टं जगत्सर्वम्' इति।

—०—

चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः ।
आ प्रा द्यावा पृथिवी अन्तरिक्षं सूर्य आत्मा जगतस्तस्थुषश्च ॥

एतावानुल्लासो वैदिकस्य कवेः । कथं न नृत्यतु प्राकृतः ?

आदिकवेर्वाल्मीकेर्वाणी च न श्राम्यति प्रकृतिमुपश्लोकयन्ती । अनेकधा तत्र तस्या निसर्गरमणीया शोभोपवर्णिता कविना । सा च क्वचिदुल्लासमयी क्वचन च प्रसंगागतक्षोभसहचरी दूयमानेवेति सत्यं सहगामिनी जीवनस्य । यथा प्रावृड्वर्णने—

रविसंक्रान्तसौभाग्यस्तुषारावृतमण्डलः ।
निःश्वासान्ध इवादर्शश्चन्द्रमा न प्रकाशते ॥
स्निग्धैरभ्रपटच्छेदैर्बद्धव्रणमिवाम्बरम् ।
कशाभिरिव हैमीभिर्विद्युद्भिरिव ताडितम् ॥
मेघकृष्णाजिनधरा धारा यज्ञोपवीतिनः ।
अन्तःस्तनितनिर्घोषाः सवेदनमिवाम्बरम् ॥
क्वचित्प्रकाशं क्वचिदप्रकाशं नभः प्रकीर्णाम्बुधरं विभाति ।
क्वचित्क्वचित् पर्वतसंनिरुद्धं रूपं यथा शान्तमहार्णवस्य ॥
मत्ता गजेन्द्रा मुदिता गवेन्द्रा वनेषु विश्रान्ततरा मृगेन्द्राः ।
रम्या नगेन्द्रा निभृता नरेन्द्राः प्रक्रीडितो वारिधरैः सुरेन्द्रः ॥

वियोगदूयमाना कृशाङ्गी सीता पश्यतो हनूमतश्चन्द्रस्य स्वरूपमपि तादृशमेव क्षामक्षामम्—

ततोऽल्पपरिस्पन्दमन्दीकृतवपुः शशी ।
बभ्रे काममपरिक्षामकामिनीगण्डपाण्डुताम् ॥ (रा. सु. १ । २०)

रात्रौ गगनाजिरे विहरतस्तारापतेरतिशयरामणीयका शोभाऽतितमां हारिणी—

या भाति लक्ष्मीर्भुवि मन्दरस्था, तथा प्रदोषेषु च सागरस्था ।
तथैव तोयेषु च पुष्करस्था रराज सा चारु निशाकरस्था ॥
हंसो यथा राजति पुष्करस्थः सिंहो यथा सुन्दरकन्दरस्थः ।
वीरो यथा दर्पितकुञ्जरस्थः चन्द्रो विबभ्राज तथाम्बरस्थः ॥
स्थितः ककुद्मानिव तीक्ष्णशृङ्गो महाचलः श्वेत इवोच्चशृङ्गः ।
हस्तीव जाम्बूनदबद्धशृङ्गो विभाति चन्द्रः परिपूर्णबिम्बः ॥

वाल्मीकेरुत्तरं महर्षेर्व्यासस्य महाभारतं यदोजसाऽसदृशम् । तत्राऽपि प्राकृतानां पदार्थानां सुन्दराणि चित्राणि सुलभानि । प्रस्तुतं सागरवर्णननिदर्शनम्—

तिमिङ्गिलझषाकीर्णं मकरैरावृतं तथा ॥
सत्त्वैश्च बहुसाहस्रैर्नानारूपैः समावृतम् ।
उग्रं नित्यमनाधृष्यं कूर्मग्राहसमाकुलम् ॥
शुभं दिव्यममर्त्यानाममृतस्याकरं परम् ।
अप्रमेयमचिन्त्यं च सुपुण्यजलमद्भुतम् ॥
घोरं जलचरारावरौद्रं भैरवनिःस्वनम् ।
गम्भीरावर्तकलिलं सर्वभूतभयंकरम् ॥
वेलादोलानिलचलं क्षोभोद्वेगसमुत्थितम् ।
वीचीहस्तैः प्रचलितैर्नृत्यन्तमिव सर्वशः ॥
गम्भीरं तिमिमकरोग्रसंकुलं तं गर्जन्तं जलचररावरौद्रनादैः ।
विस्तीर्णं ददृशतुरम्बरप्रकाशं तेऽगाधं निधिमुरुमम्भसामनन्तम् ।

एतयोः पश्चात् कालिदास एव प्रकृतिवर्णने सर्वानतिशेते । यद्यपि भासोऽस्मात् प्राचीनः स्वनाटकेषु साधु वर्णयति ताम् —

कपाले मार्जारी पय इति करांल्लेढि शशिन-
स्तरुच्छिद्रप्रोतान्बिसमिति करी संकलयति ।
रतान्ते तल्पस्थान्हरति वनिता ऽप्यंशुकमिति
प्रभामत्तश्चन्द्रो जगदिदमहो विप्लवयति ॥

अत्र पद्ये अतिरमणीया सरला स्वाभाविकी च वर्णना ।

कालिदासस्य प्रकृतिं प्रति विशेष एव मोहोऽभिलक्ष्यते । तस्य पात्राणि प्रायः स्वकार्यनिरतानि अपि तस्याः कामनीयकं प्रति कृताग्रहाणि । कविश्चायं समासेन व्यासेन च यथावसरं तां वर्णयति । शाकुन्तलस्य प्रस्तावनायामेकेनैव पद्येन स ग्रीष्मस्य स्वरूपं प्रत्यक्षीकरोति—

सुभगसलिलावगाहाः पाटलसंसर्गसुरभिवनवाताः ।
प्रच्छायसुलभनिद्रा दिवसाः परिणामरमणीयाः ॥ (शा १।३)

प्रथमेवर्तु ऋतुसंहारे विस्तरशो निरूपितः । हिमाचलस्य कुमारसम्भवे, वसन्तागमस्यापि तत्रैव शाकुन्तले च, ग्रीष्मस्य च रघुवंशे चारुचित्रणम् । विक्रमोर्वशीये चन्द्रोदितिरमणीया । मेघदूते तु प्रकृतिश्चेतनतामापादितेति किं वक्तव्यम् । शाकुन्तले शकुन्तलया सह तादात्म्यं भजन्ती प्रकृतिः तस्या विरहे रोदितीव ।

उगिण्ण-दब्भ-कवला मिया परिच्चत्त-णच्चणा मोरी।
ओसरिअ-पण्डुवत्ता मुअन्ति अस्सू विअ लदाओ ॥ (४।१२)

तत्रैव चतुर्थेऽङ्के प्रभातवर्णनं रमणीयतमम्—

कर्कन्धनामुपरि पटलं रञ्जयत्यग्रसन्ध्या
याभं मुञ्चत्युटज-पटलं वीत-निद्रो मयूरः।
वेदिप्रान्तात्खुर-विलिखितादुत्थितश्चैष सद्यः
पश्चादुच्चैर्भवति हरिणः स्वाङ्गमायच्छमानः ॥ (४।४)

पश्चाद्वर्तिनां कवीनां प्रकृतिचित्रणानि प्रायशोऽलंकृतानि। न तेऽलंकार-क्रीडां जातु विस्मरन्ति। प्रस्तुवन्ति नियतिं तां स्वयैव शैल्या। भारविः किरातार्जुनीये—

अंशुपाणिभिरतीव पिपासुः पद्मजं मधु भृशं रसयित्वा।
क्षीबतामिव गतः क्षितिमेष्यल्लोहितं वपुरुवाह पतङ्गः ॥

अत्र पश्चिमे अस्तं गच्छतः सूर्यस्य सुषमां साधु वर्णयति। माघश्च शिशुपालवधे बहुभिश्छन्दोभिः प्रकृतिं वर्णयति :—

धूमाकारं दधति पुरः सौवर्णे वर्णेनाग्नेः सदृशि पुरः पश्यामी।
श्यामीभूताः कुसुमसमूहेऽलीनां लीनामालीमिह तरवो बिभ्राणाः ॥

अत्र भ्रमराकलितायास्तरुमालिकायाश्चार्वी शोभा प्रस्तुता।

कुमुदवनमपश्रि श्रीमदम्भोजखण्डं
त्यजति मुदमुलूकः प्रीतिमांश्चक्रवाकः।
उदयमहिमरश्मिर्याति शीतांशुरस्तं
हतविधिलसितानां ह्रो विचित्रो विपाकः ॥

प्रभातवर्णनस्येदं सुन्दरतमं निदर्शनम्। वसन्तस्य च—

मधुरया मधुबोधितमाधवीमधुसमृद्धिसमेधितमेधया।
मधुकराङ्गनया मुहुरुन्मदध्वनिभृता निभृताक्षरमुज्जगे ॥

अत्र शोभनं रूपम्।

प्रकृतवर्णने भवभूतिरतितमां सम्मानार्हः। न केवलं सुकुमारं भीषणमपि रूपं साधु वर्णयति। तत्र मानवी संविन्निहिता वर्तते या कालिदासं बाणं च परित्यज्यान्यत्र दुर्लभा।

स्निग्ध-श्यामाः क्वचिदपरतो भीषणाभोगरूक्षाः
स्थाने-स्थाने मुखरककुभो झांकृतैर्निर्झराणाम्।

एते तीर्थाश्रमगिरिसरिद्गर्तकान्तारमिश्राः
संदृश्यन्ते परिचितभुवो दण्डकारण्यभागाः ॥

इदं पद्यं रभसादस्मान् दण्डकारण्यं प्रत्यामन्त्रयति ।

निष्कूजस्तिमिताः क्वचित्क्वचिदपि प्रोच्चण्डसत्त्वस्वनाः
स्वेच्छासुप्तगभीरभोगभुजगश्वासप्रदीप्ताग्नयः ।
सीमानः प्रदरोदरेषु विलसत्स्वल्पाम्भसो यास्वयं
तृष्यद्भिः प्रतिसूर्यकैरजगरस्वेदद्रवः पीयते ॥

अत्र भीषणरम्यं साधु प्रस्थापितम् । एवं च—

'अथैतानि मदकलमयूरकण्ठकोमलच्छविभिरवकीर्णानि पर्यन्तैरविरलनिविष्टनीलबहलच्छायतरुणतरुषण्डमण्डितान्यसम्भ्रान्तविविधमृगयूथानि पश्यतु महानुभावः प्रशान्तगम्भीराणि मध्यमारण्यकानि ।'

अत्र सुकुमाररमणीयं रूपं प्रस्तुतम् ।

उदितमेव पूर्वं यत्कालिदासानन्तरं व्यापिनी प्रकृतिनिरीक्षणशक्तिर्बाणभट्टस्यैव । अलङ्कारप्रायाऽपि तस्य शैली स्पृशतीव तस्या आत्मानम्, प्रत्यक्षीकरोति तत्स्वरूपम् ।

त्रैविध्येन संस्कृतकविभिर्वर्ण्यते प्रकृतिः । प्रातिस्विकतया, उद्दीपनतया उपमानतया च । क्वचित्प्रसङ्गानुपातिप्रभावोद्भावनाय । कादम्बर्यां च चतुर्विधा अपि प्रकारा लक्ष्यन्ते यथावसरम् । नोऽप्यत्र सर्वेऽप्युदाहर्तुं शक्यन्त इति एकमेव प्रस्तूयते । यथा—

'क्षणमुपगतायां सन्ध्यायां तद्विनाशदुःखिता कृष्णाजिनमिव विभावरी तिमिरोद्गममभिनवमवहत् । अपहाय मुनिहृदयानि सर्वमन्यदन्धकारतां तिमिरमनयत् । क्रमेण च रविरस्तं गत इत्युदन्तमुपलभ्य जातवैराग्यो धौतदुकूलवल्कलधवलाम्बरः सतारान्तःपुरपर्यन्तस्थिततनुस्तिमिरतमालवृक्षलेखं सप्तर्षिमण्डलाध्युषितमरुन्धतीसंचरणपूतमुपहिताषाढमालक्ष्यमाणमूलमेकान्तस्थितचारुतारकामृगममरलोकाश्रममिव गगनतलममृतदीधितिरध्यतिष्ठत् ।'

(का., जाबालिवर्णने)

अत्रावसरे कविरलंकृतमार्गेण चन्द्रोदयं प्रस्तौति । एवमेव हर्षचरिते प्रभाकरवर्धनमृत्युप्रसङ्गे इदं प्रत्यूषवर्णनमवसरानुरूपं विषादमयं गाम्भीर्यं व्यनक्ति ।

यथा—

"ततः घुवेव मुक्तकण्ठमारटत्सु कृकवाकुकुलेषु, गृहगिरिशिखरेभ्यः पातयत्स्वात्मानं मन्दिरमयूरेषु, परित्यक्तनिजनिवासेषु च वनाय प्रस्थितेषु पत्ररथेषु, सद्यस्तनूभूते ताम्यति तमसि, मन्दीभूतात्मस्नेहेष्वभावमभिलषत्सु प्रदीपेषु, स्फुरदरुणकिरणवल्कलप्रावृतवपुषि प्रव्रज्यामिव प्रतिपन्ने नभसि, प्रभात समयेन समुत्तीर्यमाणासु पार्थिवास्थिशकलास्विव मर्लविककन्दरानुसरासु तारकासु, भूमृद्धातुगर्भकुम्भधारिषु विविधसरःसरित्तीर्थाभिमुखेषु प्रस्थितेषु वनकरिकुलेषु, शावधुविसिक्यपटलपाण्डुरे पिण्ड इवापर-पयोनिधिपुलिनपरिसरे पात्यमाने शशिनि ......चचाल घोपस्नानाय देवो हर्षः।" (ह. ५उ.)

एवंविधानि प्रसंगोचितानि वर्णनानि न सर्वत्रोपलभ्यन्ते। परस्तादवर्तिभिः कविभीरूढिपालनार्थैव प्रायो व्यधीयत प्रकृति-चित्रणम्। तत्र न लभ्यते हृदयस्पर्शिनी सवित्। यथा हरविजयकर्तु राजानकरत्नाकरस्य सागरवर्णनं रघुवंशगतस्य जलधिस्वरूपस्य कलामपि न स्पृशति। यथाहि——

लीलाविलोलकलकण्ठविहंगकेलिकोलाहलाकुलकुलायकुलामलाङ्के।
कल्लोलसङ्गकदलीलवलीलवङ्गलीलालतामवलमञ्जुलकूलकच्छे॥

इदं भाषासमालंकारमेव साधयति पद्यं न तु वर्ण्यस्य स्वरूपं चारु प्रत्यक्षीकरोति। अस्मात्तु माघकृतमेव वर्णनं समुद्रस्य सुन्दरतरम्। यथा—

आश्लिष्टभूमिं रसितारमुच्चैर्लोलद्भुजाकारबृहत्तरंगम्।
फेनायमानं पतिमापगानामसावपस्मारिणमाशशङ्के॥ (शि. ३. ३)

श्रीहर्षस्य वर्णनमपि प्रकृतिस्वरूपापेक्षयाऽलंकारकौतुकमेव पूरयति। यथा प्रभात-वर्णने—

तिमिर-विरहात्पाण्डुप्रख्ये दिशः कृश-तारकाः,
कमलहसितैः इवेनोवोन्मीयते सरसी न का।
शरणमिलितध्वान्तध्वंसि प्रभाऽम्बरधारणाद्,
गगनशिखरं नीलत्येकं निर्जरयशोभरैः (नै. १६।३१)॥

एतादृशान्येव वर्णनानि दृश्यन्ते प्रायः पश्चात्तनानां कवीनाम्। लभ्येत नाम क्वचित् काचित् सरसा कल्पना सर्वथा तस्या अविरहात्। परं प्रवृत्तिरेव न तादृशी शिष्टा। प्राकृतव्यापाराणां न तथा सूक्ष्मेक्षिकया निरीक्षणं तैर्विहितं यथा कालिदासादिभिः। अद्यतना काव्यकृतस्तु नवभावनोपेताः प्रयतन्तेऽभावमिममपाकर्तुम्। अस्ति तेषां वर्णने याथार्थ्यम्। प्रशस्या तावदेषा प्रवृत्तिः।

# साहित्ये कामभावना

'प्रायो दृश्यते सर्वासामपि भाषाणां साहित्येषु कामभावनायाः प्राधान्यम्। गद्ये, पद्ये, नाटकेषु, गल्पेषु च तस्याः स्वरूपं प्रत्यक्षतोऽप्रत्यक्षतो वा लभ्यत एव। जीवनस्य विश्लेषणे न सा कथमपि परिहातुं शक्या। आब्रह्मस्तम्बपर्यन्तं सर्वत्रापि चेतनेऽचेतने च यथाकथंचिदीक्ष्यत एवास्याः सत्त्वम्। कं नैषा खिलीकरोति सति सामर्थ्ये निरिन्द्रियाणां हतौजसां व्यापारान्तरप्रसक्तिविस्मृतात्मनां वा कामं भवेदितो विरतिर्न तु सर्वस्य'।

कृशः, काणः, खञ्जः, श्रवणरहितः, पुच्छ-विकलः,
क्षुधाक्षामो रुक्षः पिठरककपालार्पितगलः।
व्रणैः श्रुतिविलग्नैः कृमिपरिवृतैराचिततनुः
शुनीमन्वेति श्वा तमपि मदयत्येव मदनः॥ (भौ. वि. श.)

काम एव वासना-संज्ञया व्यवह्रियते यां विना न मानवो रसं रसितुं क्षमः।

सवासनानां सभ्यानां रसस्यास्वादनं भवेत्।
निर्वासनास्तु रंगान्तः काष्ठकुड्याश्मसन्निभाः॥ (सा. द. ३)

वासना नात्र लोकप्रचलितार्थे प्रयुज्यतेऽपि तु सूक्ष्मरूपेण हृदयसंनिहितायां इच्छायां सामृते नहि प्रभवति जनः किमपि कर्तुम्। सैवोद्रिक्ता विरसमपि जीवितं सरसयति। क्व न खलु सा ? गतासौ लोष्ठपिण्डे !

कामस्तदग्रे समवर्तताधि, मनसो रेतः प्रथमं यदासीत्।
सतो बन्धुमसति निरविन्दन्, हृदि प्रतीष्या कवयो मनीषा॥
(ऋ. १०।१२९।४)

कामोऽत्र 'बहु स्यां बहु प्रजायेय' इत्याकाराऽऽत्मविस्तारकामनैव, यया प्रेरितो न स्वस्मिन्नेव निलीयमानो जनोऽनुरागद्वारेण परैः सह सम्बध्नाति तांश्च स्वाभिन्नान्

करोति । अत एव पतिः पत्नी च 'देहो भिन्नस्तत्रात्मत्वभिन्नः' इति कृत्वा मिथोऽर्धाङ्गतां भजतः । महत्यपि कुटुम्बे सम्बन्धविस्तारेण सा सर्वानपि सदस्यान् व्याप्नुवत्यभिन्नता तानैक्यसूत्रेण प्रथ्नाति ।

परमस्यैव संकल्पात्मकस्यैकं रूपं स्त्रीपुरुषयोः समागमविषयं विशेषतः कामशब्देन प्राधान्येन व्यपदिश्यते । सा च यौनभावना (sex) याऽनुरागरहिता सती क्रूरतामेव धारयति । तामेव प्रणयसरसां नामयन्ती समाजे कटुकता विशृंखलता च'''

'धर्माविरुद्धो भूतेषु कामोऽस्मि भरतर्षभ ।'

इति स्वीकृतवान् गीतायां तत्रभवान् कृष्णः ।

जीवनस्य पुरुषार्थचतुष्टये कामस्य तृतीयं स्थानम् । तेषां च परस्परानुबन्धितोत्तरोत्तरं प्राधान्यं च । यथा जीवनस्य प्रथमं लक्ष्यं धर्मः तन्मूलश्चार्थः । धर्मसहकारेणोपार्जितोऽर्थोऽनिन्दितो भवति । एवं च धर्मोऽर्थस्य साधनतां गतस्तदपेक्षया गौणतामेव भजति, ताभ्यां च सस्कृतपुरुषकारो जनः काममुपभुङ्क्ते इति तयोः कामसाधनताऽऽपतति न च स एव चरमं प्रयोजनं जीवितस्येति मोक्षप्राप्तिस्तदन्ते प्रधानलक्ष्यत्वेन वर्णिता ।

निवृत्तिमार्गपरा सर्वथैव तां कामप्रवृत्तिं निन्दन्ति जीवस्य बन्धकारिणीति कृत्वा निषेधन्ति च । परमविद्याग्रस्ता लोके तयाऽऽकृष्यन्त एव । एवं सा जीवनस्य स्वाभाविकी वृत्तिरिति जीवितप्रतिबिम्बायिते साहित्ये निरूपणीयैव ।

१. पाश्चात्यो विचारकः फ्रायडनामा काव्यस्य मूलकारणं कामभावनामिमां स्वीकरोति । तस्य कथनेन वृत्तिरियं जीविते प्राबल्यं भजन्त्यपि सामाजिकैर्धार्मिकैराधिकैर्वा बन्धनैर्विफलीकृता कुण्ठिता सती कलास्वभिव्यज्यते । दृश्यते चेयं प्रवृत्तिर्लोके यत् स्ववाञ्छितमलभमानो नरः काव्ये, चित्रे, संगीते वा मनोरथं स्फुटीकरोति । मेघदूतस्येदं पद्यं समर्थयति चैतत् ।

त्वामालिख्य प्रणयकुपितां धातुरागैः शिलाया-
मात्मानं ते चरणपतितं यावदिच्छामि कर्तुम् ।
अस्रैस्तावन्मुहुरुपचितैर्दृष्टिरालुप्यते मे
क्रूरस्तस्मिन्नपि न सहते सङ्गमं नौ कृतान्तः ॥ (मे उ ४४)

अस्मिन् यक्षवाक्ये सर्वेषामपि विहतमनोरथानां कलितमौनानां प्रत्यक्षं वा रुदतां प्रणयिनां करुणकरुणा कथा स्फुटीकृता । अतो वृत्तेरस्याश्चित्रणं स्वाभाविकमेव । परं केवलं वासनारूपेण तस्या वर्णनं न स्वास्थ्यावहं समाजस्य । नग्नताया'

पशुप्रायतया न सा मानवेषु संगच्छते। अत एव प्रणयरूपेण तत्परिपाकेण च विवाहे परिणता सा सफला मर्यादित च संपद्यते।

काव्ये कामभावनायाश्चित्रणेन मानवजीवनस्य चित्रणं व्यक्तित्वस्य च निरूपणं साधु सम्पद्यते। केवल स्वरूपाख्याने न तथा संवित् संभवतीति कृत्वा तस्या रसरूपेणैव वृत्तिर्निरूपिताऽऽचार्यैः। इदमेव कारणं यत् काव्ये शृङ्गारस्य प्राधान्यं सर्वत्र लक्ष्यते। अनेन प्रणयवृत्तेश्चारुता परिणतिश्चानन्दमयी जायते। न काव्यं वीतरागाणां श्रोत्रियाणां वा कृते ये समलोष्ठाश्मकाञ्चना. शुष्कहृदया वा। लोकस्थितौ वर्तमानास्तेऽपि शृंगारतरंगिण्यां निमज्जन्त्येवेति तैरपि दुस्त्यजेयं कामवृत्तिः। तया काव्यजगत् सत्यमेव रसमय भवति यत्र मग्नं मानवीय मनो द्रुतं सत् तेनैव रसेनैकतामिव व्रजति। तामेव चमत्कृतिं वीक्ष्योक्तमानन्दवर्धनेन—

अपारे काव्यसंसारे कविरेक. प्रजापतिः।
यथास्मै रोचते विश्वं तथा तत्परिवर्तते॥
शृङ्गारी चेत्कविः काव्ये, जातं रसमयं जगत्।
स एव वीतरागश्चेन्नीरस सर्वमेवतत्॥

तस्मादेव कालिदासादयः श्रेष्ठाः कवयः काव्ये शृंगारमेव प्रमुखतया न्यरूपयन्। न तस्याश्रयाः केवल मानवा अपि तु तिर्यञ्चोऽपि तत्तरलिता वर्णितास्तैः। यथा कुमारसम्भवे—

मधु द्विरेफः कुसुमैकपात्रे पपौ प्रियां स्वामनुवर्तमानः।
शृङ्गेण च स्पर्शनिमीलिताक्षीं मृगीमकण्डूयत कृष्णसारः॥ ( कु३।३६)

अत्र तिर्यग्गतोऽप्यनुरागः परां सरसतामातनोति परिस्थितेः।

कुबेरगुप्तां दिशमुष्णरश्मौ गन्तुं प्रवृत्ते समय विलंघ्य।
दिग्दक्षिणा गन्धवहं मुखेन व्यलीकनिश्वासमिवोत्ससर्ज॥ (कु. सं ३।२५)

अत्र स्वयं प्रकृतिरपि प्रणयतरंगिणीमवगाहमाना दृश्यते।

पर्याप्तपुष्पस्तबकस्तनाभ्यः स्फुरत्प्रवालोष्ठमनोहराभ्यः।
लतावधूभ्यस्तरवोऽप्यवापुर्विनम्रशाखाभुजबन्धनानि॥ (कु सं. ३।३९)

देवा अपि वृत्त्याऽनया विलंघ्यन्ते, न केवलं मानवा.—

हरस्तु किंचित्परिवृत्तधैर्यश्चन्द्रोदयारम्भ इवाम्बुराशिः।
उमामुखे बिम्बफलाधरोष्ठे व्यापारयामास विलोचनानि॥
(कु. सं. ३।६७)

अथवा—

पशुपतिरपि तान्यहानि कृच्छ्रादगमयदद्रिसुतासमागमोत्कः ।
कमपरमवशं न विप्रकुर्युर्विभुमपि तं यदमी स्पृशन्ति भावाः ॥

(कुमा ६।९५)

तदेव कारणं यज्जीवनस्य मूलभूततया प्रणयस्य तन्मूलतया च शृङ्गारस्य भोजः शृंगारमेव रसराजं प्राधान्येनैकं सर्वेषां रसान्तराणामाश्रयं च स्वीचकार। स हि स्वर्णोपलो यस्य स्पर्शेन वीरादयोऽपि रसाः पोषातिशयं वहन्ति। तथाहि—

कपोले जानक्याः करिकलभदन्तद्युतिमुषि
स्मरस्मेरस्फारोड्डमरपुलकं वक्त्रकमलम्।
मुहुः पश्यन् शृण्वन् रजनिचरसेनाकलकलं
जटाजूटग्रन्थिं प्रथयति रघूणां परिवृढः ॥

रामस्य रणोत्साहवर्णनेऽत्रानुरागस्य स्फुटं शोभातिशयं पोषयति। शृंगारस्य कामवृत्तेर्वा जीवने तादृशं महत्त्वं समीक्ष्यैव वीतरागैरपि वाल्मीकि-व्यासादिभिर्यथं तत्र तस्याः प्रतिपादनं कृतम्। तत्कृते न ते दूष्याः। अन्यभाषाकाव्येष्वपि कामवृत्तेरस्याः प्राधान्यं वर्तत एव।

आधुनिके युगे साहित्येषु विविधा प्रतिवादा स्पृशन्त्यः प्रवृत्तयो लक्ष्यन्ते। यथार्थवादस्यादर्शवादस्य च विवादः परं वैषम्यं तत्रानयति, । जीवितस्य यथार्थं चित्रणं काव्यस्य मन्वानास्तन्मिषेण कामवृत्तीस्तथातिरेकेण वर्णयन्ति यथा ता जुगुप्सां जनयन्ति। 'चीनांशुकावगुण्ठनान्तरेण निःसरणपरमुपमानिर्भरं रमणीमुखमिव व्यंग्यायितं कामवर्णनमेव सविशेषं रुचिपोषं तोषयति रसिकान्। तथा चोक्तम्—

नान्ध्रीपयोधर इवातितरां प्रकाशो नो गुर्जरी-स्तन इवातितरां निगूढः।
अर्थो गिरामपिहितः पिहितश्च कश्चित्सौभाग्यमेति मरहट्टवधूकुचाभः ॥

अपरे तु काव्यस्य चरममुद्देश्यं रुचिपरिष्कारेण जीवनस्यादर्शीकरणमेव मन्वते। आदर्शवादस्य भक्तास्ते काव्यमुपदेशमयं कृत्वा शुष्कमेव तत्कुर्वते। परं न काव्यं स्मृति-ग्रन्थोऽपि तु कान्तासम्मितशब्दैरेव शिक्षां ददाति गुडजिह्विकायाः। तदेव कारणं यदश्वघोषस्य बुद्धचरितापेक्षया सौन्दरनन्दमेव चारुतरम्। तत्र हि सुन्दर्या नन्दस्य च प्रणयातिशयवर्णनेन प्रचुरा सरसता वर्तत एव।

वस्तुतः स्त्रियाः पुरुषस्य च प्रणयः पुरुषप्रकृत्योरेव मिथोऽनुरागः। तत एव सृष्टेर्विकासः सम्भवति। अस्य बलेन नरः किं न करोति, महत्तरं साहसं समाचरति। नारी प्रेरणैव नरस्य। तयोर्मिथः ऐक्यं ब्रह्मण एव मायया संयोगः। आनन्दमयस्य च

ब्रह्मांशभूतस्य जीवस्य पुनः स्वकीयानन्दमयस्वरूपप्राप्तिरेव पुरुषार्थः । माया-रूपिण्या स्त्रिया सह संगतोऽर्धनारीश्वरतां व्रजन् तमेवानन्दमधिगच्छति । 'रसो वै सः रसं लब्ध्वैवायमानन्दीभवतीति ।'

यच्चाभावग्रस्तेऽपि जगति, दारिद्र्यज्वरग्रस्तजीवोल्लाघाय पुरुषार्थे कर्तव्ये न शृंगारस्यावसर इत्युच्यते, तदपि नातिचारुतमम् । देशकालातीतस्यैव काव्यस्य सर्वोत्तमत्व विश्वजनीनभावनयैव । युगविशेषापेक्षया कृतं च काव्यं न सर्वदा महीयते । कामवृत्तिश्च शाश्वती । अत एवोक्तं लोलम्बराजेन—

येषां न चेतो ललनासु लग्नं मग्नं न साहित्यसुधासमुद्रे ।
शास्यन्ति ते किं हि मम प्रयासमन्धा यथा शारदपूर्विलासम् ।।

अतो नेयं कामवृत्तिः सर्वथा निन्दनीया ।

---

# 'एको रसः करुण एव निमित्तभेदाद्…'

जीवनमस्माकं विविधभावान्दोलितम्। कदाचित् प्रेमाऽन्यदा घृणा, अधुना हर्षस्तदा च शोकः, क्वाऽपि रागोऽपरत्र विरागः। इत्थं विविधानुभूतिचित्रिते जीविते विशेषेण प्रभविष्णुर्भावः शोको यस्य परिपाकः करुणो रसः आलङ्कारिकाणाम्। अथ यथा विषयभेदादेकोऽपि भिद्यते तथैवानुभावमुखेनाभिव्यक्तिप्रकारभेदाच्च बहुविधतामाकलयति, आलम्बनभेदादाश्रयभेदाच्च वैचित्र्यमावहन्नयं नैकधा द्रावयति हृदयम्, पितापुत्रयोर्भ्रातृभगिन्योर्मातापुत्रयोर्दम्पत्योः सख्योर्वा परस्परवियोगसम्भूतोऽयं विवर्तभिदामाकलयन् प्राणिनां मनांस्याकुलयति। इमामेव प्रवणतामाश्रित्य महाकविना भवभूतिना प्रतिपादितम् उत्तररामचरिते—

> एको रसः करुण एव निमित्तभेदाद्भिन्नः पृथक्पृथगिवाश्रयते विवर्तान्।
> आवर्तबुद्बुदतरङ्गमयान् विकारानम्भो यथा सलिलमेव तु तत्समग्रम्॥
>
> (उ.च. ३)

यथा जलमेकं भ्रमिबुद्बुदादिरूपभेदानाकलयति, तथैव करुण एव रसो वैभिन्यं भजति। स एव वियोगश्रृङ्गारे, करुणविप्रलम्भे च परिणमति। तस्याभिव्यक्तिस्तु तीव्रतमा सुकुमारा च सरसासु ललितासु कलासु प्रादुर्भवति तासां च रसिकमनस्सु साधीयसी स्थेयसी च प्रभविष्णुता।

भारतीया काव्यपरम्पराऽनुरुध्यते चेत्काव्यस्य मूलमयमेव करुणो रसः। तथाचोक्तं ध्वनिकारेण—

> काव्यस्यात्मा स एवार्थस्तथा चादिकवेः पुरा।
> क्रौञ्चद्वन्द्ववियोगोत्थः शोकः श्लोकत्वमागतः॥ (ध्व. १।५)

विविधवाच्यवाचकरचनाप्रपञ्चचारुणः काव्यस्य स एवार्थः सारभूतः। तथा चादिकवेर्वाल्मीकेर्निहतसहचरीविरहकातरक्रौञ्चाक्रन्दजनितः शोक एव श्लोकतया परिणतः।" (ध्व १)

पुनश्च—"रामायणे हि करुणो रस स्वयमादिकविना सूत्रित. 'शोक. श्लोकत्वमागत' इत्येववादिना । निर्व्यूढश्च स एव सीतात्यन्तवियोगपर्यन्तमेव स्वप्रबन्धमुपरचयता । (ध्व. ४)

न केवल सस्कृते भाषारचनास्वपि करुणस्य तन्मूलाया व्यथाया वा काव्यजनकत्व प्रतिपादितचरम् । यथा हिन्दी-कवे सुमित्रानन्दनपन्तस्य—

वियोगी होगा पहला कवि आह से उपजा होगा गान ।
उमड कर आँखों से चुप चाप बही होगी कविता अनजान ॥

एवमेव बच्चनोपाधिधारिणो हरवशरायस्य—

"मैं रोया, तुम कहते हो गाना ।
मैं फूट पडा तुम कहते छन्द बनाना ॥'

आग्लभाषाया शैलेकविरपि करुणभावैरेव सुन्दरतमाया कविताया उद्भव मन्यते—

'Our sweetest songs are those,
That tell of Saddest thoughts'
(Sky Lark)

अनुभवसिद्धमेवैतत्, परमाह्लादकरी प्रीतिभावनानिर्भराऽपि कविता न तथा द्रावयति मनासि रसिकाना यथा करुणाप्लाविता । अत एव शृगारस्य परिपोष कामयमानैराचार्यैर्विप्रलम्भस्य निरूपण तत्रावश्यकत्वेन निर्दिष्टम् । तथा हि—

'न विना विप्रलम्भेन सभोग पुष्टिमश्नुते ।'

भवभूतेरपि 'इय गेहे लक्ष्मी' प्रभृतिषु पद्येषु न तादृशी द्राविणी शक्तिर्यथा—

देव्या शून्यस्य जगतो द्वादश परिवत्सर ।
प्रनष्टमिव नामापि न च रामो न जीवति ॥ (उ च ३।३३)
दु खसवेदनायैव रामे चैतन्यमागतम् ।
मर्मोपघातिभि प्राणैर्वज्रकीलायित हृदि ॥ (उ च, १।४७)

अनयो पद्ययो । यदा तु रसान्तरेण मिश्रिता स्यादनुभूतिस्तदाऽतितरा सम्पद्यते मर्मभित् । अत एवोक्त रामवचनैर्मुह्यती सीता प्रति तमसया—

तीव्रा प्रियतमा वाच स्नेहार्द्रा शोकदारुणा ।
एतास्ता मधुनो धाराश्च्योतन्ति सविषास्त्वयि ॥ (उ च ३।४७)

अस्यैव करुणस्य प्रभावादभिज्ञानशाकुन्तलस्य चतुर्थोऽङ्कः प्रभावातिशायी यत्र—

उद्गीर्णदर्भकवला मृगी परित्यक्तनर्तना मयूरी।
अपसृतपाण्डुपत्रा मुञ्चन्त्यश्रूणीव लताः॥ (शा. ४।१२)

उत्तररामचरितस्य च तृतीयोऽङ्कः प्रभविष्णुतमोऽस्यानुभावाद् यत्र खलु—

'अपि ग्रावा रोदित्यपि दलति वज्रस्य हृदयम्।'

का कथा नवनीतसरसचेतसां रसिकानाम्। करुणपर्यवसायिनां नाटकानां विदेशेषु भूयान्प्रचारोऽस्य तीव्रतमानुभवकृतानन्दमुद्दिश्यैव।

अयं रसः करुणविप्रलम्भेन विप्रलम्भेन च शृंगारस्य पोषकः, परिपन्थिललनाविलापपरिनिष्ठितो वीरस्य रौद्रस्य परिपाककारी। क्रन्दनातिशये कपालविस्फोटादिना बीभत्सस्यानर्थकारिणो भये सति संश्रयगतो भयानकस्यापि जनकः। आलम्बनस्मृत्यादिनाऽद्भुतस्य प्रमत्तादौ हासस्य जगतो दुःखावसानसूचनाच्छान्तस्य चोद्भावक इति सत्यमेवायं रसान्तराणां मूलम्।

अयं स रशनोत्कर्षी पीनस्तनविमर्दनः।
नाभ्यूरुजघनस्पर्शी नीवीविस्रंसनः करः॥

अत्र शृंगारेण करुणस्य तीव्रताऽसाधारणी। एवं च—

क्रामन्त्यः क्षतकोमलांगुलिगलद्रक्तैः सदर्भाः स्थलीः
पादैः पातितयावकैरिव पतद्बाष्पाम्बुधौताननाः।
भीता भर्तृकरावलम्बितकरास्त्वद्वैरिनार्योऽधुना
दावाग्निं परितो भ्रमन्ति पुनरप्युद्यद्विवाहा इव॥

अत्र वर्ण्यवैरिनारीणां करुणदशा वैवाहिकविधिनोत्प्रेक्षिता प्रस्तुतस्य शौर्यातिशयं व्यनक्तीति स्फुटैव करुणस्य रसान्तरमूलता सर्वातिशायिनी द्रावकशक्तिश्चेति शम्।

—०—

# वेदाः, सम्प्रति तदध्ययनस्योपयोगिता च

आर्याणां संस्कृतेः, धर्मस्य, दर्शनानाम्, साहित्यस्य, ज्ञानस्य, विज्ञानस्य कलानाम्, शिल्पस्य, किं बहुना, सकलस्यापि वाङ्मयस्य प्रेरणास्रोतो वेदः। नास्ति जीवनस्य कोऽपि भागः, कतमदपि क्षेत्रम् यत्र वेदा न प्रमाणम्। धर्मे, आचारे, संस्कारेषु, व्यवहारेषु च वैदिक्येव व्यवस्था तेषां मान्या। अदृष्टमपि प्रसिद्धमपि परिचितमपि किमपि कर्म वेदेनाप्रमाणितं सदकरणीयताकोटिमेव निविशते। तस्मात् को नामार्यो नाङ्गीकुर्याद् वेदस्य माहात्म्यम् ?

किन्नाम वेदत्वमिति विविदिषायाम् ज्ञानार्थकाद् विद्धातो. "विदन्ति सकल-धर्मार्थ-रहस्यमनेनेति वेद." इत्येव व्युत्पाद्यतेऽभियुक्तैः। तथा चोक्तम्—

"प्रत्यक्षेणानुमित्या वा यस्तूपायो न बुध्यते।
एतं विदन्ति वेदेन तस्माद् वेदस्य वेदता॥"

तस्मादेव स्मृतयः, सूत्राणि, दर्शनानि विषये कस्मिन्नपि विवदमानानि कमपि निर्णयं नाभ्युपगच्छन्ति वेदमेव प्रमाणत्वेनोपतिष्ठन्ते। आप्रालेयालयाद् कुमारी यावदार्याणां विवाहे, सुतजन्मोत्सवे, नामकर्मसंस्कारे, विद्यारम्भे च वेदमन्त्रैरेव सकल-कर्मणामनुष्ठानमनुष्ठीयते। अतएव सवर्णानां वेदाध्ययनमनिवार्यत्वमापादितमाचार्यैः। तथाहि—

१. स्वाध्यायोऽध्येतव्यः।
२. ब्राह्मणेन निष्कारणं षडङ्गो वेदोऽध्येयो ज्ञेयश्च।
३. योऽनधीत्य द्विजो वेदानन्यत्र कुरुते श्रमम्।
[illegible] जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः॥

वेदाध्ययनस्य न केवलं शुकपाठिकया रटनमपेक्षितं मनुष्याणाम्। जीवन-प्रयोजनीभूतस्य पुरुषार्थचतुष्टयस्य साधनानां नानाविषयाणां साधु परिशीलनमपि

तत्रैव समाविष्टम् । वेदाश्चत्वार उपवेदा, ब्राह्मणानि, आरण्यकानि, उपनिषद, षडङ्गानि, गाथा, इतिहास, पुराणानि वेदाध्ययनकक्षाया परिगणितानि । परा अपरा चोभे अपि विद्ये वर्णितेष्वेषु समाविष्टे। वेदा हि प्रधानविषया, न तेषा परिशीलन ब्राह्मणानि, षडङ्गानि, गाथा, इतिहास पुराण चानधीत्य साधु सभवति । उक्त च—

छन्द पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते ।
ज्योतिषामयन चक्षुर्निरुक्त श्रोत्रमुच्यते ।
शिक्षा घ्राण तु वेदस्य मुख व्याकरण स्मृतम् ॥

इत्येतेषा षण्णामप्यङ्गानामध्ययन वेदाध्ययनप्रयोजकमित्यपरिहार्य तत्परिशीलनम् । ब्राह्मणाना तु मन्त्रब्राह्मणयोर्वेदनामधेयतया स्वग्राह्यत्वम् । वेदे सवग्राहिणा मत तु तैत्तिरीयसहिताया ब्राह्मणस्यापि सहवर्तितया मन्त्रभागे न चाह। धनुर्वेद, गान्धर्ववेद, आयुर्वेद, शिल्पवेदश्चेति चत्वार उपवेदा अपि साकल्येनासुलभा अपि पुरुषार्थयोरर्थकामयो साधका इति निर्विवादमध्येया एव । तेषु तेषु मन्त्रेषु, ब्राह्मणभागेषु चोपाख्यानादिसत्त्वाद् गाथा, इतिहास, पुराणानि च तत्परिज्ञानायावश्यकानि । इत्येव सप्रधार्योक्तम्—

'इतिहास-पुराणाभ्या वेद समुपबृहयेत्'

आरण्यकान्युपनिषदश्च पराया विद्याया अधिगमयितृतया सर्वस्याप्यध्येया एव । परा च 'परा यया तदक्षरमधिगम्यते' इत्यभियुक्तोक्तेर्ब्रह्मविद्यैव । सा च मोक्षसाधनमिति चरमपुरुषार्थाधिगतिकारणम् । ततस्तस्या परिशीलन सकलविद्या मूर्धन्यतामाकलयति सिद्ध च तेन साङ्गस्यापि वेदस्य निखिलपुरुषार्थोपायरूपत्वमवश्यमध्येयत्व च ।

परमिय वार्ता स्मृतानि युगमतीत यदा न व्यक्षिप्यत हृदयगुहाविद्योतिनी विद्योदरपूरणोपायतर्ककोटौ । न यदाऽऽकण्ठमाकलितसरस्वतीगाढमज्जना सज्जना अधीयते स्म दास्य-मात्रैक-लक्ष्यया । तदा स्वाध्यायो ज्ञानाय, सशयकलुषनिशानिरासाय नवचेतनायै, स्फूर्त्यै, धृत्यै, मत्यै, शान्त्यै, गत्यै, मोहापनोदाय, नैराश्यशोदाय चाभूत् । सप्रति तु शुका इव धान्यकणान् अवधानतया बहून् विषयान् स्वदमाना परीक्षामेव दुस्तरामुत्तितीर्षव उपाधिपत्रार्थिन एव न तु विद्यार्थिन । आलोचना प्राध्यापकोपदिष्टसारसग्रहाश्च (notes) सावधानमधीयाना न चेष्टन्ते विषयतलस्पर्शिता स्प्रष्टुम् । सगच्छते च तेषु प्रवाद —

गुरोर्गिर पञ्चदिनान्यधीत्य वेदान्तशास्त्राणि दिनत्रयञ्च ।
अमी समाघ्राय च तर्कवादान् समागता कुक्कुटमिश्रपादा ॥

ते खलु तमेव विषयमधीयते यस्य व्यवहारजगति भवति जीवनायोपयोगिता। कथं न ते विज्ञानमधीयेरन् येन यान्त्रिकाः, चिकित्सकाः, प्रौद्योगविदः (technician) रसायनविदः, भूगर्भशास्त्रिणो वा स्युः। कथं न वा मुखचुम्बितधूम्रवर्तिका गृहीतांग्लभाषावैदुष्याः पाश्चात्येषु तत्सभ्यताभावितान्तरेषु च जनेषु संगतं विधायान्तर्राष्ट्रीयसांस्कृतिकसम्पर्कद्वारेण विदेशयात्रासौभाग्यं लभेरन्। तादृशा वैदेशिका इव वेदानजापालगीतसंग्रहानधिकान् मन्यमानाः कथं तदध्ययनाय स्पृहयेयुरिति समापतति सतर्के प्रश्न-शतके विवक्षितं यद्यापि वर्तत एव वेदाध्ययनस्य महत्त्वम्। तत्र कारणानि—

. वेदा विश्वस्य प्राचीनतमा ग्रन्था इति सर्वेषां मतम्। ततोऽतीतवृत्तानुसंधायकानां तदध्ययनमपरिहार्यमेव।

२. सामयिकमूल्याभावेऽपि प्राक्कालिक गौरवमनुरुध्य सुरक्षितानि विधीयन्ते वस्तूनि पुरातनानि सर्वैः; वेदाश्च पुराणतमा इति तदुद्धारोऽपेक्षितः। [illegible] धाध्ययनापेक्षः।

३. मानव सभ्यतायाः संस्कृतेश्च प्रथमं वरदान वेदाः। ततोऽपि तेऽध्येया एव।

४. अधुना न सृष्टीतिहासो सहस्रचतुष्टयाब्दवर्षपरिमितोऽपि तु दीर्घतरः। तस्य च सुलभः प्राक्तनतमो भागोऽनवमो वेदेषु। तदर्थमपि नोपेक्ष्यस्तेषामभ्यासः।

५. मानवजातेरैतिह्यज्ञाने भाषाशास्त्रस्य महानुपयोगः सर्वैरप्यूरीकृतो बुधैः। तच्च वैदिकभाषाध्ययनं विना पङ्ग्वेवेति नितरां समर्थितं तन्महत्त्वम्।

६. भारतीयां संस्कृतेरुत्साधित वेदैरिति चाध्येयास्ते स्वसंस्कृतिरक्षणाभिभिः संस्कृतमन्यैः। कथं न तेऽभ्यस्येरन्? तदनुशीलने विस्मृते सति तेषां विलोपो विलुप्तेषु च तेषु संस्कृतेरपि निरसनमेव विधीयेत—

'छिन्ने मूले नैव शाखा न पत्रम्।'

इति। नैतावदेव। तत्र सन्निहितः खलु महान् विज्ञानराशिः समाहितानां ज्ञानैकरसिकानामन्वेषणीयः। प्राचेतसदिशाप्रभवविबुधैः भूतेऽपि महति कार्ये नावसित प्रयोजनमद्यापि वेदानुशीलनस्येति तदुपयोगिता स्वीकार्यैवेति शम्।

—•—

# साहसे श्रीर्निवसति

निखिलमपि मनुजजातं भुवनगतं ससाधनं विसाधनं चेति द्विधा विभक्तम् । प्रथमे स्वल्पेष्वितजीवनीयोपकरणाः सुखं कालं यापयन्तो नरा अपरे च वञ्चिता जीवितुमपरिहार्येभ्योऽपि पदार्थसारेभ्यः । नामावभावितं जगत् तेषामकिञ्चनता-निमित्तम्, परं विविधानि वस्तूनि समीहमानानामपि जनानां नास्ति प्रयत्नादृते किमपि सर्वसम्पन्नतासाधनम् । सकलेऽपि समीहिते पुरुषार्थानुरोधिनी सफलता । आत्मा-नमकिञ्चनं न विभावयतामभावदोषं च विलोपयितुं सोद्यमानां न किमपि दुष्करम् । जीवनं न केवलं परिमलललितसुखास्तरं कुसुमशयनम् । पदे पदेऽत्र विपद् विपद-नुबन्धिनी । तत्कातरान्तरा नवनीत-मनसोऽक्षमाः समुखागतापत्प्रतीकाराय । दैवं सर्वमूलत्वेन प्रमाणयतां तद्विधाता दुष्कर एव पुरुषकारः ।

सकलविभूतिमति जगति साहसैक-रसिका विदधतो मार्गं विशल्यं विलुम्पन्तोऽभा-वदूषणानि, तिरयन्तोऽक्षमताकलङ्कम् अमुमेव लोकं स्वर्गायितुं कल्पन्ते । आलस्यपित्त-तिक्तीकृतरसना न रमन्ते प्रभवन्ति पुरुषार्थमाधुर्यस्य ।

केचित् फेरव इवासफलता-शम्पा-सम्पात भीरवः पूर्वमेव कार्याद् विरमन्ते । तेषां सङ्कल्पतरी शङ्कातङ्कझञ्झादोलिता विकल्पशतावर्तकवलीकृता स्वप्नेऽपि कृत्या-कूपार-पार-दर्शनाय नालम् । निश्चयरज्जुसंदानित हृदयानां साहस-ज्योतिर्द्योतितान्त-राणां मनस्विनां कृते सङ्कल्पितं न खलु न फलिनीभवति । उक्तं च—

मज्जनवेदी वसुधा, कुल्या जलधिः, स्थली च पातालम् ।
वल्मीकश्च सुमेरुः कृतप्रतिज्ञस्य धीरस्य ॥

केचनैवात्र तादृशाः धर्मोपनतस्वर्णचषकाः, तरलितसौभाग्य भाजनाः अचालितपाणिपादा इहस्था एव स्वर्गलोकदुर्लभानपि भोगान् भुञ्जते । अन्यथा स्वहस्तार्जितवीरशब्दाः विवशीकृतदैवगतयः सुमतयोऽनवरतचरितोद्यमेनैव स्वभाग्यं निर्मिमते । तेषां खलु विदेशः स्वदेशायते, स्वदेशो नगरायते, नगरं भवनायते, भवनं गृहायते, विपिनं निष्कुटकायते । भुज-बलाधिगतमृगाधिपपदा हि पञ्चाननाः ।

उक्तं च—

को देशोऽत्र मनस्विनः स्वविषयः को वा विदेशः स्मृतो
यं देशं श्रयते तमेव कुरुते बाहुप्रतापार्जितम् ।
मद्दंष्ट्रानखलांगुलप्रहरणः सिंहो वनं गाहते,
तस्मिन्नेव हतद्विपेन्द्ररुधिरैस्तृष्णां छिनत्त्यात्मनः ॥

पुनश्च—

सुवर्णपुष्पितां पृथ्वीं चिन्वन्ति पुरुषास्त्रयः ।
शूरश्च कृतविद्यश्च यश्च जानाति सेवितुम् ॥

तेषां साहसमेव सफलताहेतुः । सत्यपि भुवनावधीरणाय प्रभवति भुजबलेऽतुले नालं सिंहधर्षणाय मत्तमातङ्गः । दूरादेव शङ्कितविपदः पदे पदे स्खलितपदाः सपद्यन्ते हास्यास्पदानि नवनीतहृदया कातराः । ससाहसाः सहसा सहसाऽऽस्फालितजङ्घातलाः करतलेनाह्वयन्ते स्वयमापदाः । ते सोत्फालमविरतोद्वान्तज्वालामुखेषु शिखिशिखरिशिखरिषु कूर्दन्ते, गर्जद्घोरघोणिषु निनदत्केसरिकरालेषु बृहत्कुम्भिबृंहितेषु गहनगहनेषु सहेलमाहिण्डन्ते, स्फूर्जन्नक्रचक्रभीषणे चोत्तालहिल्लोल-जाले वारानिधौ निरुपप्लवम् प्लवन्ते, अनाधारेऽपि गगनाङ्गणे ज्योतिरिङ्गणेऽवधीरितसदागतिगतयः पतत्रिचारं सञ्चरन्ति । सततोपजातश्वेतान्धकारदुर्दिनमविरतप्रवर्धमानजडिमजडितनाडीस्पन्दनं प्रालेय-राशि विलोपितप्रालेयाद्रिमदं ध्रुवप्रदेशमदभ्रहिमानीविलीनखनिजनिचयमनुसंधित्सवः स्वः सञ्चारपथीनं विदधति, अनाक्रान्तपूर्वाणि विलिखितगगनमुखानि पर्वतशृङ्गाणि प्रियतममपि जीवितं संशये जिहासन्त आरोढुं प्रयतन्ते । तेषामेव कथनं यत्—

न संशयमनारुह्य नरो भद्राणि पश्यति ।
संशयं पुनरारुह्य यदि जीवति पश्यति ॥

न किमपि दुष्करं तेषाम् । साहसैकरसिकानामियं भूः । नाद्य यावत्सरतादिकुत्सितमात्रवचनं साहसशब्दः । सत्त्वोत्कर्ष एव प्राणिनां तेन सूच्यते । पततु नाम जीवितं संशय-सागरे । परं स एव तेषामभ्युदय गिरि शिखरारोहणाय सम्पद्यते सोपानसरणिः । तस्यैव बलात् पुरा तुरुष्का भुजबलावलेपलुप्तविवेकाः सोल्लुण्ठं लोठितरिपुशिरःपटलमलुण्ठन् देशान्तराणि, तेनैव प्रेरिताः काका इव लङ्घितार्णवा, गृध्रा इव दूरावलोकितवैदेशिकसम्पदामपि गृध्नवो देशान्तरेषु स्वराज्यानि स्थापितवन्तो हरिवर्णजाः । अखिलोऽयं साहसस्य महिमा यदयं मानवो नवनवोन्मेषप्रवणशेमुषीको लोकान्तरेष्वपि शासनं सिषाधयिषति । तस्मात् सत्यमुक्तमभियुक्तैः—

साहसे वसति श्रीः ।

# 'ज्वलितं हि क्षणं श्रेयो न तु धूमायितं चिरम्'

चतुरशीतिलक्षयोनिषु सर्वोत्तमा मानुषी पुण्यराशिं सौभाग्यसहस्रबलैश्चैव सुलभेति कस्य नाम नादरो भवेत् तां प्रति । परिगणिता एव श्वासा जीवितानु— बन्धिनोऽसुलभा, अपुनरावर्तिन, अचिरस्थायिनश्चेति सूचयन्ति किमपि नामासाधारणं प्रयोजनम् । सत्यपि शीतवातातपासहे चिरपरावलम्बिनि वपुषि प्रादायि नियत्याऽस्मै विवेकधीमुपीरमितरदुर्लभं येनासौ दुर्धर्षां प्रकृतिमपि सुखं धर्षयति, द्विगुणोजसो हिंस्रान्पशूनपि सुतरामभिभवति, दुर्जयानपि रिपून् गतायास जयति । सत्यप्येताहशि दुरतिक्रमे पराक्रमे कृमिकीटादिसामान्येन कलित कार्पण्यो दीनं जीवन् विषीदति चेत् किं तस्य जीवनेन ? असुलभानामसूना प्रशस्यतमे कुत्रापि कर्मणि विधेयो नियोगस्तेषां साफल्यमर्जयितुकामेन ।

न मानव इतरतनुभृन्निकर इव किमप्यानयति जन्मना सह जगति जायमानो रिक्तहस्तो न वा निनीषन्नपि प्रभवति तृणमपि सहैव नेतु त्यजन् जीवितम् । स्वेनैव पौरुषेणोपार्जयति विपुलं वैभवं समदकटकरटिसंकटं सुभटानीकशतरक्षितं वा साम्राज्यम् । तस्यायमसाधारणो महिमा यदजेयामपि कालस्य गरीयसीं प्रभुतां तनयति । मदागतिमपि स्तिमितं दहनमपि शीतलं निम्नाभिमुखगामि जलमपि विपरीतयानं कर्तुं क्षमोऽसौ ।

तादृशशक्तिमतो मानवस्य जीवनं न कार्पण्याय, नावसादाय, नापमानाय, न दमनाय, न कालयापनाय, नाऽऽदानाय, न खट्वाभञ्जनाय, न च रुदिताय । स खलु भुवः शृंगार, प्रकृतेः पूर्णता, गुणानामालयः, ओजसो निधानम्, कलानामालम्ब, लक्ष्म्याः स्वयं वृतो भर्ता, नियतेः प्रतिमानम् विपदां परिपन्थी मानस्य च भाजनम् । आशास्ते तस्मात्किमपि मंगलायितं दीनं जगत् । सिंहस्येव सप्रतापस्य, चातकस्येव दृढव्रतस्य, पयोमुच इव जीवनदस्य, गजस्येव मनस्विनः, सुरभेरिव परहितरतस्य, शशिन इव ताप-हारिणः, रवेरिव तेजस्विनः एव तस्य जीवनं जीवनम् । कुक्षिम्भरितामात्र-

कृत्याना कुक्कुराणामिव परपादावलुण्ठनमात्रपौरुषाणा, चाटुकारितैककौशलाना-मुपेक्षितस्वाभिमानाना जीवन्मृताना जनुषा रज-कलुषिततनू रोदितीव मही भार भूतानाम् । उक्त च—

येषा न विद्या न तपो न दान न चापि शील न गुणो न धर्म ।
ते मृत्युलोके भुवि भारभूता मनुष्यरूपेण मृगाश्चरन्ति ॥

तेषामेव जीवन जीवनम्, तेषामेव प्रसू प्रसू, तैरलकृता मही, तैरेव प्रसाधित जगत्, तैरेव भूषिता मानवता यैर्नामित भुवन स्वमानेन, यै. सेविता प्राणिन स्व-विभवेन, यै खिलीकृत जगत् स्वात्मगुरुतया । तथाहि—

कुसुमस्तबकस्येव द्वे गती स्तो मनस्विनाम् ।
मूर्ध्नि वा सर्वलोकस्य विशीर्यन्त वनेऽथवा ॥

असाधारणेन गुणगरिम्णा, शौर्यशौण्डीर्येण, यशोनिधानेन धीरताधुरीणतया मनस्विता-प्रमाणेन परिशीलयन्ति ते निखिलमपि जगत् । पातयतु नाम विपद्वज्र विधाता, वर्षतु वा प्रसादमुखदा लक्ष्मी न ते सहजा प्रकृतिमुरुता जीवितस्यापि हेतोर्जहति, तैरेव जित जगत् सरलैरनृजुपौरुषैर्विरलैर्भुवन-बन्धुभि । तथाहि—

यस्य न सम्पदि हर्षो विपदि विषादो रणे च भीरुत्वम् ।
त भुवनत्रयतिलक जनयति जननी सुत विरलम् ॥

अतथाविधाना तु भस्त्रावदेव श्वसता मृतकल्पाना जीवित वृथैव । जननीयौवन वनच्छेदकुठारास्ताहशान् प्रसूयापि न तेषा प्रसू प्रसवित्रीषु सगर्व मस्तक कर्तु क्षमा —

गुणि-गण गणनारम्भे न पतति कठिनी ससम्भ्रमा यस्य ।
तेनाम्बा यदि सुतिनी वद वन्ध्या कीदृशी भवति ॥

अपि च—

स जातो येन जातेन याति वश समुन्नतिम् ।
परिवर्तिनि ससारे मृत को वा न जायते ॥
यस्मिञ्जीवति जीवन्ति बहव सोऽत्र जीवतु ।
वयांसि किन्न कुर्वन्ति चञ्च्वा स्वोदरपूरणम् ॥
एकेनापि सुपुत्रेण सिहो स्वपिति निर्भयम् ।
सहैकावशभि पुत्रैर्भार वहति गर्दभी ॥

किमेतेषा काकोदराणामिव परमर्मविषा वर्ष सहस्रजीविनामपि शुनामिव दशनोदर-प्रदर्शनाविष्कृतकार्पण्यानामुपानहामिव परचरणाश्रयणैकवलानामनर्जित मानानामनधिगतप्रतापानामनुपात्तयशसामलब्धशौर्यण्यपदानामनुपभुक्तसिष्टसमादराणा-

मस्तित्वेन। स्वल्पमपि तेषां ससम्मानमुच्छ्वसितं कल्पशतावधि जीवितादपि प्रगुणम्। न ते हि परेषामनादरभाजनतामनुभवन्ति जातुचित्।

'ज्वलितं न हिरण्यरेतसं चयमास्कन्दति भस्मनां जनः'।

न ते विलीक्रियन्ते जनैः, नावधीर्यन्ते कृपणैः न वञ्च्यन्ते भुजगैः, न प्रतार्यन्ते विटैः। न लोभ्यन्ते मृगमरीचिकया, नावधूयन्ते लघुजनोचितदुर्वृत्तैः, न वशीक्रियन्ते दुर्भाग्यविलसितैः, नानाद्रियन्ते धनिकैः। किमेतेषां चिरजीवितेन, न प्राय एतादृशानि भागधेयानि धरण्या यत् तेषां पादरजोभिर्दीर्घं कालं यावत् पावनीकृता भवेत्। परं धवलयन्ति ते तावतैवानेहसा भवनमपि भुवनमवधीरितशशिकिरणरोचिषा यशसा। कृतार्थयन्ति तावद्भिरेव दिनैः पार्श्ववर्तिनः, मध्यगान्, भुवनवर्तिनश्च जनान्। भूषयन्ति स्वोदारचरित्रेण मानवताम्, स्थापयन्ति निर्मलमिव यशःस्तम्भं कीनादर्शम्। धन्यास्ते विभूतिभूता भुवनस्य येषां जीवनं गापयति लोकं मुहुर्मुहुः—

'को न प्राणिति, तेजसा ज्वलति यस्तज्जीवितं जीवितम्।'

प्रतापः शिवाजी च नाभूतां दीर्घजीविनौ परं स्वत्यागादर्शेन गतौ जगत्यमरताम्। अभिमन्युः षोडशवर्षदेशीयोऽपि कालकवलितोऽभूत्। किन्तु दुर्धर्षशत्रुदलधर्षण-व्यक्त-प्रकर्षेणातुलेन बलेन नामी मृतः। तादृशमेव जीवितं श्रेयस्करं स्वस्य भुवनस्य च क्षेमायेति शम्।

—o—

# व्यतिषजति पदार्थानान्तरः कोऽपि हेतुः ।

लोकोऽयं विविधप्रकृतिशालिनां प्राणिनां समवाय इव चित्रवस्तूनाम् । जीवो जीवस्य जीवनमिति घोषिते जन्तुस्वभावे रक्तपातो, हिंसनम्, परस्परवैरभावो मात्सर्यमित्येवमादीनि विरोधिता-प्रमाणानि बाहुल्येन निभाल्यन्ते लोके, तथापि दृश्यते बहुधा जडानामपि पदार्थानां मिथः स्निग्धता का कथा पुनश्चेतनानाम् । न केवलं मानवास्तिर्यञ्चोऽपि बाध्यन्तेऽनया समरसया प्रीत्या । शशिनि समुदिते माद्यति जलनिधिरपि मुहुरुत्तानकल्लोलबाहुर्गाढमाश्लेष्टुमिव पयुत्सुकश्चिरवियुक्तं राकापतिं गगनमभ्युत्तिष्ठति । आच्छादयति नभोमण्डलं घनाघने प्रसारितचन्द्रको मृदङ्गध्वनीकृतस्तनितघोषो नृत्यन्न श्राम्यति शिखावलः । सहजगरलकुटिल-प्रकृतिरपि भुजगमो जहात्यसून्वियोजितमणिः । अचेतना अपि वीरुधः सरभस-माश्लिष्यन्ति परिसरगतान् तरून् मलयजपरिमललालिते सुरभिप्रणयिनि प्रावृषेण्ये वा शीकरासारशिशिरीकृते वाति वाते । प्रखर-तेजसमपि दिनकरं वृतवती वल्लभतया कमलिनी न जातुचिद् भजति रागं निशापतौ । किमत्र कारणं, कोऽसौ निर्बन्धः केन योजितः सम्बन्धः, किंमूलोऽयमाग्रह इति विचिकित्सायां महाकवेर्भवभूतेर्सूक्ति-रियं समादधाति—

व्यतिषजति पदार्थानान्तरः कोऽपि हेतु—
र्न खलु बहिरुपाधीन् प्रीतयः संश्रयन्ते ।
विकसति हि पतङ्गस्योदये पुण्डरीकम्
द्रवति च हिमरश्मावुद्गते चन्द्रकान्तः ॥ (उ. च.)

उदयगिरिभाजि तारापतौ स्फुटपटलदशना भवति स्मेरानना कुमुदिनी । ज्योत्स्नासनाथे नभोमण्डले सुधाकरकरपानमत्ता यापयति सकलां निशां समीक्षमाणो अमृतांशुबिम्बं जीवजीवः । जानन्नपि तरलतां वञ्चकतां च तस्य न जहाति मोहं सलिलस्य शफरः ।

व्यवहार-क्षेत्रे भवति जनानां सकारणा प्रीतिः। तत्र न नामापि वस्तुतः प्रेम्णः। वृत्तिकौशलमेव तल्लोकस्य। आप्रयोजनमेव च तस्याः स्थितिः। सत्यं चेन्न प्रणयः कारणान्तरमपेक्षते। दृश्यते हि सोदराणामपि समानकुलशीलशिक्षाणामपि प्राणान्तकृद् वैरम्। अनुभूयते अतिदूरवासिनामपि विपरीतरुचीनामपि विषम-कुल-शीलवतामपि सद्द्वेषिक्षितानामपि चिरस्थमपि सौहृदम्। जन्मान्तरेऽपि न तद् विच्छिद्यते। धर्मं, पदमभिजनं, जातिं वा न तदन्तरयति। न सत्यप्रेम्णः उपासको गणयति प्रणयपयोनो मृत्युमपि। सहजश्च सत्प्रेमा सरसीकरोति दुर्गतमपि जीवनम्। भावयन्ति विगता अपि भावास्तदनारतम्। भवति च बागत्र कालिदासस्य सुकवेः—

रम्याणि वीक्ष्य मधुरांश्च निशम्य शब्दान्
पर्युत्सुकी भवति यत्सुखितोऽपि जन्तुः।
तच्चेतसा स्मरति नूनमबोधपूर्वं
भावस्थिराणि जननान्तरसौहृदानि॥ (शा.)

इति—

न सहजा प्रीतिराश्रयति रूपम्, अपेक्षते कुलम्, गणयति शीलम्, उदीक्षते धनम्, कारणीकरोति पदम्। प्रियस्य दोषा अपि गुणायन्ते प्रियायै। तथाहि—

न कामवृत्तिर्वचनीयमीक्षते।

भवतु नाम तुल्यवयोरूपकुलशीलवता स्थिरा प्रीतिर्नीतिविदः परं न सा परीक्षित-नया हृदये पदमादधाति। अथवा—

मनश्चेद् रासभीमग्नं का कथा देवयोषिताम्।

सकारणे प्रेम्णि न तादृशी पावनता स्थिरता च यादृशी सहजे। अधुनापि चारुरूपलावण्यमात्रमुग्धमनसो युवानो युवतयश्च मिथः आकृष्टचेतसो भवन्ति। परं दृष्टमात्रे ततोऽधिके हृदयहारिणि जने पटुवेशतारुण्यसुषमाया रमण्या वा नयनगोचरं गतायां तत्मकान्तमानसा शिथिलप्रेमबन्धा सम्पद्यन्ते। न तेषां हृदि भवति वस्तुतः प्रीतिरपि तु वासना या जनाज्जनमभिलषति। सत्यस्य प्रेम्णः परिचयस्तु भवभूतेरेव वचासि—

अद्वैतं सुखदुःखयोरनुगतं सर्वास्ववस्थासु यत्
विश्रामो हृदयस्य यत्र, जरसा यस्मिन्न हार्यो रसः।
कालेनावरणात्ययात्परिणते यत्स्नेहसारे स्थितं
भद्रं तस्य सुमानुषस्य कथमप्येकं हि तत्प्राप्यते॥ (उ. च.)

नात्र संशयो यत्सत्यस्य प्रेम्ण आस्पदं विरला एव जना भवन्ति । प्रीतिर्नाम तादृशः स्वर्णप्रस्तरो यस्य स्पर्शमात्रेण प्रियस्य सकला अपि दोषा गुणायन्ते । भवति चात्र भगवान् वेदः —

'योषा हि जारस्य चक्षुषा विभाति ।'

जाराय रोचते चेत् कुरूपापि नारी निरतिशयरूपशालिनी प्रमदेव भाति । अप्रिया चेत् सौन्दर्यापहसितमाररमणीरामणीयकापि विरूपेव सम्पद्यते । प्रीतिबलादेव दारिद्र्यातिशयपीडितावपि दम्पती साम्राज्यसौख्यमिवानुभवन्तौ जीवनमेव यापयतः । स्वर्गायते तयोर्नरकमपि । कृच्छ्रशतदुर्गमाऽपि जन्मस्थली स्नेहवशादतितमां प्रेयसी भवति । सर्वस्वमिव,प्राणा इव, तनुरिव प्रतीयते प्रेमास्पदं वस्तु । यथा चोक्तम् —

न किंचिदपि कुर्वाणः सौख्यैर्दुःखान्यपोहति ।
तत्तस्य किमपि द्रव्यं यो हि यस्य प्रियो जनः ।' (उ च)

आंग्लसूक्तिरपि प्रभवत्यत्र—

"Love is blind"

न प्रेम्णि जायते उचितानुचितविवेकः । नीतियन्त्रणा, आचारबन्धनानि, स्वार्थपातकानि न तस्य सीमानं स्पृशन्ति । तस्य बलात्करोति दुष्कराण्यपि कर्माणि नरः । इष्यते खल्वद्य तद् रसायनं द्वेषज्वरानलदग्धस्यास्य भवस्य प्रशमाय । परं क्वैतादृशे स्वार्थपूर्तिदुर्विदग्धे काले तद्विधस्य सहजस्य प्रेम्णः उद्भवः । सति सम्भवे विश्वमिदं स्वर्गकल्पं सपद्येत जनस्येति शम् ।

---

# उपार्जितानां वित्तानां त्याग एव हि रक्षणम् ।

सम्भारा यद्यपि संसारे सकलानामपि विभक्ता पर न निखिलमपि सर्वस्योपनतम् । वञ्चितोऽस्त्यत्राखिलोऽपि जनो धनेन, गुणैः कलाभि , यत्नेन, पुरुषार्थेन, रूपेण वा । निराकर्तु तमभाव प्रयतन्ते प्राणिनोऽर्जयितु स्व समीहितम् । निर्धना श्रमेण, विद्याप्रदर्शनेन, विविध जीवनीयोपकरणरचनाभि सचिन्वन्ति धनम् । प्रज्ञाश्च सदा तृषितान्तरा विद्यापिपासया धनोत्सर्गेणापि वाञ्छन्ति सुधीभवितुम् । पर विशेषतोऽत्र जगति द्रव्यस्यैव महत्त्वम् सर्वारम्भमूलत्वात्तस्य । अर्थप्रधाने हि लोके द्रव्यमधिकृत्य सर्वे सव्यवहारा: । उक्त च—

"सर्वारम्भास्तण्डुलप्रस्थमूला ।" इति

शक्तिरपि द्रव्यस्य तादृशी । नास्त्यसम्भव किमपि धर्मगर्वितामिह । दुर्लभा अपि पदार्था सुलभास्तेषा कृते । सर्वे समाश्रयन्ति धनिन धनाशया गुणिन कलाविदो बुधाश्च प्रच्छायशीतलमिव तरु निदाघघर्मार्दिता । भजन्ते तमेव जना सुदोहा गामिव क्षीरार्थिन । तस्यैव बलेन प्रभवति पुमान् धर्मार्थकामाश्च सेवितुम् । इहस्थ एव स उपभुङ्क्ते सुरलोकसुलभान् भोगान । सुरूपा , दक्षा , सकलकलाविदग्धाश्च प्रमदा धनलोभवद्धहृदया कुत्सिताङ्गवेषरूपवयोवपुष्मन्तमपि धनिन पतित्वेन वृणते । एतदेव समीक्ष्य पुरोक्त केनापि आङ्ग्ललेखकेन—

'Money makes the mare go'

पर नैतावत् प्रयोजनमर्थस्य यत्स्वयमुपयुज्येत सचीयेत वा । न कृतार्थता तस्य पूरित चेन्निधान स्वर्णसभारै । कृपणाना धन पुष्पवत्या इव वपुर्न कस्याप्युपभोगाय । न ते स्वयमप्युपभुञ्जते सञ्चयमात्रायासिता , का कथा दानस्य । तेषा सन्ततिस्तूपेक्षितगुरूपदेशा मुक्तहस्त लुण्टयति तद्द्रव्य विविधव्यसनेषु, ज्ञातयो वा विभजन्ते मृतेऽर्जके । तत एव केनचिदुक्त लोकभाषायाम्—

"त्यक्त्वैवार्जितमत्र यान्तु कृपणा, भोक्ष्यन्ति जामातर ।"

(जोड जोड मर जायेंगे, माल जवाई खायेंगे ।)

अत द्वावेव मार्गौ ज्यायासौ धनस्योपयोगस्य । पात्रेपूत्सर्गं स्वय चोपभोग । येन सचित्य धन मुखित जीवन सकलसौविध्यसम्पादनं, पर्यटितो देश, पाठिता बाला, दृष्टानि दर्शनीयानि, आस्वादितानि विविधानि सरसस्वादूनि वस्तूनि, रक्षिता असहाया, पालिता निर्धना, निर्मापिता सर्वजनोपभोग्या शाला, चालिता मानसान्धकारापहरणपटवो विद्यालया, किं न कृत तै सफलीकृतजीवनै ? जित तै सकलमपि भुवनम्, 'इहैव तैर्जित स्वर्ग ।' काम ते भवन्तु दरिद्रा विसर्जितधना पात्रेषु पर कृतकृत्या उपयुज्यावश्यमपायशील द्रव्य साधु मार्गे । भवति तेषा कृतेऽय श्लोक —

सतप्त पर्वत-कुल तपनोष्मतप्तमुद्दामदावदहनानि च काननानि ।
नाना-नदी नदशतानि च पूरयित्वा रिक्तोऽसि यज्जलद सैव तवोत्तमा श्री ॥

अपुत्रा अपि मृतास्ते कल्पस्यास्तुयशसोऽमृता एव लोके ।

"कीर्तिर्यस्य स जीवति ।"

विलासादिषु च नियोजितधनोऽकृतपरहितोऽपि निन्द्यत एव जनै । न तस्य द्रव्य कस्यापि योगक्षेमाय कल्पते । तस्यैव गर्हा कृता केनाऽपि क्षारसागरव्याजेन—

आदाय वारि परित सरिता मुखेभ्य किं तावदर्जितमनेन दुरर्णवेन ।
क्षारीकृत च वडवावहने हुतञ्च, पातालकुक्षिकुहरे विनिवेशित च ॥

को लाभो देशस्य प्रजाना राष्ट्रस्य वैतेषा धनन ? दोषानेव ते प्रसारयन्ति समाजे दुर्विनीतैरात्मचेष्टितै । गर्हयन्ति ते कुल जातिमपि स्वचारित्रेण । मन्ये निशाऽपि बिभेति तेषा कलककालीकृतमुखावलोकनात् । लोके—

• जीवन्तोऽपि मृता एव तद्विधा क्षुद्रजन्तव ।

अर्थस्य सर्वथोत्कर्षो दानेन यदि पात्रे सुसेवे वा युज्यते । किं तावद् दुराचारस्य कुक्षिभरितामात्रप्रयोजनस्य स्वय पूर्णस्य वा प्रदानेन ? गुप्त प्रत्यक्ष वा स्वार्थं समीक्ष्यापि कृत दान न प्रशस्तम् । तत्रापि हि न पात्राय दान दीयते । अत एव सात्त्विकदानस्यैव सर्वत्र प्रशसा यस्मिन्न प्रतिदानवाञ्छा स्यात् ।

अधत्वे दरिद्रोद्धारार्थं धनस्य, भूमे, श्रमस्य, हलादेश्च यत्किमपि निर्व्याज दीयते, तस्य कथ न प्रशसा भवेत् पर वाजश्रवस इवानुपयोगिपदार्थदातु क आशसा विदधीत । न चाभरणचौरस्य तत्प्रायश्चित्ते च सूचिकादानार्थिनोऽपि दान दानत्वेन गण्यम् । अश्रद्धया केवल यश कामनया प्रयच्छतामपि न तथा शस्त यथा श्रान्तस्य निर्धनस्य स्वपरिश्रमार्जिताद् द्रव्यात्पणमात्रमपि प्रत्तम् । धन्य खलु तेषामर्जित येन समाजस्य, देशस्य, राष्ट्रस्य विश्वस्य च श्रेयोऽनुष्ठीयते । न केवल भारते विदेशेष्वपि अनेके धनिका स्वश्रमार्जित पुष्कल सार परसेवायै समुत्सृजन्ति । न तेषां

दान घृते मेदोमिश्रणं कृत्वाऽर्जयित्वा च कोटिशो मुद्रा-शतं प्रदायैव दानवीर-पताकाडिण्डिमिव दम्भदानम्। रक्तशूल (Redcross) लाञ्छना अन्तर्राष्ट्रीय-संस्था द्रव्येण, श्रमेण, चिकित्सा-सौविध्येन, मार्गनिर्माणेन, भूकम्पाद्याधिदैविकविपद्व्यसनिना वस्त्रादिप्रदानसाहाय्येन च यावन्तमुपकारं करोति कथकारं तस्य माहात्म्यं वर्ण्येत। उक्तं हि—

'परोपकाराय सतां विभूतयः।'

किं तेन कृपणधनेन न यत्स्वस्य परस्य वा किमपि श्रेयः समाचरति। वृथैव तेभ्यो ददाति लोकजीवनसाधनं सारं भूतभावनः। सर्पा इव ते निधिरक्षणप्रहरिणो येषु मृतेष्वेव तद्द्रव्यमुपयुज्यते। उक्तं हि—

कृपणानां धनं, नागानां फणमणिः, केसराणि सिंहानाम्।
कुलबालिकानां स्तनाः कुतः स्पृश्यन्ते अमृतानाम्॥

अनुपभुक्तस्य, अप्रत्तस्य तस्य विनाश एव भवति। अत एव—

दानं भोगो नाशस्तिस्रो गतयो भवन्ति वित्तस्य।
यस्तु ददाति न भुङ्क्ते तस्य तृतीया गतिर्भवति॥

राजानः प्रजाहितार्थिनो बलिभिर्धनमाददति विडम्य, परमुपयुञ्जते तासामेव श्रेयसे। रविरपि सम्भृतमखलसरित्सागरजलो निदाघे तपन् वर्षति सहस्रगुणं वारि प्रावृषि। पिबन्ति नदनदी-सरोवर-सलिलं जलधराः, ययो मुञ्चन्ति च धरणीसताप-हरणम्। भवन्ति हि सन्तः परोपकारैक-प्रयोजन-सचितधनाः।

आदानं हि विसर्गाय सतां वारि-मुचामिव।

तादृशानेव दातॄनभिलक्ष्य साधु प्रतिपादितं पण्डितराजेन—

अयि दलदरविन्द स्यन्दमानं मरन्दं
तव किमपि लिहन्तो मञ्जु गुञ्जन्ति भृङ्गाः।
दिशि दिशि निरपेक्षस्तावकीनं विवृण्वन्
परिमलमयमन्यो बान्धवो गन्धवाहः॥ (भा. वि)

—०—

# हासस्य स्वरूपमुपयोगिता च

मानवानां चेतसीषु प्रवृत्तिषु हासस्यापि नोपेक्षणीयं गौरवम्। सत्यवसरे सर्वोऽपि जनो भवति विकसिताक्षो विमुदिताननश्च। विवाहाद्युत्साहकाले शुक्ल-मुखचतुर्दशी-चन्द्र इव निस्तेजा हृतमिष्टान्न इव बाल., कुपितप्रणयिनी-निराकृत इव भुजंग., हृत-सर्वस्व इव कितव., व्ययितधन इव कृपण., क्षामक्षामगनुद्दित-वाष्पं रुदितकल्पमास्यं वहन् प्रेयानपि निमन्त्रयन्निवाशकुन नाभिनन्द्यते जनैः। गभीरोऽपि, दान्तोऽपि, मनस्व्यपि मानवो वहत्येव स्मेरौ कपोलावीषत्स्फुरितदन्त द्युती चाधरौ हासकाल उपसर्पति। अन्यथा-प्रवृत्तिश्चोपहस्यते सदा प्रसादसुमुखेन समाजेन।

मानसव्यापारमूलत्वेन जीवनस्यान्तर्जगद्विश्लेषणप्रवृत्तै राचार्यैश्चित्तवृत्तीना परिगणनावसरे हासस्य स्थायितया स्वीकृतिस्तस्य माहात्म्यं द्योतयति। यद्यपि नाट्याचार्येण भरतेन—

"शृङ्गारानुकृतिर्हास.,' 'शृङ्गाराद्धि भवेद्धास्यम्"

इत्युक्तम् तथापि कार्यकारणभावानुरोधेन स्वतन्त्रविभावानुभावाद्यनु-विधायितया न तस्य स्वातन्त्र्यं व्याहन्यते। उक्तं च तत्स्वरूपम्—

वागादिवैकृतैश्चेतोविकासो हास इष्यते। (सा. द. ३ प.)

कोऽपि नरो वीक्ष्यास्वाभाविकं वेषादिकं श्रुत्वा चासंगता वाचो हसति। न तावदस्वाभाविकीरुक्ती निशम्योचितानि च कार्याणि दृष्ट्वा मतिमान् स्मय करोति। तथा कुर्वन् मूर्खः क्षीब उन्मत्तो वा स मन्येत। क्वचिद् गभीरोक्तिरपि गूढव्यंग्या बोद्धृणा हास जनयति। अनेन हासेनैव हास्यरसस्य निष्पत्तिः। यथा—

विकृताकारवाग्वेषचेष्टादे कुहकाद् भवेत्।
हास्यो हासस्थायिभावः श्वेतः प्रमथ-दैवतः। (सा. द. ३ प.)

तत्रास्थानवस्तुविन्यासोऽसमञ्जसचेष्टितमुपहासिन्युक्तिश्च द्रष्टृणां श्रोतृणां वा हासं जनयन्ति । यथा—

गुरोर्गिरः पञ्चदिनान्यधीत्य वेदान्तशास्त्राणि दिनत्रयं च ।
अमी समाघ्राय च तर्कवादान् समागताः कुक्कुटमिश्रपादाः ।

अत्र पण्डितम्मन्यस्य कस्यचिदुपहासस्तस्याल्पज्ञतां सूचयति ।

असारे खलु संसारे सारं श्वशुरमन्दिरम् ।
हरो हिमालये शेते हरिः शेते महोदधौ ।

अत्र हरि-हरयोरम्बुधि हिमाचल-निवासस्य श्वशुर-गृहत्व-निमित्तोपन्यासेन हासोद्भूतिः । अथवा—

कमला कमले शेते हरः शेते हिमालये ।
हरिर्महोदधौ शेते मन्ये मत्कुणशङ्कया ।

इत्युक्तौ हरहरिकमलानां मत्कुणकृतभीतिवर्णनं हास्यहेतुः । हासस्य सर्वथा ललितं स्वरूपं नायकनायिकापरिहासे सखीनां संवादे वा । तदेव नर्मसंज्ञं शृङ्गार-रचनासु स्वारस्यं तनोति । शाकुन्तले प्रियंवदाया उक्तय, मालविकाग्निमित्रे च बकुलावलिकायास्तादृश्य एव । उक्तं च नर्मणः स्वरूपं विश्वनाथेन—

वैदग्ध्यक्रीडितं नर्म ।(सा द ३ प)

नैसर्गिकतया सकलेष्वपि जनेषु विद्यमानोऽपि हासो विविधतां वहति प्रकृति-भेदेनेति षड्विधं उदितं आचार्यैरुत्तममध्यमाधमश्रेणिगतत्वेन ।

तथाहि—

ज्येष्ठानां स्मितहसिते, मध्यानां विहसितावहसिते च ।
नीचानामपहसितं तथातिहसितं तदेष षड्भेदः ।

तेषु च—

ईषद्विकासिनयनं स्मितं स्यात्स्पन्दिताधरम् ।
किंचिल्लक्ष्यद्विजं तत्र हसितं कथितं बुधैः ॥
मधुरस्वरं विहसितं सांसशिरःकम्पमवहसितम् ।
अपहसितं सास्राक्षं विक्षिप्ताङ्गं च भवत्यतिहसितम् ॥

हासस्य हि व्यापकत्वेऽपि हास्याश्रयप्रकृतिवैचित्र्यादेव वैविध्यम् । शिक्षितानां हि वाचो रसनिर्भरा शिष्टजनसमतानि च चेष्टितान्यहृद्येपणानि । मर्यादातिक्रमे

# पुराणमित्येव न साधु सर्वम्....

जगति विविधप्रवृत्तिमति मति-भेदाद् दृश्यते विचारवैविध्य जनानाम् । स्थितिर्हि विषमा विश्वस्य सततपरिवर्तनशालिनी, जीवन इव समाजे, राज्ये, देशे काले च सदैव शुभाशुभदशापरिणामोऽनुभूतप्राय । यत्राद्य फेरधूकवुलाशिव—रसितस्वन एव श्रूयते, हिंस्रा प्राणिन एव स्वैरचार चरन्ति, दूर यावन्न मानुषी तनुर्दृष्टिगोचरतामायाति तत्रैव कालान्तरे गगनचुम्बिहर्म्यमालावलीढ, दोधूयमान-ललत्पताक निरन्तरचक्रमणपरजनविमर्दितघण्टापथ नगर विलोक्यते। आधुनिक च समृद्धतम त्रिदशगणस्पृहणीयवैभव नानोद्यानराजिविराजितम् पुरमपि न चिरात्पशु-गणपुरीषकरीषनिचितमरण्यस्थलमेव सम्पद्यते । अतएवोक्त भवभूतिना—

पुरा यत्र स्रोत पुलिनमधुना तत्र सरिताम्

विपर्यास यातो घनविरलभाव क्षितिरुहाम् ।

बहोर्दृष्ट कालादपरमिव मन्ये वनमिद

निवेश शैलानां तदिदमिति बुद्धि द्रढयति ।। (उ च २)

स्वभाव एवाय परिवर्तनस्य, नित्य नवप्राया विचारा कर्णशष्कुली स्पृशन्ति, नूतना आविष्काराश्चेतो विस्मापयन्ते, अभिनवा सभ्यता उदयन्ते, कर्णाकर्णिकया श्रुता स्पोलकल्पिता इति स्वीकृता एव पदार्था अक्षिलक्ष्यीभवन्ति। अचिन्तिताश्च कला विकसन्ति, असभाविसहृद्यानवद्यकल्पनाविलासतुन्दिलाश्चेतोरमा कृतय क्रियन्ते, अनालोचितपूर्ववस्तुविन्याससमन्विता ग्रन्था ग्रथ्यन्ते ।

किमेतावता, प्रतिदिन जनानां वेशालकारादिप्रकारा परिवर्त्यन्ते । विदेशै सह सपर्केण तत्रत्या वेशविशेषा [फैशन] भारतीयै सरुचि स्वीक्रियन्ते, चीनुचण्डातक (स्कर्ट] धारिण्यो वारुणेया महिलाश्च भरतदेशस्त्रीप्रियपरिधान शाटिका साग्रह गृह्णन्ति । पचनदप्रमदाना परिधेय लम्बकञ्चुक शीलवार (सिलवार) चान्यप्रान्तीया नार्य सादर परिदधति । अद्यास्मद्देशे वास्तुपद्धतिरपि पश्चिमकलासपर्कसम्पृक्ता

नवीनमेव प्रकारं स्वास्थ्यानुकूलं रूपमङ्गीकरोति । अध्येयेषु विषयेषु नाधुना वेदा, पुराणानि, काव्यानि च । न धर्मशास्त्रम्, परम् आङ्ग्लभाषा, गणितम्, भूगोलशास्त्रम्, लोकभाषासाहित्यम्, कृषिशास्त्रम्, विज्ञानम्, यन्त्रविद्या (Engineering) चिकित्साशास्त्रम् एतेषां च विषयाणां शाखा अधीयन्ते, अधीतकलाविषयाश्च कार्यक्षमतायै प्रशिक्षणं (Training) लभन्ते। अर्थोपार्जनसौकर्याय प्रौद्योगिक (Technical) शिक्षा च शिक्ष्यते । दर्शनानि च भारतीयैः सह पाश्चात्यान्यप्यधीयते ।

एवं सम्प्रति प्राचीनताया नवीनतया सह साङ्कर्यं दृश्यते । परं द्विधा खलु मानवीया प्रवृत्तिः । मुह्यति पुरातनं वीक्ष्य, प्रलोभ्यते च नवीनेन । अद्य मानवः पश्चादवलोक्यन्प्राचीनं जीवनप्रकारं परिचिनोति यत्र नगरादिकल्पना विरहिते नदीतटादिस्थले मुक्तो वासः, वेदानां गानम्, पर्णकुट्यः, वल्कलानि मृगचर्म चाच्छादनम्, गोयानैश्च यात्रा, उषमः, दिवः, सिन्धोश्च स्तुतिः सर्वमिदं स्मारयति गतस्य युगस्य । सन्ति तदभिज्ञानचिह्नान्यपि । अद्यापि राजमार्गे सलीलं कृतिं धावमानाभिस्तरस्वीभिरिव तैलशकटीभिः सह वृषभशकटी प्रतिस्पर्धते, शीलवारेण सह चण्डातकमपि धार्यते । वाष्पयानैः पादचारेण च यात्रा विधीयत एव ।

एतादृशे व्यतिकरे सन्ति केचित्पुराणप्रिया ये वर्तमानं जीवनमाडम्बरप्रायं मन्वाना नामगर्हं गर्हन्ते । नाद्यतनी शिक्षापद्धतिः, नेदानीतनो जीवनप्रकारः, नाधुनिको व्यवहारस्तेभ्यो रोचते । सामाजिकीं स्वच्छन्दतां तु न ते कृणितेनाप्यक्ष्णा सोढुं क्षमाः । तेषां विचारेऽनुदिनं ह्रासः सभ्यतायाः, अवसादः समाजस्य, पतनमाचारस्य, उदयः पापस्य, भ्रंशो बुद्धेः ध्वंसो नीतेः । किं बहुना, आडम्बरप्राये आधुनिके जगति ते निःसारमेव सर्वं समारं मन्यते ।

नवसभ्यतामयपथिकास्तु तान् दशगीहतकान् वार्द्धक्यदुर्विलसित-प्रसमसतीन् निर्दिशन्तो न तेषां वाक्येषु श्रद्दधते । न तेभ्यो प्राचीनानि दारुकर्माणि, वस्तूनि, विचाराश्च रोचन्ते । ते तु भूमण्डलमेव तथा परिणमयितुं व्यवस्यन्ति न यथा तृणमात्रमपि दोषबहुलस्य मौर्ख्यपूर्णस्यासंस्कृतस्यासभ्यस्य च प्राक्तनस्य जीवनस्य शेषोऽप्यवशिष्येत । ते प्रज्वलितविद्युद्दीपदीप्तिदीपितभवनेषु भूषावेषवेशधारिदीर्घाश्चित्ययायितक्षमपरिधाना मनोरमणी रमणीर्विलोकयन्तः, गोष्ठी-गृहेषु (क्लब) स्वैराहारविहारैस्ताभिः सहासमानं विनोदयन्तः, छुरिकाकण्टकादिभिर्विविधरसबघामितं भोजनमास्वादयन्तो न स्मर्तुमपि कामयन्ते पुरातनं जीवनम् । पुराचीनानि गृहाणि तेषां कृते गर्भगृहाणि, वेदादीनि शास्त्राणि मुधा विश्वासभूरीणि प्रमत्तजल्पितानि, ग्रामा नरकप्रायाः, विचारा अविचारितप्रचाराः । प्राचीनगतं सर्वमप्यज्ञान-विजृम्भितमिव तैर्दृश्यते ।

परम् 'अति सर्वत्र वर्जयेत्' इति नीतिकाराणां मतम्। दोषैकदृक्ता विहाय, सूक्ष्मेक्षिकया निभाल्येत चेदुभयत्रापि गुणा दोषाश्च सन्त्येव। अद्य विज्ञानबलात् परिस्थितय एव नव्या, यासु वयं श्वसिम। तदनुकूलाय जीवनायास्माभिर्नव्या प्रकारा सग्राह्या एव। प्राचीनेषु ग्रन्थेषु, आचारेषु विचारेषु च वर्तत एव किमप्यनुभूत सत्यं तदप्यङ्गीकार्यमेव। अन्यथा वयमप्यन्धविश्वासिन। सदा हेयवर्जं गुणग्रहण एवाग्रहो विधेय। आडम्बरप्राये नि सारतमे केवलमक्षिसुखप्रदेऽद्यतनवस्तुनिवहे सारप्राये लाभबहुले निर्डम्बरे च प्राचीनकलापरिणामे किं नास्ति विशेष? गर्भगृहनिभेषु वातप्रकाशवर्जितेषु प्राचीनेषु स्वास्थ्योपयोगिषु च नवगृहेषु न कोऽपि भेद? सर्वथा त्यक्तपक्षपातैरनाग्रहिभिरेकत्रप्रयुक्तबुद्धिविवेकैं गुंणग्राहिभिरेव भाव्यम्। न केवल नवीनत्वेन पुरातनत्वेन वा किमपि वस्तु निर्दोष विपरीत वा। गुणा दोषाश्च सर्वत्रैव भवन्ति। विदुषा पुरुषार्थस्तेषा विश्लेषणे। एतदेव समीक्ष्योक्त पुरा कालिदासेन—

पुराणमित्येव न साधु सर्वं न चापि काव्य नवमित्यवद्यम्।  
सन्त परीक्ष्यान्यतरद् भजन्ते मूढ परप्रत्ययनेयबुद्धि॥

---

# लक्ष्मीनिन्दा (बाणभट्टस्य कादम्बर्याः)

इयं सङ्क्रमणक्लोलवनविभ्रमभ्रमरी लक्ष्मी क्षीरसागरात्पारिजातपल्लवेभ्यो रागम्, इन्दुशकलादेकान्तवक्रताम्, उच्चैःश्रवसश्चञ्चलताम्, कालकूटान्मोहनशक्तिम्, मदिराया मदम्, कौस्तुभमणेर्नैष्ठुर्यम्, इत्येतानि सहवासपरिचयवशाद्विरहविनोदचिह्नानि गृहीत्वैवोद्गता। न ह्येवंविधमपरिचितमिह जगति किञ्चिदस्ति यथेयमनार्या। लब्धापि खलु दुःखेन परिपाल्यते, दृढगुणसन्दाननिष्पन्दीकृतापि नश्यति। उद्दामदर्पभटसहस्रोल्लासितासिलतापञ्जरविधृताप्यपक्रामति। मदजलदुर्दिनान्धकारगजघटितघनघटापरिपालितापि प्रपलायते। न परिचयं रक्षति, नाभिजनमीक्षते। न रूपमालोकयते। न कुलक्रममनुवर्तते। न शीलं पश्यति न वैदग्ध्यं गणयति। न श्रुतमाकर्णयति। न धर्ममनुरुध्यते। न लक्षणं प्रमाणीकरोति। गन्धर्वनगरलेखेव पश्यत एव नश्यति। अद्याप्यारूढमन्दरपरिवर्तावर्तभ्रान्तिजनितसंस्कारेव परिभ्रमति। कमलिनीसञ्चरणव्यतिकरलग्ननलिनीनालकण्टकक्षतेव न क्वचिदपि निर्भरमाबध्नाति पदम्। अतिप्रयत्नविधृतापि परमेश्वरगृहेषु विविधगन्धगजगण्डमधुपानमत्तेव परिस्खलति। पारुष्यमिव शिक्षितुमसिधारासु निवसति। विश्वरूपत्वमिव ग्रहीतुमाश्रिता नारायणमूर्तिम्, अप्रत्ययबहुला च दिवसान्तकमलमिव समुपचितमूलदण्डकोशमण्डलमपि मुञ्चति भूभुजम्, लतेव विटपकानध्यारोहति। गङ्गेव वसुजनन्यपि तरङ्गबुद्बुदचञ्चला, दिवसकरगतिरिव प्रकटितविविधसंक्रान्तिः, पातालगुहेव तमोबहुला, हिडिम्बेव भीमसाहसैकहार्यहृदया, प्रावृडिवाचिरद्युतिकारिणी, दुष्टपिशाचीव दर्शितानेकपुरुषोच्छ्राया, स्वल्पसत्त्वमुन्मत्तीकरोति। सरस्वतीपरिगृहीतमीर्ष्ययेव नालिङ्गति जनं, गुणवन्तमपवित्रमिव न स्पृशति। उदारसत्त्वममङ्गलमिव न बहु मन्यते। सुजनमनिमित्तमिव न पश्यति। अभिजातमहिमिव लङ्घयति। शूरं कण्टकमिव परिहरति, दातारं दुःस्वप्नमिव न स्मरति। विनीतं पातकिनमिव नोपसर्पति, मनस्विनमुन्मत्तमिवोपहसति, परस्परविरुद्धमिन्द्रजालमिव दर्शयन्ती प्रकटयति

जगति निजं चरितम्। तथाहि, संततमूष्माणमुपजनयन्त्यपि जाड्यमुपजनयति। उन्नतिमादधानाऽपि नीचस्वभावतामाविष्करोति, तोयराशिसंभवाऽपि तृष्णां संवर्धयति। ईश्वरता दधानाऽप्यशिवप्रकृतित्वमातनोति। बलोपचयमाहरन्त्यपि लघिमानमापादयति। अमृतसहोदराऽपि कटुकविपाका, विग्रहवत्यप्यप्रत्यक्षदर्शना, पुरुषोत्तमरताऽपि खलजनप्रिया, रेणुमयीव स्वच्छमपि कलुषीकरोति। यथा यथा चेयं चपला दीप्यते तथा तथा दीपशिखेव कज्जलमलिनमेव कर्म केवलमुद्वमति। इयं हि संवर्धनवारिधारा तृष्णाविषवल्लीनाम्, व्याधगीतिरिन्द्रियमृगाणाम्, परामर्शधूमलेखा सच्चरितचित्राणाम्, विभ्रमशय्या मोहदीर्घनिद्राणाम्, निवासजीर्णवलभी धनमदपिशाचिकानाम्, तिमिरोद्गतिः शास्त्रदृष्टीनाम्, पुरःपताका सर्वाविनयानाम्, उत्पत्तिनिम्नगा क्रोधावेगग्राहाणाम्, आपानभूमिर्विषयमधूनाम्, संगीतशाला भ्रूविकारनाट्यानाम्; आवासदरी दोषाशीविषाणाम्, उत्सारणवेत्रलता सत्पुरुषव्यवहाराणाम्, अकालप्रावृट् गुणकलहंसकानाम्, विसर्पणभूमिर्लोकापवादविस्फोटकानाम्, प्रस्तावना कपटनाटकस्य, कदलिका कामकरिणः, वध्यशाला साधुभावस्य, राहुजिह्वा धर्मेन्दुमण्डलस्य। न हि तं पश्यामि यो ह्यपरिचितयानया न निर्भरमुपगूढः यो वा न विप्रलब्धः।

---

# जननी जन्म भूमिश्च स्वर्गादपि गरीयसी

अहो कीदृश्युदात्तभावना निहितास्मिन् पद्ये । सुखैकनिलयो भोगानामायतनमद्वितीय, सत्यकर्मभि सतत वाञ्छित स्वर्गलोकोऽपि ययाऽधरीकृत , लुठन्नपि भुवनस्पृहणीयायां विभूतौ, भुञ्जानोऽपि त्रिदशदुर्लभान् विलासरसान्, विहरन्नपि रामणीयकानाहृतनन्दनायां प्रकृतिरङ्गस्थल्यां धरण्याम् विलसन्नपि सहजलावण्योपहसितदेवाङ्गनारूपगरिमभिर्लीलास्मितविसविच्छितसुललितविभ्रमलालिताभी रमणीभिर्बलात् जनो यस्या स्मार्यते , स्तन्यमिव निसर्गसरसमतिसुखदममृतमिवापर यदीय जल पाय पाय तोषो गात्रपोष पुष्णाति शरीरम्, वात्सल्यपरिमललालिते यदीयोत्सङ्गे क्रीड क्रीड रजसैव निचिता वक्ष रञ्जितेव नो देहयष्टि , यदञ्चलसंस्पर्शशीतलो वायुरपि निकाम शिशिरयति भृशतापदग्ध मनो वपुरपि , कथ न सा जन्मदा जननीव मातृभूमि स्पृहणीयतां व्रजेत् ? अपितु सा जन्मदाया जनन्या अपि जननीति ततोऽपि महतो गौरवस्य पात्रमिति कस्यास्ति सन्देह ?

यथा बाल पिबन्नपि काममजासुरभिप्रभृतिदुग्ध वञ्चितस्तु मातृस्तन्येन न जातु पुष्टिमाप्नोति वपुष ; एवमेव विदेशेषु नाना-साधनसाधितेषु वसन्नपि स्वमातृभूमेर्निसर्गसंस्कारसमाविष्टबीजवशात् रक्तसम्बद्ध रजो जल समीर वा विना न तथा स्वास्थ्यभाग् भवति जनो यथा स्वभूमौ । प्रत्यक्षमिद बाल्ये शिशवो न तथा पर्यङ्कलालिता अङ्कादङ्कमारोप्यमाणा अपि साधु पुष्यन्ति स्व यथा लुठन्तो जन्मभूरजसि । मातृभूजलमपि तेषां सहजवात्सल्यरसनिर्भर जननीक्रोडायते, रजोऽपि सुमनःपरागायते, जलमपि क्षीरायते, क्षीरमपि-सोमपीयते, ओषधिरपि सुधायते । गभीरोऽपि, सामर्थ्यमपि, फलान्यपि, तृणतरुलता-गुल्मसुषमाऽपि रसायनतामाचरन्तीति को नाम गणयितु क्षमस्तस्या माहात्म्यम् ? अधमर्णा वय. तस्या उपकारशतानाम् । भवेम नाम मुक्ता यज्ञादिभिर्देवर्णान् श्राद्धादिकर्म पुत्रोत्पादनादिभि पितॄणान्, स्वाध्यायादिना चर्षिऋणान्, पर न मुच्येम जातुचित् मातुर्जन्मभूमेश्च सादरादृणात् । एतदेवाभिप्रेत्याभिहित पुरा मर्यादा-पुरुषोत्तमेन रामचन्द्रेण—

अपि स्वर्णमयी लङ्का न मे राक्षस रोचते।
जननी जन्मभूमिश्च स्वर्गादपि गरीयसी।

अनार्या: स्याम वयमुपेक्ष्य स्वजननी जननी ता करुणावात्सल्यनिर्भरान्तराम्। अतएव वैदिकोऽपि ऋषिर्भक्तिपूर्णं उद्घोषयति—

'माता भूमि पुत्रोऽहं पृथिव्या'।

पित्रा लालितोऽपि पोषितोऽपि, पाठितोऽपि शिशुर्न तथा सरसहृदयता व्रजति यथा मातृस्तन्यवर्धित। सैव नैसर्गिकी प्रीतिर्जन्मभूमेरपि। राष्ट्रकवेर्मैथिलीशरणस्येमा पङ्क्तय स्वर्णाक्षरैरङ्कनीया—

जिसकी रज मे लोट लोट कर बडे हुए हैं,
घुटनों के बल सरक सरक कर खडे हुए हैं
परमहस सम बाल्यकाल मे सब सुख पाए
जिसके कारण धूल भरे हीरे कहलाए।
हम खेले कूदे हर्षयुत जिसकी प्यारी गोद मे।
हे मातृभूमि, तुझको निरख मग्न क्यों न हो मोद मे॥

कश्चिदाग्ल कविरपि सश्रद्ध स्वजन्मभूमि प्रणमति—

'I vow to thee my country'

अय देशप्रेमैवाधुना राष्ट्रीयतानाम्ना व्यवह्रियते प्रशस्यते च। वस्तुत नितरामपरिहार्या मातृभक्तेर्भावना नागरिकाणा मनसु। ता विना न तावद्देशवासिन स्वकर्तव्ये जागरूका भवन्ति। दुर्भाग्यस्यैव विलसितमिद, यत्रत्या मानवा पुराजूघुषन्—

समुद्रवसने देवि पर्वतस्तनमण्डले।
विष्णुपत्नि नमस्तुभ्य पादस्पर्शं क्षमस्व मे॥

*तत्रत्या एव नरा स्वार्थाय मातरमेव विक्रीणीयुरिति को नाम विश्वसेत्। जय*चन्देन द्वेषपराभूतेन स्वय गोराधिप शहाबदीनमाहूत स्वमातृष्वसेयस्यैव विनाशाय। मोद्गल-साम्राज्य-सस्थापको बर्बरोऽपि शासकैरिहस्थैरेवेर्ष्याग्रहीतैर्विवेकान्धै-मावारमिव पारतन्त्र्य स्वयमामन्त्रित। न तैरपह्नुतमनिभिर्जनुचिद् विचारित यत् कीदृशीय शृङ्खला स्वगले निक्षिप्यते। इतोऽप्यग्रामायनरपतोना न जान कीदृशी दुर्मतिरभूत्स्वज्ञातिभ्यो विरुध्य विदेश्याना साहाय्यमाचरताम्।

स्वतन्त्रतानन्यभक्तस्य राजपुत्रकुलमुकुटमणे प्रतापसिंहस्यैव बन्धवस्तत्प्रतीपस्य सम्राजोऽकबरस्याकुण्ठशस्त्रतामाचरन् । न जाने को नाम व्यामोहोऽजायतान्यथाना भूपतीना यैर्दास्यनिगडच्छेदोद्यताना विरलानामपि विरोध एव कृत तेषामेव मूढधिया पारस्परिककलहेराग्लदेश्या प्राभवन्निम महादेश स्वायत्तीकर्तुम् । तेषा शासनकालेऽपि तादृशी राष्ट्रद्रोहिता प्रदर्शिता भारतीयैर्या स्मार स्मार गुरुत्रपाभार-नतमुत्तमाग नोदच्यते । सप्तपञ्चाशदधिकेऽष्टादशशततमे वर्षे विप्लवव्याप्त एव क्रान्ति-काले गोपाद्रिपतिना (ग्वालियरनरेश) पञ्चनदस्थराज्याधिपतिभिश्चाग्लाना साहाय्य विधाय वैदेशिकाना नष्टप्रायमपि शासन सुदृढतामानीतम् । गौराङ्गप्रभूणामाधिपत्या-वधावपि भूपतिभिरधिकारिभिश्च स्वबन्धूनामेवोपरि के नाम नात्याचारा विहिता केवल स्वामिन प्रसादयितुम् । निजाधिकारलालसैं सत्यज्यात्ममानसपद निखिलमपि कुत्सित कर्मानुष्ठितम् । भारतीयस्वाधीनतासग्रामस्येतिहासे तेषामाचरितान्याय-साक्षरैरङ्कितानि न कदापि लोप्यानि । अद्यापि राष्ट्रीयतायुगे भारतीया आत्मन कुकर्मभिर्लज्जयन्ति राष्ट्रम् । अधिकारिपूत्कोचप्रियता, मन्त्रिषु स्वार्थपरायणता कर्तव्योपेक्षा कुक्षिभरिता च, कर्मचारिषु नियमात्मपरताऽनुचिता हृदयपराङ्-मुखता, वणिक्षु नि सीमाऽर्थलोभ, सकलमपि तन्त्रमाकुलयति । भारतवासिनो-ऽपि ते स्पृहयन्ति परवेषभूषाऽऽचारसस्कृतिभ्य । नित्य परकीयामेव भाषामादरेण पश्यन्ति ।

देशानुरागेऽद्य वैदेशिका एवाग्रण्यो ये स्वमातृभूमेर्गौरवार्थं सर्वस्वमपि होतु न सकुचन्ति । पर तेषा राष्ट्रीयताऽतिमर्वीर्णा भीषणपरिपाकवलुषिता चेति न सर्वथा स्पृहणीया । स्वदेश सर्वोपरि मन्यमानास्ते तस्य भूत्यै सकलमपि विश्व भस्मसात् कर्तुमपि नित्यमुद्यता । गतमहासमरे क्षीणशक्ति फासिस्टवादो नाजीवादश्च तस्यैव भावस्य कुफलम् । साम्राज्यवाद आर्थिका प्रभावादश्च तस्या एव दुष्परिणाम ।

'उदार-चरिताना तु वसुधैव कुटुम्बकम्', इति भावना न तद्गतात्मना हृदयमपि स्पृशति कदाचित् । आवश्यकता चास्यैव सिद्धान्तस्य येन मनुष्यमात्रमपि नेतरमपि तु स्वज्ञातिभावनयैव गृह्णीत । तदैव वस्तुन समतामानीय राष्ट्रोन्नतिर्भविष्यति । स्वार्थं परित्यज्य देशहितमेवात्मकर्तव्य मन्यमाना विश्वबन्धुतामाश्रयन्तो यदि जन स्वदेशार्थं मुधितान्नत गृहीत्वा सर्वस्वमपि जुहुयुस्तदैव वचन साधु भवेत्—

'जननी जन्मभूमिश्च स्वर्गादपि गरीयसी ।'

# पुमान् पुमांसं परिपातु विश्वतः ।

जगति विविधभाववति विस्तृततमे परमे धामनि नानाचरित्रशालिना प्राणिना मानवो मानवोधमतिविवेकशीलतयाऽमुतो मूर्धनि मत सुमतिभि । आहारविहारादिषु विद्यमानाऽपि समताऽममता तेनैव गुणेन साधयति मनुभुताना यदभाववान् दानवता व्रजति मानव । तथाहि—

> आहार-निद्रा-भयमैथुनानि
> सामान्यमेतत्पशुभिर्नराणाम् ।
> ज्ञान हि तेषामधिको विशेषो
> ज्ञानेन हीना पशुभि समाना ॥

ज्ञान चेह कर्तव्याकर्तव्यविनिश्चयात्मकमभिमत यन्न मनुजस्य धर्म विलोपयेत् । तादृश विवेकलक्षण ज्ञानमपरिहार्यमेव यदनुसृत्य नरो न पराशर्मकर कर्म समाचरेत् । यदनभिमत स्वस्य, यदरुन्तुद मानमस्य, यदुदीरित शूलायते कर्णयो, यदाचरित जनयत्यसौविध्य स्वपरकृत्यव्यूहस्य यदन्वेष्टित हानिकरमात्मनस्तदेव परेषामपि मपेदनाकाक्षित विप्रिय चेति दूरत परिहरेत् । एतदेवाभिमयायाभियुक्त रुक्तम्—'आत्मन प्रतिकूलानि परेषा न समाचरेत् ।'

परमद्य कीदृशी स्थितिरस्य जगत । मत्स्यन्याय सर्वत्र प्रथते । बलिनो निर्बलम्, सम्राज क्षुद्रराज्याधिपतीन्, धनिनो निर्धनान्, अधिकृता अधीनस्थान्, शासका शासितान् सर्वग्रास जिग्रसिषन्ते । सकलभुवनविद्याभिगतिनिदान विज्ञानमपि विहाय लोकक्षेममार्ग लोक-घस्मराणा तेषामेवोत्तोडकाना पाचनाग्नि धमतितमाम् । विस्मृतनैसर्गिकवृत्ति प्रकृतिरपि विकृतिपरा तानेवानुविदधती, विरोधितामेवाचरति जगत । तथाहि शीतधर्मितया विदित सलिलमपि जनयति दहनम् । वैद्युतोऽग्निरपि समीरयति शिशिर-शिशिर समीरम् । उष्णतम जल परिणमति तुहिनतनो ।

कलुषकलुषाण्युल्मुकान्यपि दधति हीरक्ताम्। अद्य हिममपि दहनायते, दहनोऽपि सलिलायते, सलिलमपि पवनायते पवनोऽपि शक्तीयते।

ईदृशमघटितघटनापटीयः प्रमापितसकलवस्तुविधान विज्ञान विधाय सहाय क्रूरकर्मोपहसितदानवो मानवोऽद्य जलौका इव, मत्कुण इव, यूकेव, ऋक्ष इव, पिशाच इव परस्क्तशोषणे शमयति निजां तृषाम्। क्रव्यादिव कलितनरमुण्डमालो रुद्र इव शवावलोकनसमुजातहर्षो मृत्युरिव महासमराय स्पृहयति। तेनासख्याना नरनारीणा रक्त सिन्धून् प्रवाह्य देशान्तराणि स्वतान्त्र्य-सौख्य-भाञ्जि बलात्कारेण दासीकृत्य तत्रत्यजनता शोष शोष घनिकनिर्धनानां वर्गभेदा स्थापिता। अधुना चामीकरराशि-पूरितकोषो देवमन्योऽधनान् पीडयति, दलयति, ताडयति, दशति, समूलघात हन्ति स्वैर-रयाचारैं। तेनैव धनमदधुर्मदेन स्वात्याचारप्रचाराय, दुर्दमरक्तलिप्साप्रशमाय च वस्तु-सारान् सहृत्य तदणुभि सहर्तृगुणैर्गुणैर्लोकसहारक्षमाणि पिण्डानि(Bombs) निर्मितानि। अधुना चान्तर्राष्ट्रीयप्रक्षेपाम्त्रनिर्माणेन वायव्यायुध(Gas) कल्पनैश्च कल्पान्तकालो नेदिष्ठतामानीत। अतीतेषु पञ्चचत्वारिंशद्वर्षेषु द्वे विश्वव्यापिनी महायुद्धे तस्यैव मनुजकुलघस्मरया रणलिप्सया कारिते ययो महती सख्या जनानाम-काण्ड एव कालकवलिता समपद्यत। कोटिकल्पा नरा. प्रहृतप्रहरणविमुक्तविषधूम्र-भावाद् दुश्चिकित्स्याना रुजा भाजनानि समजायन्त। एकस्यापि नामाणुपिण्डस्य निर्माणे यावतो धनस्यापव्यय क्रियते, तस्य सहस्रतमेऽशे प्रतिजन वितीर्णे लक्ष जना दारितदारिद्र्यदर्पं सौख्येन काल नेतु क्षमा। एतावतोऽनेयमेतत् कियानर्थव्ययोऽप्युक्त-सहारकास्त्रभण्डारसञ्जाया विधीयते परनाशाभिलाषिणा नरेण। प्रादित कालाग्नी-विभि साक्षात्कृतमनुजप्रकृतिभिरस्या दुर्दमाधिकारलिप्सायाः गर्हैव सर्वत्र कृता। परमा सूरी वृत्तिर्न तेषा वचने तिष्ठति, न तेभ्य कर्णौ ददाति, न तान् परिगणयति।

प्रसिद्धिरियं न व्याघ्रो व्याघ्र खादतीति, सकलकाननविनाशोत्सुका अपि हिंस्रा श्वापदा न सगन्धेषु प्रहरन्ति। पर मानव एवेदृश कुटिलो निर्घृणश्च जीवो य आत्मीयानेव ग्रसते। स्वार्थान्धो नासौ गणयति परपीडाम्, न कलयति स्वपरसविभागम्, नापेक्षते सस्कृतिम्, न स्मरति करुणाया, न परिचिनोति पापम्, न प्रतीक्षते सुजना-नुशासनम्। न श्रद्दधाति शास्त्रेषु, न विश्वसिति धर्मे, न बिभेति पापात्, न जिह्रेति लुण्टाकवृत्त्या, नापत्रपते कुकर्मणा, केवल गजनिमीलिकया सकलस्यापि शुभाकाङ्क्षिणो जगतोऽनुरोधमुपेक्षमाण स्वपशुबलवृद्धय एवानुदिन प्रयतते। सहारसाधनसंभारान् समुच्चेतु न चिन्तयन् प्रतिवेशि-राष्ट्रहानिम्, प्रवर्धमाणविविधघातकरोगाणुनिचयाश्चा-पश्यन् निर्मितान्याणवास्त्राणि परीक्षते। एधते च दिनादिन साम्राज्य प्रसार लिप्सा, वर्चस्वाधिपत्यप्रेप्साऽधिकाधिकनाशक्षमशक्ति-बुभुत्सा च तस्य। चन्द्रादिषु लोकान्तरेषु

च यानजापणप्रतियोगिताया मूलमियमेवाधिकार-लालसा यया वशीकृतो नरो न पृथिवी-राज्यमात्रेण तुष्यति। अस्मादेव हेतोर्वृत्तं गतं महासमरद्वयं पाश्चात्यैः प्राच्यदेशाना शोषणं च कृतम्। पुनश्चेयमासुरी पिपासा तृतीयं भीषणतमं समरमामन्त्रयति यस्मिन् प्रवृत्ते क्व यास्यति मानवीया सभ्यतेति केन ज्ञायते। अत इण्डोनेशियादेशस्य बाण्डुग-नगरे वृत्तायामेकस्यां प्राच्यदेशपरिषदि भारतप्रधानमन्त्रिणा जवाहरलालेन शान्तिस्था-पनार्थं पञ्चशीलस्य सिद्धान्तः प्रस्तुतः। तथाहि—

१. परराष्ट्रेण सह विवादानां मन्त्रणाभिः समाधानम्।
२. इतर-राष्ट्राणामान्तरिकेषु संघर्षेष्वहस्तक्षेपः।
३. अन्यसार्वभौमसत्ताया आदरः।
४. सहास्तित्वे विश्वासः।
५. परेषामनाक्रमणनीतेः पालनम्।

शक्तिशालिराष्ट्रैर्भयस्त्रस्तान्यैः स बहुमानं स्वीकृताः समर्थिताश्च बलिष्ठाभिः शक्तिभिः सिद्धान्ता इमे न प्रयोगेण सत्यापिता राष्ट्रैः। मिस्रदेशोपरि फ्रासीयानामा-ग्लानाञ्चाक्रमणम्, चीनस्य तिब्बतलीलनम्, अफ्रीकाद्वीपे च पाश्चात्यानां स्वाधिकार-रक्षार्थं दर्शितं नृशंसत्वम् विपरीतमेव पञ्चशीलव्रतस्य। राष्ट्राणां परस्परद्वेषिणी नीतिः सम्प्रति विद्यमानं शीतयुद्धं तृतीये युद्धे परिणमयितुं सुक्षमा। तदा न द्रक्ष्यते सृष्टिः, न मानवः, न पृथिवी, न वैभवम्, न संस्कृतिः, न राज्यम्, न द्रव्यम्, न धरणी, न सत्ता यदर्थं जना हुड्डुयोधं युध्यन्ते।

सम्प्रति न केवलं रूसामरीके विमनायेते, साम्यवादसमेधितोग्रभावश्चीनोऽपि शशिनमिव विधुन्तुदो निखिलमेव भुवनं जिघत्सति। आक्रान्तश्च तेन मैत्रीविस्रम्भ-घातिना भारतस्य पुरतमो भागः। ईदृशमाचरणं स्फुलिङ्गायमानमपि सहसैव भीषणतमं समराग्निं परिणन्तुं क्षमं येन दन्दह्यमानं निखिलमपि भुवनं विधातापि न त्रातुं पारयेत्। अतोऽपेक्ष्यते धरणीतलस्य सविभवत्रा नरेण सप्रयोगं, साचरणं, सविश्वासं, स-सङ्कल्पं, ससमर्थनं, स-प्रचारं सर्वतो डिण्डिमघोषोऽस्य मन्त्रस्य—'पुमान् पुमांसं परिपातु विश्वतः इति'।

—०—

# सर्वे भवन्तु सुखिनः (सर्वाभ्युदयवादः)

(श्रीश्रीनिवासशास्त्रिण 'चन्द्रमहीमति' सज्ञादुपन्यासात्)

समाजो हि सहयोगिना सहकर्मिणा पारस्परिकभावपूर्णे सामञ्जस्ये सामरस्ये च समाश्रित समुदाय । परमद्य तस्मिन् केचनासहकर्माणोऽनुत्पाद्यापि सर्वाधिक विश्रमजीविनश्च भूता व्यपेत-लज्जा । एतानन्तरेण न कापि समाजे क्षति । यथा च —

(१) व्याजोपजीवी—कस्यापि शतमुद्र भूषण क्षेत्र गृह पश्वादि वा न्यस्य मावश्यकतापीडिताय पञ्चाशन्मुद्रा ददाति न्यासधर । एतस्य कुसीद दशमुद्रा प्रतिमासम् । न्यासावर्तनावधिर्मासत्रयम् । परिस्थितिपीडितो न्यासकरोऽवधिमध्ये कथमपि न्यास प्रत्यावर्तयितु न समर्थ । न्यास धरस्य कुसीद चक्रवृद्ध्या यथा प्रतिक्षणमेधते इतरस्य तथैव ह्रास । मत एव स महाजन । जनो दृश्यमानोऽप्यजन = जनेतर =मानवोचितगुणरहित, सोऽपि न सामान्योऽपि महान् । मथवा मज गतिक्षेपणयो —मजन, न्यासेन सह न्यासधरस्यात्मसात्करणे सस्पृह सफलश्च, सोऽपि महान् । दस्युराजस्तु सम्पन्नेभ्योऽपहरति, परमय वराकानकिञ्चनात् ममद्रभागान्, भग्नमनसो विपण्णान् खिन्नानवसादयति । मत एव प्राकृते स 'बाबू', 'लाला' मादि पदै सम्बोध्यते ।

(२) व्यसनोपजीवी—परषा व्यसनेन, कष्टन, विपत्त्या यो लाभान्वितो भवति स । यथा मानकीलो वैद्यश्च । ज्ञान हि परेषां दामंणे, यो ज्ञान विक्रीणानो लोकस्य विपत्त्या लाभान्वितो बुभूषति, स किं ज्ञानोपासक ? 'ते हित्वा काञ्चन राशि पांसुराशिमुपासते', स तु व्यापारी भगवत माशिष माशासानो मक्त इव ''न स भवत स वं वणिक् ।'' य शूलमारोप्यमाणात् पञ्चसहस्र मुमूर्षोश्च दत्त जिघृक्षति । विचार्यंता स कीदृश ? 'यो मर्तुकामादपि हर्तुंकाम ।'

नार्थार्थं नापि कामार्थमथ भूतदयां प्रति ।
वर्तते यश्चिकित्सां स सर्वमतिवर्तते ॥ (चरक.)

एतादृशास्तु राष्ट्रस्य गौरवम् । परमद्य कियन्तस्तादृशा । अद्यत्वे चिकित्सका प्रथम रुग्ण न हि, तस्य धन दिदृक्षन्ते, स जीवतु म्रियता वा ।

(३) शुल्कोपजीवी—गृहशुल्केन शकटशुल्केन जनवाहनशुल्केन जीवति शत सहस्र वा मानवाना नियतवेतनेन नियोज्य यन्त्रादीना परिचालनेन वार्यमुपार्जयति स ।

(४) घटक —केवल वार्तावित्त उभयोपभोक्ता उभयार्थहरश्च ।

(५) समानशीलस्य धनिन पौष्यपुनोऽपहृतहिरण्यस्य परिरक्षको लगुडी च ।

अद्य वय सर्वाभ्युदयाय कृतसकल्पा समवेता, सर्वेण सर्वस्मै, सर्वस्मात् सर्वस्य सर्वस्मिन्नभि उदय =सर्वाभ्युदय । सर्वेषामेकाङ्गिन्युदये न सन्तुलन सभाव्यते, अत समन्तादुदयोऽस्माकमभीष्ट । स चाधिदैविकीनामाधिभौतिकीनामाध्यात्मिकीनाञ्च शक्तीनामभितो दिशामुत्कर्षं स्वभाव-बाधिकाया बाधाया अपनयनञ्च । सोऽय दरिद्राङ्ग-भगिदोषानुपगिपुञ्जवादोत्तु गमुजङ्गभङ्गी, अभिमानभीष्मोष्मग्रीष्मक्लान्तामृतस्यन्दी जगन्निर्वेदखेदच्छेदी पराभूतभूतवर्गानुकम्पी, पुञ्जवादद्रु कारकारातुरहर्षवर्षी, भव-भयाग्निविविग्नामृतवर्षी समददर्पज्वरकर्षी भ्रान्तरगुहागहनगेहगूहितध्वान्तविध्वसी कलकसकरशकरो मायामत्तनिजगदगदङ्कार हास्यमहसा प्रियोऽभयकरो मन्दीकृत-भीतिभृद्विपद्, जगच्छर्मकर्मी आनन्दधामा, दिग्देशकालकलननिरपेक्ष क्षपितातङ्क उद्बहेमरुचाम् सकर्मकर्म फलोपलम्भ, कनकवर्षघनोऽपक्षघनोऽपक्षपातम्, दीनतर्जि-धनिहृद्विलसितोष्मशमनशीतसुभगसुरभिसमीर, पुञ्जवादप्लुष्टपीयूषसारशिशिरो दु सिन्धुलहरीनिर्मल कीर्तितभाग्योरकीलक, विपन्नबन्धु, समस्ततापोपेतापन्नपालन-प्रथितप्रवीण, प्रायशो विश्वजनवाड्मनसानुमोदितो महीमहितो विश्वस्य निश्शेष-कलमषमक्षमोऽशेषजनचिन्तामणिर्नि सामान्यो वदान्यमान्यो वादमूर्धन्योऽस्माक प्राक्तन आदर्श परस्पर फलानपेक्ष स्वभाव । सर्वोऽत्र सर्वस्मै न पक्षाय, न सम्प्रदायाय, अपि तु लोकाय । 'वसुधैव कुटुम्बकम्', 'यो वै भूमा तत्सुखम्', स चाय परस्परमभेदभावेऽद्वैते सहयोगेच प्रतिष्ठित । सम्पत्तेरप्ययमेवार्थ । सम्यक् पदनम् प्राप्ति (पदगतो, या प्राप्ति समेभ्य सम्यग् जायते सैव) सम्पत्ति, या च विशिष्टरूपेण (केवल विशिष्टेभ्य प्राप्ति) सा विपत्ति । यत्रैको निषीदति, नवनवतिश्च नराणां यते विषीदति सा विपत्ति पुञ्जवादस्य फलम् ।

—o—

## कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः ।
## एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे ॥

(ई. उ २)

अगाधोऽयं जीवनाम्बुधिः, अनन्ता उत्पात-वाता इव विपन्निपाताः विरलाश्च सम्पत्तरङ्गा इव भवन्ति सम्पद्यमानाः । आश्रयन्ति निष्पादयन्ति च कामपि जीविकां जीवितुकामा यावज्जीवं जीवाः । संघर्षमूले हि जीविते विजेता जीवति चिरं सुखेन, पराजितस्तु कामं भस्त्रेव श्वसितु दौर्गत्ययापितकालो यथा कथंचित् परं न तज्जीवनं जीवनम् । तथाहि—

'काकोऽपि जीवति चिराय बलिं च भुङ्क्ते ।'

अतः पुरुषार्थपरायणो जनः स्वोद्योगेन लोकमिमं स्वर्गायितं कर्तुं कल्पते । परं महांस्तत्रायासोऽनुभूयत इति कापुरुषाः कातराः कर्मक्षेत्राद् संसारमेव जिहासन्ति । परं कथंकारं हीयेत संसारः सरन्त्या श्वाससरण्या, धगद्धगज्ज्वलति च जाठरेऽग्नौ । ततस्त्यक्तसर्वसंपर्कोऽपि गृहीततुम्बीपात्रः औदरिक इव गृहाद्गृहं भैक्ष्यमटति । सहसा भस्मसाद् भवति क्षुधावह्निज्वालाजाले सकलोऽपि वैराग्यभावः । स एवानावृत्य, स एव परिग्रहेऽभिलाषः, सैव कामासक्तिः, तदा किं तेन त्यक्तः संसारः ?

'जटिलो, मुण्डी, लुञ्चितकेशः, काषायाम्बरबहुकृतवेषः ।
करतलभिक्षा, तरुतलवासस्तदपि न मुञ्चत्याशापाशः ॥''

श्रुतशास्त्रकथाः 'अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभम्' इत्यत्र विश्वस्ताः, कर्मकल्पादेव भूयो भूयो मरणं जननं च जायेते स एव त्याज्य इति निवृत्तिमार्गाभिमुखा भवन्ति । परं केवलेन काषायग्रहणेन गृहत्यागेन वा न साध्यते निवृत्तिः । ज्ञानं सद्धर्मप्रारम्भम्, तदपि 'ज्ञानं भारः क्रियां विना' इति सिद्धान्तानुरोधात्

साधना सापेक्षम् । साधनाऽपि कीदृश्येव भवेत्, कर्म तु तत्राऽपि करणीयमेव । तर्हि कथं न स्वे प्रवृत्ति-मार्ग एव प्रवर्तेत ? उक्तं च गीतायाम्—

'स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः ।'

तथा च—

'न कर्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते ।।
कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः ।।'

परं कस्तदाऽभ्युपायः संसारबन्धनिवृत्तेः ? कर्मफलाशात्यागादेवेति ब्रूमः ।

'यस्तु कर्मफलत्यागी स त्यागीत्यभिधीयते ।'

संसारबन्धः खलु पुण्यपापाभ्यां बध्नाति जीवम् । कर्तव्यभावनया कृतं चेन्न तल्लिम्पति फलेन । महदिदं कर्मक्षेत्रं योऽसौ संसारः । परवशता दुःखिनोऽत्रापेक्षन्ते साहाय्यं जनेभ्यः । विहायौदरिकत्वं विस्मृत्य च स्वं योगक्षेमं सुखदुःखद्वन्द्वं च, धिक्कृत्य पापपुण्यचिन्तां विधूय हिताहितभावनां सेव्यन्ते चेत्ते यथोपलब्धसाधनसंभारैः कायेन, वाचा, मनसाऽपि, जितं तेन । लाभालाभचिन्तया कृतं हि कर्म लिम्पति । 'सेवाधर्मः परमगहनो योगिनामप्यगम्यः ।' लोककल्याणाय कृतं कर्म न कर्मत्वेन मन्यते । कर्तव्यभावना तत्र विधेया ।

यस्मिञ्जीवति जीवन्ति बहवः सोऽत्र जीवतु ।
वयांसि किं न कुर्वन्ति चञ्च्वा स्वोदर-पूरणम् ।।

तपोमूलेयं सृष्टिः । उच्चतमं लक्ष्यं कृत्वा कष्टसाधनमेव तपः । आत्मन उन्नतिरपि तपसैव । तदपि कर्मैव । नैतल्लोका अभिजानन्ति—

'किं कर्म किमकर्मेति कवयोऽप्यत्र मोहिताः ।' (गीता)

अयमेव कर्माकर्मविवेको लोकक्षेमहेतुः । लोकाः प्रायो विघ्नाशङ्कया हानिभीताश्च कर्मणो विरमन्ति । परं नैतदुचितम् । कर्तव्य भावनया 'करणीयमेवैतत्करोमि' इति बुद्ध्या कर्मस्वासज्जते जनश्चेन्न तदा साफल्यासाफल्यचिन्ता । कर्मण्येव हि जनस्याधिकारो न फले । दुर्भिक्षाशङ्कया किं कृषको बीजमेव न वपति ? याचका आगमिष्यन्तीति किं भोजनमेव न पच्येत ? कस्तथा कुर्याद् विवेकवान् ? एवमेव फलाशां विहाय कर्तव्यबुद्ध्या कर्म विधेयमेव ।

नानाश्रान्ताय श्रीरस्ति इति रोहित शुश्रुम ।
पापो नृषद्वरो जन इन्द्र इच्चरतः सखा ।।

पुष्पिण्यौ चरतो जंघे भूष्णुरात्मा फलेग्रहिः ।
शेरेऽस्य सर्वे पाप्मानः श्रमेण प्रपथे हताः ॥
चरन् वै मधु विन्दति चरन् स्वादुमुदुम्बरम् ।
सूर्यस्य पश्य श्रेमाणं यो न तन्द्रयते चरन् ॥
चरैवेति चरैवेति । ( ऐ. ब्रा. )

'न ऋते श्रान्तस्य सख्याय देवाः' इति च ।

यदा जीवनरक्षार्थं कर्म करणीयमेव अनेन, तदा कर्मपालनाय कथं न कुर्यात् । कर्तव्यभावनया क्रियमाणे च कर्मणि रुचिरभियोगश्चोत्पद्यते । साधु कृतं हि कर्म फलवद् भवति, अतो न तदुपेक्षया विधेयम् । 'योगः कर्मसु कौशलम् ।'

कर्मजं बुद्धि-युक्ता हि फलं त्यक्त्वा मनीषिणः जन्मबन्धविनिर्मुक्ताः पदं गच्छन्त्यनामयम् ।

के खलु ते महात्मानः कर्मत्यागिनः ? संसारत्यागस्तेषां स्वसुखनिरभिलाषत्वेन । परार्थं तु कर्म कुर्वतो राजानोऽपि मुक्ता अभवन् । कर्मणैव हि प्राञ्चो जनकादयः संसिद्धिमास्थिताः । सम्यक् साधनादेव ते हि साधवः ।

'Handsome is who handsome does.'

इत्युक्तिरप्यत्र भवति ।

कर्मकरणं नाम जीवनस्य धर्मः । प्रवाहो नद्याः, दाहो वह्नेः, गमनं वायोः स्वाभाविकं कर्म, तदेव धर्मः । न खलु धर्मं त्यक्त्वा तेषु नदी-वह्नि-वायुत्वव्यवहारः स्यात् । एवमेव विहाय कर्म कुतो जीवस्य जीवत्वम् ? यथा च कबीरः—

हाड़ बड़ा हरि भजन कर, द्रव्य बड़ा कछु देह ।
अकल बड़ी उपकार कर, जीवन का फल येह ॥

अतो निःसंगभावेन कर्म कुर्वाणेनैवात्र भवितव्यमिति शम् ।

—०—

## त्यजन्त्यसूञ्शर्म च मानिनो वरं
## त्यजन्ति न त्वेकमयाचितव्रतम् ।

(नैषधम् १)

संसारेऽस्मिन्नपारे वैचित्र्याधारे पश्यन्ते श्रूयन्ते च नानाविधानि द्रव्यजातानि। परं न तानि सर्वेषां सुलभानि । विलसन्तोऽपि सुरलोकस्पृहणीयेषु रमणीयेषु भोगेषु वञ्चिता केनाऽपि वस्तुना लालायन्त एव तदर्थम् । पौरुषैकधना पुरुषकारेण तल्लिप्सन्ते । कातरास्तु भमाविलानर्थं तस्मिन् पथि न प्रभवन्तश्चलितुं कुटिलेन मार्गेण तदधिगतये प्रयतन्ते । तत्रापि तस्करता मार्गेण वेत्येतावान् विकल्प । न च स्तेय सुकरम् । न खलु नवनीतहृदया (Chicken hearted fellows) क्षमास्तदाचरितुम् । साहसं तत्रापेक्ष्यते । निग्रह प्राणसंशयश्च संभवत । अत्यर्थं प्रियाश्च प्राणा प्राणिनाम् । सुगमतरमुपाय तेऽन्विष्यन्ति कमप्यन्यम् । स च याचनमेव ।

पर याचना सुकरा तेषां कृते निहतो यैरात्मा, न ये परिगणयन्ति पराभवम्, नानुरुन्धते ये मनस्विताम् । परताडना भर्त्सना च मुहुर्मुहुरनुभवन्तोऽपि लङ्घयन्त्येव देहलीं परेषाम् । पर जागर्ति येषां मन, आत्मनो य आश्रवा, न क्षोदीयसि कर्मणि येषा प्रवृत्ति , न ये सोढु क्षमा परस्य कलुषनिरीक्षणम्, भिनत्ति येषां मर्माणि परिभव, वर नामालिङ्गेयुर्मृत्यु न ते हस्त-प्रसारणे कर्तुं क्षमा । मानधना हि ते । लालसालसमनस एव सततम प्रियासव सकलमपि कर्मोचितमनुचित वा सुखेनानुतिष्ठन्ति ।

इयमुदरदरी दुरन्तपूरा यदि न भवेदभिमानभङ्गभूमि ।
कथमपि न सहे भवादृशानां कुटिलकटाक्षनिरीक्षणं नृपाणाम् ॥

मानिनस्तु न गणयन्ति प्राणान् , नापेक्षन्ते शरीरम् , न स्पृहयन्ति भोगेभ्य , न रोचते तेभ्य पराभवसहकृतो विलास । न ते क्षमा श्वान इवोदरपोषणरता गृहाद् गृहमाहिण्डमाना भर्त्स्यमानास्तर्ज्यमानास्ताड्यमानाश्च रोटिकाखण्डैरितस्ततो लब्धैरुदर पूरयन्त काल यापयितुम् । बन्धूनपि न ते समर्था याचितुम् । पराभवो महांस्तत्र—

वरं वनं व्याघ्रगजादिसेवितं जनेन हीनं बहुकण्टकावृतम् ।
तृणानि शय्या परिधानवल्कलं न बन्धुमध्ये धनहीनजीवितम् ॥

तेषामेव चोक्तिः —

"वयं नो ते विप्राः प्रतिदिवसमासाद्य कृपणान्
धनं ये याचन्ते परिगणितनक्षत्रतिथयः ॥"

महती खल्ववमानना याचकानाम् । रिक्ता हि ते लघिष्ठा जगति—

'रिक्तः सर्वो भवति हि लघुः पूर्णता गौरवाय ।'

तृणः खल्वसाराणां निदर्शनम् ततोऽपि विशेषेणोपेक्षणीयो भवति याचकः ।

तृणाल्लघुतरस्तूलस्तूलादपि च याचकः ।
वायुना किं न नीतोऽसौ यन्न याचेत मामिति ॥

परसम्मुखे हस्तप्रसारणसमकालमेव गलति लज्जा, देहीति कथनेन समं त्यजति धीरता, इच्छया सममेव नमत्यात्मा, स्थैर्येण सहैव व्रजति मानम् । सादरं दौर्गत्येनापि जीवन्नरः परां मुदमनुभवति । अत एव तपस्विनो वनेऽवसन्न नगरेषु । तृणायामन्यन्त सम्राजोऽपि ।

सत्यामप्यनिवार्यताया ते महत एव याचन्ते न कृपणान् । चातको लघीयान् विहगोऽपि स्वातिकणानेवार्थयते । तुल्येषु तु नैव संभवति याचने प्रवृत्तिः । सुदामा सखाऽपि कृष्णस्य गतोऽपि द्वारवतीमनुभूयाऽपि गरीयांसमतिथिसत्कारं नैवायाचत किमपि । स्वभावोऽयं मानिनाम् । न जीवनं मानहीनानां धरणी च तैर्हृणीयते । अधिकाद् याचने नानादरस्य संभव इति तान् कदाचिद् याचेरन्नपि । तथाहि—'याच्ञा मोघा वरमधिगुणे नाधमे लब्धकामा' । अतः साधूक्तं श्रीहर्षेण—

त्यजन्त्यसूञ्शर्म च मानिनो वरं, त्यजन्ति न त्वेकमयाचितव्रतम् ।

—०—

# सतां हि सन्देहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः ।

इह विविधप्राणिमति प्रकृतिविचित्रिते जगति विलोक्यन्तेऽसुमता बहुविधा प्रवृत्तय । शुभा अशुभाश्च तेषा चेष्टा मानसीमवस्था सूचयन्ति संस्कृतामसंस्कृता वा । देहभृता हि क्रिया भावप्रेरिता भवन्ति, भावाश्चान्त करणोद्भवा । अन्त करण च 'मनोबुद्धिरहङ्कारश्चित्त करणमान्तरम्' इत्युक्तदिशा चतुरगात्मकम् । एव भावाना-मुत्थानानन्तर बुद्धया तर्कवितर्काश्रयेण कृत्याकृत्यरूपेण चिन्तन सहजबुद्ध्या या खल्वन्त प्रेरणेत्युच्यते, साध्वसाधु वा बोधित चेतनाबलेन सम्पाद्यते । इत्थ प्रत्येक क्रियमाणे कार्ये मूले मानसो व्यापारो भवत्येव । मनस पूर्वं च कामस्योदयो भवति ।

अनुभूयते लोके यद् भावुका विचलितमानसाश्चास्थिरचिन्तिता भवन्ति । न तेषा सकल्पेषु दृढता विलोक्यते । ते क्षणे किमपि चिन्तयन्ति तदितरच्च विदधति । कर्तुमीहन्ते तावदन्यथैव न तु तथाऽनुतिष्ठन्ति । एतद् खलु भावाना विचाराणा चाशुचित्वेन भवति । सद्भावनाभरितान्तरा सद्बुद्धय सत्कर्माणश्च न जात्वनुचित मृषा वा समाचरन्ति, न कथयन्ति न च तथा चिन्तयन्ति । तेषा मनोवाक्कायकर्मसु न वैषम्य भवति, अतएव ते सत्यचारित्रा सत्यस्य प्रतिमूर्तय एव सिध्यन्ति । न स्पृशत्यपि तेषा हृदय कलुषम्, तदा कथ ते वदेयु कुर्युर्वा तथा, एव शुचिनि मानसे मुकुर इव मुख निखिलमपि भूत वर्तमान भविष्यद् वा लोक-वृत्त प्रतिफलति । इदमेव योगिभि प्रणिधानमुच्यते । न ते केवल तनु वशयन्ति, कर्मेन्द्रियाणि ज्ञानेन्द्रियाणि वा निगृह्णन्ति, तेषा सचालक मनोऽपि वशीकृत्य लक्ष्ये नियोजयन्ति । सत्यपि विकार न प्रभवति तदुत्पथमाश्रयितुम् । अतएव ते सदा प्रार्थयन्ते—

सुषारथिरश्वानिव यन्मनुष्यान्नेनीयतेऽभीशुभिर्वाजिन इव ।
हृत्प्रतिष्ठ यदजिर जविष्ठ तन्मे मन शिवसकल्पमस्तु ॥

मनोव्यापारस्य सकल्प एव निदानम् । अत एवोक्तम्—

कामस्तदग्रे समवर्तताधि मनसो रेत प्रथम यदासीत् ।'

( ऋ ना. सू )

तस्य पावनत्वे बुद्धिरपि न विक्रियते । यथा तिर्यञ्चोऽपि सन्निहितायामापदि सहजयाऽन्तःप्रेरणया (Intution) प्रबोध्यन्ते सावधानाश्च सुरक्षायै प्रयतन्ते । तथैव ते सत्सङ्कल्पा विक्रियमाणं एव मनसि तत्क्षणं निगृह्णन्ति तत् । पारद इव चपलमपि तत् वैराग्येणाभ्यासेन च नियच्छन्ति ।

"विकारहेतौ सति विक्रियन्ते येषां न चेतांसि त एव धीराः ॥"

एवं नियन्त्रितं तथा मानसं सानुशासनं सैनिक इव सदा वशे तिष्ठति, नोच्चरते । तस्य वृत्तय एव कृत्यानां चिन्तितानामौचित्येऽनौचित्ये वा प्रामाण्यमातिष्ठन्ति । तदनुसारिणी हि तेषां क्रिया ।

ये तु नित्यं दुर्भावनाभरितान्तरा दुःसङ्गेन, दुःपरिशीलनेन, दुरभ्यसनेन नियतं कलुषमेव चिन्तयन्ति, तदेव तेषां वाचि समायाति, विदधति च तथैव । परं ततोऽपि दुर्वृत्ता धर्म-कञ्चुकिनो मिथ्याचारिणः, येषां चिन्तितं, कथितं विहितं च सदैव विसंवादितामावहति । विडम्बनामात्रं तेषां जीवनम् ।

'अन्तश्शाक्ता बहिश्शैवाः सभामध्ये च वैष्णवाः ।'

त दम्भिनो विपरीतमेव साधूनां सदाऽनुतिष्ठन्ति । निखिलमपि तेषां जीवनमाडम्बरेण छलेन वैतथ्येन चावृतं भवतीति चालितचेतसस्ते न क्वापि प्रामाण्यमर्हन्ति । कथङ्कारं ते प्रमाणतां गच्छेयुर्येषाम्—

'मनस्यन्यत् वचस्यन्यत् कर्मण्यन्यद् दुरात्मनाम् ।'

तेषां मनः, वाणी, चरितम्, आत्मा, शरीरम् सर्वमपि वञ्चना-मात्रम् । ते परानात्मानञ्च वञ्चयन्ति धूर्ताः ।

अतोऽन्तःकरणं साधूनामेव प्रमाणतां याति येषां मतु—

'मनस्येकं वचस्येकं कर्मण्येकं महात्मनाम् ।'

आत्मा हि तेषां महान् जागरूकः प्रहरी । पदमपि न गन्तु प्रभवति तन्मनः सत्पथाद् विरुद्धम् । अतस्ते कर्तव्येऽकर्तव्ये चात्मानमेवान्तःकरणमेव विमृशन्ति बोधयति च स तान् सदसद् वा सन्मित्रमिव । अतस्तो न तस्य वचने तिष्ठन्ति परिभूयन्ते चान्तर्गतैर्बहिर्गतैश्च शत्रुभिः । परं तस्य निदेशं परिपालयन्तः सन्तो न वञ्च्यन्ते केनाऽपि । एवं च यत्कृतं प्रभवत्यात्मविषय—

"सतां हि सन्देहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः ॥"

---

# भारतीय स्वतन्त्रताया लाभाः

ख्रीष्टस्य विंशतितमा शताब्दी स्वातन्त्र्यस्य शताब्दी व्यपदिश्येत चेद् न काऽप्यतिरञ्जितता। दिशोऽनुदिशम्, कोणात्कोणम्, देशाद्देशं प्रतिवर्षं स्वाधीनता-ज्योतिरपाकुर्वदवाञ्छित दास्यतिमिरं भूमण्डलात्प्रसरतितमाम्। शिथिलाऽद्य नाडी साम्राज्यवादस्य, व्यथते मनो राजतन्त्रस्य, मष्टमूर्जः सामन्तवादस्य, कम्पते पदमुपनिवेश-प्रथायाः, छिद्यते शृङ्खला परतन्त्रतायाः, कालो गतः परदेशविजयस्य। नाधुना तादृशी सरला मूढा वा जनता या सभ्यताशिक्षणव्याजेन धनादिप्रलोभनैर्वा वशीक्रियेत। चिरायोपभुज्य राजतन्त्रं भूयोऽपि स्वभाग्य-निर्णयाधिकारं स्वयमुपभोक्तुमुद्यतो जनोऽधुना। भवति तादृशे व्यतिकरे कथं नाम निसर्ग-भास्वत् भारतमद्यापि वहेत वैदेशिक-कुशासन-धुराम्।

कल्याणी बत गाथेयं लौकिकी प्रतिभाति मे।
एति जीवन्तमानन्दो नरं वर्षशतादपि॥

इति कथनमनुसृत्य शताब्दीकल्पेभ्योऽब्देभ्यो ऽनन्तरं पुनरपि भारतं स्वातन्त्र्य-शशि-किरण-सुखमन्वभवत् ख्रीष्टस्य सप्तचत्वारिंशदधिकैकोनविंशतिशततमे वत्सरे अगस्त-मासस्य पञ्चदशे दिने। परमेतदर्थं कियन्तोऽत्याचारा न सोढा एतद्-देशीयैः, कियानानुभूतो महान् कारागारवासायासः; किं नाहुतं स्वाधीनतामहाहवमखे, प्राणाः, धनम्, सुताः, जननी, प्रेयसी, भगिनी, सर्वस्वम् अन्यविधम्। अत्र आयमति-रोमहर्षणानि कृत्यानि पिशाचोचितानि विदेश्यानामद्यापि यथोऽपि तरलायते, प्राणाऽपि द्रवायते। शतशः पाशबन्धं बद्धाः, पशुघातं हताः, मूलदाहं दग्धाः। चौरा इव, जारा इव, लुण्ठका इव, गोघातिन इव धुष्टाहता इव निर्वासिताः सहस्रशः स्वातन्त्र्यभक्ता जनाः। परं न तेषामात्माहुतिरपरायिता फलाधिगतये। कामं देश-विभाजनेन महार्घ्यं न, स्वाधीनता परं साभिमानमद्योन्नमयन्ति शिरो भारतीयाः। न कोऽपि शिष्टमन्यो ज्ञादनुं प्रभवति तान्दुराग्रहमन्तरा।

पूर्वोक्तप्रकारेण सर्वस्वहोमपणेन लब्धा स्वाधीनतेय मधुरतमा। तस्याः प्रभावेण देशवासिनः स्व-भाग्य-निर्णयाधिकारिणः। सार्वभौमगणतन्त्रतापदमनुभवतीद राष्ट्रम्। यथावसर, यथावकाश, यथायोग्य, यथाक्रम, यथागुण प्रत्येकमपि जन आमूलादुच्चतमपदार्हः। न तत्र कुलविशेषस्य वर्णविशेषस्यैव वा पात्रता। अनर्हताऽद्य गुण योग्यता-देशभक्त्याद्यभावकृता न तु जातिहेतुकी। अधुना राष्ट्र-द्रोहो ऽपराधो न तु राष्ट्रीयता। न सम्प्रति शासन-प्रमाद दर्शदर्शमपि वाचयमत्वमपेक्ष्यते। नेदानीं वेश-भूषाविशेष-धारणेन, स्वद्रोहेण चाटुकारितया च प्रभुप्रसादनमात्र कर्तव्यम्। स्वकीय शासनम्, राष्ट्रम् जनपदो वा। सर्वस्यापि शिरसि समापतितो भारः पुनर्निर्माणस्य। आत्मनैव वयमद्य स्व-विधान-निर्मातार, भाग्य-निर्णायका, अभाव-निराकर्तारश्च। प्रत्येक जनोऽधुना शासनेन रक्षणीयो न केवलमायकरप्रदायकाः।

स्वातन्त्र्याधिगतेरनन्तर क्रान्तिरेव भारते दृश्यते। प्रयतते नव शासन दरिद्रतायाः, बुभुक्षाया, अभावानाम् अकौशलानाम्, अपटुताया, अशिक्षाया, अयोग्यताया, अनर्हताया, अज्ञानस्य, असमानस्य, असमानतायाश्च समूलनाश विनाशाय। नैकोऽपि जनो विपीदन्नन्नकणाय क्षुधाग्निकवलितो भवेदिति प्रतिज्ञानुसार यत कुतोऽपि सुलभखाद्य वस्तुनो देशात्खाद्यपदार्था आनाय्यन्ते। मा तावदवसरवादिना लाभ-लोलुपानां वणिजा स[ं]ग्रहात्कृपकाणा शोषण भूदिति जागरूके शासने न सम्प्रति पूर्ववद् विपीदन्ति दैन्यग्लानाननाः कृषीवला। स्थानात्स्थान प्रति निर्मिता या[न]युगं धूम्रशकटीना, भारवहाना द्विचक्रिकाणा च धावनयोग्या कुट्टिमतला [...] योजिता रथ्याभि प्रायशो ग्रामा नगरै सह। कोणे कोणे ऽधुना चि[...] विद्यालयाः, न्यायालया, रक्षि-संस्थानानि, व्यापार- केन्द्राणि च जन[...] दिशि दिशि महाविद्यालया, विश्वविद्यालया, शिल्प-शिक्षणालया, यन्त्र[...] विज्ञान-दीक्षा-संस्थानानि सस्थाप्यन्ते। नाऽधुना भारतमानाययति धूच[...] यन्त्रारसूचिका-पर्यन्त किमपि वस्तु विदेशेभ्य। स्थाने स्थाने यन्त्र पोत-वा[...] निर्माण-शाला स्थापिता स्थाप्यन्ते यासु लक्षाणि भारतीया आजीविका[...] औद्योगिक-शिक्षा सस्था यथावश्यकमुद्घाट्यन्ते। सचारसाधनानि सुलभो-[...] पन्थानो विकण्टका विधीयन्ते। नारी-जाते शाश्वत-कलक-प्रक्षालनाय [...] वृत्तिरुन्मूल्यते, सहकारि-कोष-स्थापनया मोच्यन्ते कृषकाः कुसीद जी[...] श्रमिका अपि यथावसर नव-नव-नियम-विधानै सरक्षिताः। अपास्ता श्रम[...] खिन्न-कृषीवलै प्रयत्नार्जिता सपद भुञ्जाना भू-स्वामिन। स्वय क्षेत्र-पालो [...] स्व-भूमे। जनकल्याणाय पञ्चवर्षीया योजना आयोजिता। नास्माक सेन[...] वीरताय, पराक्रमणाय च, नारक्षिण प्रजा-दमनायाद्य-स्थापनाय वा। जन-[...]

मनु-तिष्ठन्तीति न कस्याऽप्यविदितचरम् । सर्वोऽयं स्वाधीनतायाः प्रभावो यदद्य प्रति-नगरं, प्रति-ग्रामं, प्रति-चत्वरं च स्वैरमालोच्यते शासक-वर्गो न च प्रभवति कोऽपि तन्मुख-मुद्रणाय । अकारणं शासन आधिकारिकैः कोऽपिसमर्थश्छन्दतो न्यायालये तानभियोक्तुम् । जन-प्रतिनिधिभिः पूरिता संसदस्माकं विधायिकेति साऽस्माभिर्नियम्यते । को नाम लाभो नार्जितः सर्वैः सामसंगतः । आधुनिके युगे महत्तरीयसाम् गणतन्त्र-पद्धतेः क्रियते भारते । लोक-कल्याण-राज्यमिदं विधातुं यतते ऽहर्दिवं शासनम् । एका परं महती हानिस्तदवधि समजनि समाजस्य यद् राष्ट्रस्य दिनादिनं चारित्र्यमपहीयते । स्वातन्त्र्यस्यार्थः स्वेच्छाचारिता निरंकुशत्वं च स्वीकृते जनैः । नाद्य जनो विधानं गणयति, न शासनाद् बिभेति, न धर्मं मन्यते, न सौहार्दे संतिष्ठते, न मानवतामीक्षते, न सौजन्यमाद्रियते, न पापाचारात् जिह्रेति चेष्टितात्, नापत्रपते स्वार्थान् । किं बहुना, स्वयं शासका लंघितमर्यादा जलधय इव समाजमुद्वेलयन्ति । कोऽप्यापन्नाचारो यत्र तेषां न समागतिः । उत्कोचं विना न कोऽप्यधिकृतः प्रार्थनां शृणोति । स्व-सुता, भगिनीं वनितां वा प्रस्थाप्य लोकाः कार्यं साधयन्ति दण्डनीयैस्तस्करैर्दस्युभिर्जंगरैश्च मैत्री । शिथिल दण्डतया तेषां शासनस्य अरक्षितमिदानीं जनस्य जीवनं, धनं मानं वा । मध्यदिने पश्यतो लोकस्य लुण्टाका लुण्टन्ति धनम्, छिन्दन्ति घ्नन्ति वा मानवान्, न परं कश्चिद् वारणस्तेषामुत्पथगामिनाम् । दरिद्रा दरिद्रतरा धनिनश्च धनवत्तरा भवन्ति । मुमूर्षोरपि कौपीनमप्यद्य जिहीर्षन्ति निर्घृणाः कृपणाः पण्यजीविनः । नितरां विलासनिरतास्तृणीकृतात्ममाना वपुरपि विक्रीणन्ति रमण्यः । को नाद्य कर्तव्यच्युतो जनः । एवं कामं भौतिकीं भजन्ति भारतीयाः समृद्धिं स्वातन्त्र्यलाभमूला परमात्मसम्पद् विलीयते सर्वथा । अतो न भारतीयैस्तथा लब्धं यथा हारितम् । प्रजा राजानमनुसरन्तीति शासकाश्चारित्र्यधनाः सन्मार्गप्रवर्तकास्तीक्ष्णदण्डा, अलुब्धाः, अनृशंसाः, अपक्षपातिनः, अलूक्षाः, अस्वैरिणो भवेयुश्चेत् सपदि सम्पद्येत प्रजास्वपि तादृशी सद्वृत्तिरिति स्वातन्त्र्यस्य गरीयान् लाभो भवेत् ।

———

# स्वतन्त्रे भारते संस्कृतस्य स्थानम्

जगति नास्ति कोऽपि देशः समाजो वा यस्य स्वकीया संस्कृतिर्न स्यात्। मानवस्य परिष्कृता मानसिकी दशा संस्कृतिरित्युच्यते। संस्कृतेरौन्नत्यमेव कस्य चिरसमाजस्य विकासावस्थायाः प्रमाणम्। अतएव प्रत्येकं सम्यजगति संस्कृतेर्विकासाय रक्षणाय च भूयान् प्रयत्नोऽनुष्ठीयतेतमाम्। भारतीया-संस्कृतिर्वैदेशिकसंस्कृतेः समक्षं पारतन्त्र्यात् परामुपेक्षामन्वभवत्, तस्या उपोद्बलकं साहित्यं संस्कृत एवेति संस्कृति-समुद्धाराय संस्कृतस्योन्नतिरपरिहार्येति निश्चप्रचम्।

संस्कृतं कदाचिद् भारतस्य लोकभाषा राज्यभाषा चाभूदितीतिहासविदाम्मतम्। गुप्तवंशजानां भूपानां शासन-काले तस्य प्रसाधारणः सौभाग्योदयः समपद्यत। साहित्ये, दर्शने, गणिते, ज्ञाने, विज्ञाने, शिल्पे, कलासु, किंबहुना, नाभूद् कतमदपि क्षेत्रं यत्र तस्योत्कर्षोऽपह्नूयेत।

अतीतायां खीष्टाब्दस्य दशम्यां शताब्द्याम् झंझा-प्रकोपे इव तुरुष्काक्रम-णेऽकाण्ड एवोत्क्षिप्ते, राजकुलेषु तत् प्रतिरोधाकुलेषु, संघ-शक्तेरभावात् प्रतिहते तेषां प्रयत्ने भारतमिद चिराय यवनराज्यपूर्वाह्लतामभजत्। तदाऽपि बहवः प्रगल्भमतयः पण्डित-तल्लजा मन्दिरेषु, सरित्तटेषु, तरुलतागहनेषु गहनेषु सुदूरवर्ति-पर्वत-कन्दरासु चोपहसितसुरपति-मन्दिरासु कालक्षेपं विदधतो ग्रन्थरत्नानि प्राणैषुः। न तु तदा राजपरिषदि जनसंसदि च पुरेव प्रायुज्यत संस्कृतम्। ईदृशे दुर्दशापननिशाकरालितेऽपि काले कैश्चिद् समाश्वास्यत—

तावत्कोकिल विरसान् यापय दिवसान् वनान्तरे निवसन्।
यावन्मिलदलिमालः कोऽपि रसालः समुल्लसति॥

परं हन्त भोः। समाश्वासनमिदं कालापलापमात्रे प्राभवत्। दुर्विलसिताद् दैवस्य मार्जार-मुखाद्भ्रष्टो गृह-कपोतश्चिल्लाया मुखे निपतितः। गोरण्डैर्भेद-दण्डै-र्हिन्दवो यवनाश्च स्वदासता प्रपिता नियोजिताश्च शासन-शकट-धूः-परिवहने। भारतीय-

मेवाध्ययनाय गुरुरं मन्यन्ते। एवा परम्परा तथा परिणमति यथोत्तरोत्तरं संस्कृताध्यायिनां छात्राणां संख्याऽपचीयतेतमाम्।

अधीतेऽपि संस्कृते परमनाता उत्तीर्य एम्. ए. शास्त्रि-प्रभृति-परीक्षा इतो भ्रष्टस्ततो भ्रष्ट इति संस्यानां दशां भजन्ति लोकाः। केचनैव सौभाग्यवशादधिगतोच्चपदाः स्वकीयमेव स्वार्थं साधयन्त उभाभ्यां पाणिभ्यां धनं संगृह्णन्ति; न संस्कृतज्ञानां दुरवस्था, परा प्रोत्क्रिमधुना देवभाषा भवतीति घोषयन्ति च।

अस्तु। किन्नाम स्वातन्त्र्याधिगतेरनन्तरं भारत-सर्वकारेण कृतमिति समीक्षायामेतावदेव युज्यते यदेकः आयोगः संस्कृतज्ञानां तदवस्थाऽवगतये तदुन्नमनमार्गान्वेषणाय च तेन नियुक्तः, येन सर्वेऽप्य यावत् देशस्य कतिपयेषु स्थानेषु परिभ्रम्य पश्चाद् विवरणं प्रदत्तम् केचित् प्रस्तावाश्च प्रस्तुताः। अधुना तदनुसारिणा सर्वकारेणैका समितिनियुज्यते इति श्रूयते। प्राचीन-पद्धत्या संस्कृतं पाठयन्ति संस्थानानि धन साहाय्येन प्रोत्साहयिष्यन्ते। दिल्ली-नगरस्थया साहित्याकादमी-सभया संस्थया प्रतिभानाम्नी षाण्मासिकी पत्रिका प्रकाश्यते यस्या नूतनानां प्रतिभावतां नवीना रचना. प्रकाश्यन्ते। सुरभारती-सेवानुरागिणः प्रवयसो मनीषिण. प्रतिवर्षमर्थ सत्कृत-सम्मान-प्रदानेन सम्मान्यन्ते। परं नैतावदेवालं तदुन्नत्यै। एते तत्त्वकिञ्चित्कराः क्षुद्रतरा अनुपेक्षणीया अपि मार्गा.। केचित्प्रबला उपाया. समाश्रयणीयास्तदुन्नतये सत्यमेवोन्नमयिषिपति संस्कृत चेत् सर्वकारः। ते चाऽनुक्रमं प्रस्तूयन्ते—

१. संस्कृतं मूलादारभ्योच्चकक्षावधि सर्वासु कक्षासु प्रधान-विषयेष्वन्यतमत्वेन निर्धारितं भवेत्तत्र चोत्तीर्णताऽनुपेक्षणीया स्यात्।

२ संस्कृताध्यायिनां पठनोत्तरं साधीयानुपजीविका-प्रबन्धो निरलस विधेयः। तेषां कृते च वेतनसमाराधान्यभाषाविज्ञानां वेतनादेः समकक्षमेव भवेत्। वार्धक्ये च विश्रामवेतनव्यवस्था स्यात्।

३. नवीनपद्धत्या संस्कृतं शिक्षमाणानामल्पीयसी विषये योग्यता सम्पद्यते! तादृशा च सस्यावृद्ध्या विदुषा परिमाणमनुदिनमपचीयमानमनुभूयते। संग्रह-पुस्तकाध्यायिनां तेषां न सामर्थ्यं मूलग्रन्थावबोधे। अत. प्राचीन-परिपाटीमनुसृत्य शिक्षयन्त्यः संस्था. संरक्षणीया सर्वकारेण।

४. नूतनानां कवीनामुत्तमा. कृतयः प्रकाशिता भवेयुः परीक्षादिषु च पाठ्यत्वेन नियोज्येरन्। प्राचीनस्य लुप्यमानस्य वाङ्मयस्य संरक्षणं पुनः प्रकाशनं च विधेयम्।

५. विद्वांसः संस्कृतं व्यवहारयोग्यं वर्तमानयुगीनसकलविषयोपयुक्तग्रन्थसमृद्धं च विधातुं बद्धपरिकरा. प्रयतेरन्। नव-शब्द-निर्माणे, नवतम-विषय-विषयकलेखलेखने च दत्तावधानताऽपेक्ष्यतेतमाम्।

६. संस्कृताध्यापकैः प्राध्यापकैश्च छात्रा. संस्कृताध्ययने सामिनिवेशा विधेयाः ।

७. स्थाने स्थाने प्राचीन-पद्धत्या नवीन-पद्धत्या च संस्कृताध्ययनस्य व्यवस्था स्याद्, प्रोत्साहनीयाश्च प्राक्तन्यः सस्थाः ।

एतैः प्रयत्नैरुपायैश्च साग्रहैरवश्यं लोक-प्रियता तस्य समेधिष्यते । ऐतिहासिक्या दृष्ट्याप्यद्यत्वे तदध्ययनं महीय. । भाषा-विज्ञान-परिशीलने देववाणी दिव्यतामेव साधयति नव नव-ग्रन्थि-समुद्घाटनेन । अतो पल्लवनाद्विरमन्तो वयम् तस्य महत्त्वं संसाध्येत्येवाशास्महे—

भवेद् देववाणी प्रिया लोकवाणी
बुधानां रसानां चिरं राजताम् ।
तथा चोत-कालीन-शालीन-सत्—
साहित्यो-नीतिराशु व्यवस्थाप्यताम् ।
न च स्यादुपेक्षाऽनपेक्षा-कृता तत्र
लोकस्य चायो समीक्षाश्रताम्,
निहत-सर्व-दुःखजा सेवकानां
सदा भारती मानसे भासताम् ॥

---

# भारतीया संस्कृतिः, तस्याः प्रभावश्च

संस्कृतिर्नाम प्राचीनतमेषु भारतीय ग्रन्थेषु संस्कार-शब्द एव लभ्यते यस्यार्थ संशोधनमेव। जन्मना जातो मणिरिव न मानव स्वयमेव सर्व गुण-सम्पन्नो जायते प्रकृति शिक्षा च द्वे कारणे तस्य। प्रकृतौ सामाजिक पैतृकश्च प्रभाव कारणम्। शिक्षया च साधारणान्दोषानपाकृत्य सुविचाराणा संक्रमण कुप्रभावाणा च निराकरण विधीयते। तदैव शाणोल्लिखितो मणिरिव 'निसर्ग-संस्कार विनीत' नर सम्पद्यते। अतएव मनुना द्विजाते संस्कारेणैव द्विजत्व प्रतिपादितम्—

'जन्मना जायते शूद्र संस्काराद् द्विज उच्यते।'

इत्युक्तवता। मानवमात्रस्य मानस्या बौद्धिक्याश्चोन्नते संस्कारा एव कारणम्।

संस्कृतेरर्थो ऽपि संशोधिता संयुक्ता मान्या जनस्य मनोऽवस्थेति। यदा नर कुक्षिम्भरिता विहाय सामाजिकता भजते, परित्यज्यात्मपरता, न लीन सन्नाहार विहारादिषु हिताहित कृत्याकृत्य च विचारयितु क्षम कार्यकलापे, विचारे जीवने, धर्मे, राज्यकृत्ये, कलासु च परिष्कृता रुच धारयति, तदैव स संस्कृत इत्युच्यते। अतएव कस्यापि समाजस्य सर्वोन्नति संस्कृतेरुन्नमन एव निहिता।

अद्यतनी भारतीया संस्कृतिर्मूलत प्राचीनतमाऽपि न स्वरूपत। तस्या आदिरूपमार्य संस्कृतिरेव या खलु काल क्रमेण विविधान्बाह्यान् प्रभावानात्मसाद् विदधती समयानुरूपाणि तत्त्वानि स्वीकुर्वती बलीयस्तरा ऽजायत। आर्य-संस्कृति रासीत् वैदिकी संस्कृतिर्यस्या स्वरूप वेदेषु वेदाङ्गेषु रामायणे, महाभारते, पुराणेषु, दर्शनेषु, तत्कालप्रतिबिम्बेषु राजनीति ग्रन्थेषु स्मृतिषु कलासु किं बहुना सर्वेष्वपि जीवनीयादर्शेषु 'सूत्रे मणि गणा इव' सर्वत्र प्रोतम्। यस्या प्रभावोऽद्यापि तिलेषु तैलमिव, क्षीरे नवनीतमिवास्मासु निहितो लक्ष्यते। काम सा पुराऽपि नासीदेक विधा कदाचित्सूक्ष्मोपासनामयी, अन्यदा च यज्ञ मयी भवन्ती पर न तस्या मूल-तत्त्वा

ग्यभिषन्त । महाभारतादनन्तरं च वैदेशिकेष्वाक्रान्तृषु धर्मायनया समागतेषु तानपि जाह्नवीव सर्पित-सबल-कलुषा नदानिवात्मसाद् विदधती पुष्टतामयासीत् । शक-पार्थिव-कुषाण-पह्लव-प्रभृतयोऽनेका जातयोऽत्रैव लीनाः । तासां संस्कृतीनां कलामया गुणास्तयाऽभ्युपगृह्यन्त परमात्मा तु तासां स्वाभिन्न एव व्यधीयत । प्रमाणं चास्य—ग्रीस-देशस्य राजदूतेन हेलियोडोरस-नाम्ना विदिशायां (भेलसा) स्थापितो गरुडध्वज-नामा स्तम्भः ।

श्रूयन्ते नामेति-हासेषु सौमेरवाणाम् (सुमेरिया) असुर्याणाम्, (असीरिया) बावरुन्यानाम् (बेबिलोनिया) मिश्राणाम् (मिस्र) च प्राचीनतराणां संस्कृतीना-माख्यानानि । क्वाद्य रक्तरक्तविहानां पश्चिमंकाधिपतीनां रोमिलानाम् (रोमन) चिह्नम् ? सर्वेऽपि कालस्य दंष्ट्राक्रकचचर्वितास्तस्योदरसादजायन्त । पर-मार्य-धार्यसंस्कृतिः कामं रूपान्तरेण यातेष्वपि सहस्रशो लक्षाधिकेषु वर्षेषु भागीरथी-वाविरत-प्रवाहा सिन्धुवेलेवालङ्घित-मर्यादा, रवि-प्रभेव भास्वरा, उषा इव विगलित-दोषा शाटीवानल्पगुणा कौमुदीवानुरञ्जित-निखिल-लोका वात्येव देशकोणोपगतरजो-धूसरा कान्तेव कमनीय-रूपा आहिमाद्रेराकुमारि निरन्तरमनुप्राणयति भारतीयान् । अद्यापि पावनतमाः पूज्यतमा मान्यतमाः प्रामाणिकतमा अध्येयतमाश्च वेदा आर्याणाम् । इदानीमपि मजति रसनां पूरयति कर्णौ, संस्करोति हृदयं तेषां गायत्री-मन्त्रः । अधुनाऽपि जन्मनि, चौलकर्मणि, उपनयने, विवाहे, किं बहुना अन्त्येष्ट्यां च श्रुतय एवोच्चार्यन्ते । रामः, कृष्णो, बुद्धो, महावीरः, शङ्करश्च क्व न तैः स्मर्यन्ते सादरं सश्रद्धं च । कं नाह्लादयति रामायणी महाभारतीया वा कथा ? आकृत्या, प्रकृत्या, रीत्या, नीत्या, शिक्षया, दीक्षया, आहारेण, विहारेण, आचारेण, विचारेण च भिन्नेष्वपि कोणाकोणं भारतीयेषु वर्तते प्रतिदेहं भिन्नेष्वपि व्यापकमात्मतत्त्वमिव किमपि सूत्रं यत्तान् सजीव, हार इव, स्तबक इव गुम्फत्येव मिथः । प्रमाणानि चात्र प्रतिवर्षं तीर्थयायिनां जनानां समूहाः । तत्सूत्रं सा संस्कृतिरेव यया वयं स्वमिम वच्छ्वसिमः प्राणिमः सत्क्रियामहे, अनेकेऽप्येकी क्रियामहे । सन्ति तस्याः केचिद् गुणा यैः सदानिता नौरिव कराले भीषणविवर्त्तावर्त-चक्रविकरालेऽपि काल-पारावारे वैदेशिकाक्रमणझञ्झाजर्जरिताऽपि नागाद्विस्मरणीयताम् । तेषु सर्वप्रथमो गुणः —

सहिष्णुता—अस्माकं संस्कृतिः परान् स्वान् प्रति च सत्यपि वैमत्ये गुणग्राहितामेव शिक्षयति । अतएवेश्वरवादिभिः सहानीश्वरवादीनि दर्शनान्यपि सामान्येन प्रामाण्यमभजन् । यथा सांख्य पूर्वमीमांसा च । वैदिकैः सह वेद-विरुद्धानि जैन-बौद्ध-चार्वाकीयानि दर्शनान्यपि यथाऽत्र विकसितानि, तदपि सर्वे जानन्त्येव ।

विश्वस्मिन्नपि विधर्मिणामुपरि कृतानामत्याचाराणां विदितैव वया प्रेमसंदेष्टु-रीशस्यानुयिभिर्मोहमदमतावलम्बिभिश्चानुष्ठितानाम्। परमत्र नास्तिका आस्तिकाश्च वेद-भक्तास्तन्निन्दकाश्च सहैव प्रतिष्ठामलभन्त।

**धर्मस्य प्राधान्यम्**—भारतीया संस्कृति. सर्वेष्वपि जीवन-क्षेत्रेषु धर्मस्यैव प्राधान्यमंगीकरोति। राजनीतावपि सदसत्पक्षौ, युद्धेऽपि सामान्य-धर्मस्य पालनम्, अर्थोपार्जने च तस्य कारणता प्रमाणम्। ज्ञाने विज्ञाने, त्यागे विरागे, दर्शने साहित्ये कलासु च तस्य प्रमुखता। कामोऽप्यत्र धर्माविरुद्ध एवाङ्गीकृतः।

**समन्वय-भावना**—अत्र जगतो मूलशक्तिः सर्ग-रक्षा-विलय-हेतुतया त्रिविधा मता ब्रह्म-विष्णु-महेश-नामभि.। तस्या एव माहात्म्यात् त्रयस्त्रिंशत् तावत्कोटिसंख्याश्च देवाः स्वीकृताः। एतेनैकत्वेऽप्यनेकत्व-प्रसारई अन्यत्र दुर्लभः। मा तावद् विचार-भेदेन कलहोऽभूदिति कृत्वा परस्पर समन्वयात्मिका वृत्तिश्च, पुराणेष्वेकैकस्य देवस्योत्कृष्टत्व-वर्णनेऽयमेव हेतु.। अन्ते च 'तदेवाग्निस्तदादित्यस्तद् वायुस्तदु चन्द्रमा.' इत्युक्त्वा सर्वेषामेकस्मिन् देवे लय.। अतएव बुद्धस्य जैनतीर्थंकरस्यर्षभदेवस्य चावतारेषु गणना।

**आध्यात्मिकता**—भारतीयसंस्कृतेर्जीवन तत्त्वमाध्यात्मिकतैव। आत्मनोऽमरता 'अनेक-जन्म-संसिद्धस्ततो याति परा गतिम्' इत्याशावाद', मोक्षं लक्ष्यीकृत्य शाश्वतानन्दे लय एव मानव-जीवनस्योद्देश्यम्, 'सर्वभूतस्थमात्मान सर्वभूतानि चात्मनि। ईक्षते योग-युक्तात्मा सर्वत्र सम-दर्शनः।' इति सर्व-भूतात्मवाद, 'सर्वे भवन्तु सुखिनः सर्वे सन्तु निरामया.। सर्वे भद्राणि पश्यन्तु मा कश्चिद् दुःख-भाग्भवेत्।' इति विश्व-कल्याण-कामना, वर्णाश्रम-व्यवस्था-द्वारा मानव-जीवितस्य सम्यग्विभाजनम्, संग्राहिका शक्तिश्चेति गुणा इमामनुप्राणयन्ति। 'श्रेयान्स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात्' इति स्वकर्तव्यपालनम्, भोगेऽपि त्यागस्य वृत्ति', सर्वासा विद्याना कलाना च परमात्मनि सायुज्यमेव चरमपुरुषार्थोपदेश इत्येतानि वैशिष्ट्यानि तस्या अमरतायाः कारणम्। अतएवात्मतत्त्वज्ञो युध्यमानोऽपि जये पराजये चानासक्तः 'स्वकर्तव्यम्' इति भावनयैव युध्यते। 'हतो वा प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीम्' इति सर्वथा कल्याणानुबन्धिन्येवाशा।

यतः प्रभृति दृष्टिरिय विशाला त्यक्ता ऽऽर्यैः, विहायाध्यात्मिकता भौतिकता ऽऽलिङ्गिता, सत्यं रूपं धर्मस्य विस्मृत्य बाह्याचार एव तद्बुद्धिः स्थापिता, सर्व-भूतात्मवादिता परित्यज्य स्वेष्वपि परभावना घृणा च स्वीकृता 'कृत मे दक्षिणे हस्ते जयो मे सव्य आहित' इति पुरुषार्थं मतिं हित्वा 'भाग्य फलति सर्वत्र न विद्या न च पौरुषम्'

इति भाग्यवाद उपाहृता ऽऽस्था, तदवध्येव तेषां पतनम्, दौर्गत्यम्, दैन्यम्, पराभूतिः, निर्वीर्यता च। स्व काञ्चनमपहाय काचे प्रणयस्तेषाम्। सिंहोऽद्य शृगालता भजते। 'हवा मनस्विता तेषाम्।' कलहपरता, गेहेशूरता, पात्रेसमितता चाग्रीकृता तैः। अतएव विषीदन्त्यवसीदन्ति च।

विश्वस्मिन् लोके प्रभाव—नाभूवन्नार्याः पुरा गेहेनर्दिन। 'इक्ष्वाकूणामिय पृथ्वी सशैलवनकानना।' 'रथेनानुद्घातस्तिमितगतिना तीर्णजलधि, पुरा सप्तद्वीपां जयति वसुधामप्रतिरथ।' इत्यभूत्तेषां लक्ष्यम्। उदन्वति, आकाशे, महीधरेषु च तेषां रथस्य गतिर्नहि विजघ्ने। दूर सागरेषु तेषां पोता वाणिज्यमकुर्वन्। नासीत्तदवधि-अङ्गवङ्गकलिङ्गेषु सौराष्ट्र-मगधेषु च। तीर्थयात्रां विना यात पुनः संस्कारमर्हति।' इति कूपमण्डूकवाद। प्राभवस्ते ज्ञान विज्ञान च। तेषां सांस्कृतिक-विजयस्य लभ्यन्ते ऽद्यापि यदा कदा प्रमाणानि। सुदूरेऽमरीकायाममरकेश्वरनाम्न शिवलिङ्गस्याधि गति; रूस-देशे, अरबदेशे च प्राक्तिच आर्यचिह्नानि, यवद्वीपे (जावा) स्वर्णद्वीपे (सुमात्रा) वालिद्वीपे (बाली) वरुण-द्वीपे (बोर्नियो) मलयद्वीपे (मलाया) च भारतीयानां रामायण-महाभारतादि-ग्रन्थानां कथा तत्तद्देश्यभाषासु संस्करणानि च सार्थयन्त्येतत्कथनम्। चम्पादेशे (अनाम) भारतीयब्राह्मणस्य कौण्डिन्यस्य राज्य-स्थापनम्, अंकोरवाटस्य मन्दिरम्, काम्बोजेषु च बोरोबदुरस्थाने भव्य देवायतनम् किं साधुवन्ति? स्याम-देशे चाद्यापि वैदिकः प्रभावः। पदाधिकारिणा संस्कृते मंज्ञा, राज्याभिषेकेषु वेद-मन्त्राणा प्रयोग व्यक्तीनां नामानि च सूचयन्ति तत्रार्य संस्कृते-मुंद्राम्। सिंहलद्वीपे भारतीय एव राजकुमार स्वशासन स्थापितवान्। अशोक स्व-पुत्र महेन्द्र कुमारी संघमित्रा च बुद्धादेशं तत्र प्रचारयितुं प्राहिणोत्। तत्र विदुषो बुद्धघोषस्य सिंहल्यां त्रिपिटकानुवाद, कुमारजीवशान्तिरक्षितादीनां बौद्धपण्डितानां चीने, त्रिविष्टपे, कुरु देशे (कोरिया) जयपाणौ (जापान) च प्रवास भारतीयानामार्याणां सांस्कृतिक विजयं दिशन्ति। अरबदेशे हारूँरशीदनामा शासको भारताद् विदुष आनाय्य चरकसंहितायाः अन्य ग्रन्थानां चानुवाद कारयामासेति प्रमाण-यन्ति नामैतिह्यविद। अङ्कास्तैर्भारतादवाधिगता इति तेषां [हिन्दसा]संज्ञा सत्याप-यति। नाय प्रौढिवाद। पश्चिमेन सह पुन सम्पर्के ऽपि नाल्पीयान् प्रभावो भारतस्य तत्र। स्वामी रामतीर्थ स्वामी विवेकानन्दश्च बहुशो गतौ आर्यधर्मसंदेशं च श्रावयामासतु। अद्यापि दृश्यन्ते तत्र महान्तो गृहीततुलसीमाला गीता-पाठपरायणा रामचरित-मानस-परिशीलन-व्यसनिनो जना। एनीबेसेंट नाम्नी पाश्चात्यमहिला ऽभूत् परमा कृष्णे गृहीतभक्ति। भारत नाम स्वय विज्ञाने पृष्ठत कृत पर पश्चिमेषु गमनागमनसाधनानां यानानां प्रभावो ऽद्य वायुयानानां निर्माणे। श्रूयन्ते च भारतग पुस्तकानि जर्मन्यदेशे।

यद्यपि युद्ध-विभीषिकाऽऽकुलं जगत् स्मरदिवातीतं गौरवं भारताभिमुखमेव पश्यति शान्तिकामम् । तस्य पञ्चशीलस्य सिद्धान्तो जनितावासस्तेषां मनःसु । गांधेर्बुद्धस्य चाहिंसोपदेशो भूयः स्पृशति विश्वकर्णशष्कुलीम् । तादृशीयं भारत-संस्कृतिरमृता ऽमरतां संदिशन्ती चिराद् मृतजातस्य श्रेयोऽभिलाषिणी पाश्चात्यसभ्यतानादेन कलुषिता सती भौतिकतया स्पृष्टाऽपि नात्मनः प्राण-तत्त्वं जहाति । व्रजति सफलतामस्याः प्रयत्नो विश्वशान्तौ चेद् भूयोऽपि प्रभविष्यति मनोक्तिरियम्—

"एतद्देश-प्रसूतस्य सकाशादग्रजन्मनः ।
स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वं मानवाः ।।"



# "शिक्षा-पद्धतावपेक्षिताः परिष्काराः"

प्रावर्तत यदवधि भारते' स्वातन्त्र्यान्दोलनम्, यदा चालभत जनवाणी महत्त्वमनुपेक्षणीयम्, नेतृभिः सर्वैरपि भूयो भूयोऽघुष्यत प्रचलितायाः शिक्षापद्धतेः स्वाच्छन्दनीयता। प्रणालीयं वैदेशिकैः शासकैः स्वशासनधुरावहनक्षमं कर्मचारि-समूहं प्रस्तोतुं चिरस्थायिताधिकारस्य सम्पादयितुं प्रवर्तिता केवलं लेखनी-चालनक्षमस्यासन्दीमज्जनपटोर्वर्गस्य निर्माणे समर्था। यथेष्टयापि द्वादशवर्षाणि, सचिरयोपाधिपत्रमुद्गवम् अपहायापुनरागामिनीमवर्जनीयां दृष्टिम्, विलुप्य च सकल-भोगमूलमारोग्यमकालवृद्धाः सन्तोऽपि वृत्तिहेतोर्द्वाराद्द्वारमटन्तोऽकृतार्था शर्म न लभन्ते जनाः। नेयं राष्ट्रीय-चरित्रमुद्गच्छति, न देशभक्तिं शिक्षयति, नात्मनिर्भरतां पाठयति, न कर्मठतां ग्राहयति, नाजीविकाक्षमत्वं सम्पादयति नात्मगौरवं जनयति, न मनोबलमुत्पादयति, न धीरतां धारयति। अपि तु शिक्षिता अपि न प्रभवन्त्युदरभरणाय, किं कर्तव्यविमूढा अपारयन्तो विवस्त्राय नदीषु, भृगुषु धूम्रयानटीणयेषु च निपात्यात्मानं घ्नन्ति। तादृशे व्यतिकरेऽन्न हस्ते हस्तं निधाय स्थित्वा। महतीयं राष्ट्रहानिरवरोद्धव्या परिवर्तनेन शिक्षापद्धतेः।

परमुपशान्तोऽयं घोषः स्वतन्त्रताधिगत्या सह। अधुनाऽपि त एव नेतारः, ता एव भारतीया प्रजा, सैव च शिक्षा प्रणाली, सर्वमपि चक्रं यथापूर्वं भ्रामति, परि-वर्तिता केवलं शासका तेषां विचाराश्च। ये नेतृगणाः पूर्वमेतां प्रणालीमहर्निशमा-क्रोशन्तो नाश्राम्यन्, तस्याः परिवर्तनीयत्वं डिण्डिमघोषमघूघुषन्, त एवाद्य देशस्य शासनसूत्रधारा अभूतेऽपि दीर्घकाले त्रयोदशवर्षाणां स्वातन्त्र्यप्राप्त्युत्तरं यथावस्थामेव स्थितिमनुरुन्धते। केवलं यदाकदा यथावसरं प्रवृत्तेषु समारोहेषु, पानगोष्ठीषु सम्मेलनेषु घोषहृतमधुरतमरसगुलिकासरमेकण्ठाः कृतज्ञताप्रकाशनाय शिक्षापद्धतेः परिवर्तनीयतामेवारटितमिवारटन्ति, करतल-ध्वनिना सहैव च समाप्यते तेषामिति-कर्तव्यता। स्थापितेषु विविधेष्वायोगेषु, नियोजितासु च बह्वीषु समितिषु, प्रकाशितेषु तन्मतेषु—

भाष्यन्नहर्निशं मे वृषभो मुञ्चति न संसयन्त्रभुवम्।

सत्यं नाम जटिलायते वर्तमाना परीक्षा-प्रणाली, यथायथोपचीयते विषयभारः पुस्तकसंभारश्च पाठ्यक्रमे तथातथाऽनुदिनमपचीयते शिक्षार्थिनां व्युत्पत्तिः। विरला एवाधुना विद्यार्थिनः। प्राधान्यं खलूपाधिपत्रार्थिनां यथाकथंचित्परीक्षातरणार्थिनामुत्कोचेन देहार्पणेन वा परीक्षकानुपलोभ्य परीक्षाकार्यालयकर्मचारिणो वा वशीकृत्य परीक्षास्थलेषु वा पुस्तकादिसाहाय्यमुपयुज्योद्देश्यसाधकानाम्। शिक्षणालयेषु छात्रेषु छात्रासु शिक्षकेषु च प्रसृतोऽनाचार इमामतितमां कलुषयति।

परीक्षासमितिषु च व्याप्तो महान् भ्रष्टाचारो येन छात्रहितान्युपेक्ष्य पाठ्यक्रमेषु स्वार्थवशेन न पुस्तकानां साधु निर्वाचनं भवति। प्रकाशका धनबलेन न कश्चित् सदस्यं न विलोभयन्ति। अविचार्य विद्यार्थिनां बुद्धिवैभवं गर्दभ इव दुर्वहो भारः पुस्तकानामारोप्यते छात्रस्कन्धे यं नामी वोढुं क्षमाः। तदुपरि महाघता कराला पिशाचीव तरसरक्षकाणां कोष्ठेषु रुधिरं पिबन्ती न तृप्यति यन्न पारयन्ते ते शिशूनां सञ्चिकामासिककुल्कादिव्ययं निर्वोढुम्। सुतरां व्यवसाध्यो ऽद्यतनः शिक्षणप्रयासो बालानाम्। परं किं फलं तस्य ? छात्रा अध्यापकाश्च दलबन्धव्यस्तमतयः शान्ततयाभीप्सितां दीक्षणिकीं स्थितिं दूषयन्ति। अनुदिनं प्रतिनगरं प्रतिसंस्थं च श्रूयन्तेऽनुशासनविरहितानां छात्राणामकाण्डताण्डवितानि तेषां चरममुच्छृङ्खलत्वं प्रमाणयन्ति। धार्मिकशिक्षायाः पाठ्यक्रमेऽनिवेशादुदास्यते चरित्रनिर्माणं प्रति। अस्या एव शिक्षापद्धतेः प्रभावात्कुमारीष्वपि शालीनता विलीयते, चारित्रं च लुप्यते। यासु संस्थासु प्रदीयते छात्रेभ्यो धार्मिकी शिक्षा, प्रायस्तत्र सम्प्रदायविशेषमनुबध्नन्तीति परमतानुयायिनः प्रति द्वेषभावना सकीर्णता च शिक्ष्यते। नौदार्य-भावना विद्यार्थिनां हृदयेषु पूर्यते इति धार्मिककलहस्य निदानमेव प्रसूयते। शिक्षणसंस्थासु चानभिज्ञातरचयः शिक्षकाः शिक्षणाय नियुज्यन्ते।

उद्घोषयति नेतृवर्गः सदैव साम्प्रतिकच्छात्रवर्गो राष्ट्रस्य भावी कर्णधार इति परं न चेष्टते तदनुसारम्। शिक्षैव देशोन्नतेर्मूलमिति जानन्नपि न किमपि करोतीति कीदृशी विडम्बना ? शिक्षण-क्रमे विदेश्यभाषाया अनिवार्यता छात्रमतेरनायस्यको गरीयान् भार इति नाश्रयाः कर्णधारा विभावयन्ति। तस्या माध्यमेनैवोच्चशिक्षाप्रदानात् प्रतिदिनं योग्यता हीयत एव। केवलं सैद्धान्तिकी शिक्षाऽत्र प्रदीयते न प्रायोगिकीति हेतोर्बहवः शिक्षिता न प्रभवन्ति जीवनमहासमरे स्थातुम्। औद्योगिक शिक्षाप्रदाननाम्ना मौलिकशिक्षणक्रमे (Basic Education) निष्प्रयोजनो भूयानर्थव्ययो विधीयते सर्वकारेण। प्रकाराय स गृहीतशिक्षणो न वस्तुतः किमपि कर्तुम्। अतो यदि सत्यमपेक्ष्यते देशहितम् अद्यतन-समस्यानां समाधानं च तर्हि विधेयास्तत्रापोऽसिसिक्षिता परिष्काराः।

१. शिक्षा स्वल्पव्ययसाध्याऽर्थकरी सर्वसुलभा च कार्या।

२. निष्पक्षतयाऽध्यापने सरुचिमनसो जना उपयुक्तवेतनसभाजिता नियोज्याः।

३. विषयभारापेक्षया योग्यता-संपादनप्रकार एव विशेषेणावधेयः।

४. शिक्षाया माध्यमं छात्राणां मातृभाषैव स्यात्, आंग्लभाषा सहकारितयैव पाठ्या।

५. छात्राणां चरित्रनिर्माणायोच्छृंखलता-विनाशाय च धार्मिकी शिक्षा पाठ्यक्रमेऽवश्यं समावेश्या, परं सोदारभावनाभरितैः पुस्तकैरेव देया यथा न साम्प्रदायिकी विरोधिता पदं लभेत।

६. शिल्पादिशिक्षाया व्यवस्था प्रत्येकं छात्रस्य सुलभा स्यात्। कलाविभागे (Arts faculty) स्तोका एव छात्रा. स्थानं लभेरन्।

७. आत्मनिर्भरता भृतिमात्रैकानुपजीविता च छात्रहृदयेषु संक्रामणीया।

एते परिष्कारा द्रुतमेव प्रयोगाहिताः स्युः। अक्षमा इमे कालहरणस्य। अन्यथा देशोन्नते. सर्वेऽपि प्रयत्ना वन्ध्या एव स्युरिति निर्विवादम्।



अभवत्या जनभाषा । शिक्षणे, शासने, व्यापारे, प्रचारे मिथ संविहारे च तयाऽलभत पदमाङ्गलभाषा भारते यथा न केवल वाणी मानसमपि तन्मय भारतीयाना जातम् । न केवल कार्यालयेषु, स्वैर-गोष्ठीषु, विद्यालयेषु, गृहेषु च सैव नवशिक्षितमुखेऽश्रूयत । संस्कृतादि-प्राच्यभाषाविदोऽनधीयतानामभ्यगच्छन् परमुपेक्षापदम् । अहस्यत तादृशो जन प्राग्नगौर्विद्भि पशुगृहान्मुक्त आफीकेयो जन्तुरिव । न तद्विधाना कृतेऽशिष्यत कतमदपि देशमाजीविकार्थं । ते ऽभ्राम्यन् पण्डिता अप्यपण्डिता, शिक्षिता अप्यशिक्षिता, संस्कृता अप्यसंस्कृता, सभ्या अप्यसभ्या, अग्राम्या अपि ग्राम्या, अबर्बरा अपि बर्बरा अविपुरुषा अपि विपुरुषा । किं बहुना, नाऽभूत् कतमदपि तदनादरपद यत्तेभ्यो नादीयत । सर्वतो मणिबन्धघटितपटीयन्त्राणा पश्चात्तापिनामिव चिरगलबन्धनिगडित-ग्रीवाणा मर्मरायितोपानत्कानद्धपादाना परलोकदर्शनमिवान्तरयितु गुरूष्णीषका (हैट)-च्छन्नमूर्ध्ना वस्त्राडम्बराऽऽडम्बरितवेषधारिणामुद्धूमधूम्रवर्तिका-व्यग्र-मुखम्लेच्छायित-वचसा लेखनीधर्षकाणामेव परम्परा ऽवलोक्यत जनै । तादृशानामेव लेखनीयन्त्राणा निर्माणस्थलान्यवर्तन्त विद्यालया । अप्रगल्भ आङ्गल-भाषाया कुशाग्रशेमुषीकोऽपि मूषिक इवाधिगत्यापि सकलग्रन्थ न तात्पर्यं ग्रहीतुमशक्नुवन. । निर्दय व्ययितेऽपि पुष्कले धने क्षपिते च नेत्रज्योतिषि, श्रीते चानपगामिनि गदशते न पाण्डित्यमवाप तत्र छात्रगण । प्रतिवर्षं चानुत्तीर्णास्वेधमाना छात्रवर्गस्य सख्या द्रौपदी शाटीव दुश्शासना-कृष्टा नाऽपाचीयत । उच्चशिक्षाभिलाषिणा प्रभूताना विद्यार्थिना गरीयसी सख्या नाकल्पत स्वमनोरथ सफलयितुम् । सर्वोऽप्यय दोष आङ्गलभाषामाध्यमस्य येन सुबोधोऽपि विषयो दुर्बोधो विधीयते ।

स्वतन्त्रे भारतेऽपि ह्रस्यमानमाङ्गलभाषाज्ञानस्तर प्रतिवर्षमेधमाना च तत्तद्विषये ऽनुत्तीर्णाना छात्राणा सख्या विलोक्य निदानान्वेषिणा विपश्चिताभासन् विविधा विप्रतिपत्तय । तत्रानेकेषा विदुषा मतेन सुकुमारमतीनाविद्यार्थिना मस्तिष्के बलात् पारेसमुद्र निवसता विदेश्याना भाषाया दुर्वहभारारोपण तेषा विकासपथे रोधशिला (Stumbling stone) एवेति तस्या अनिवार्यता परिहरणीया शिक्षा-क्रमात् । विज्ञानादीनपि विषयान् यथा ते मातृ भाषाया पाठिता साधु बुद्ध्यन्त न तथा-ऽऽङ्गलभाषायाम् । ये केचन तस्या विशेषेण प्रगल्भा स रुचयो वा, काम तेऽमुमधीयेरन् । बहव शिक्षाविदोऽस्य विचारस्य समर्थकाः ।

इतरे तु बाल्यादेवाङ्गलगिरमधीयाना ब्रुवाणा सर्वत्रतयैव व्यवहरन्तश्च सहसा न कल्पन्ते ता विना विचारयितु कस्य जातस्य यथापूर्व-भावितम् । तेषा विचारे परित्यक्ताङ्गलवाणीप्रयोगा भारतीया भवन्ति रसातले मक्षु निमक्ष्यन्तीति कृत्वा सर्वत्रैव तस्या यथासाक्षुण्णतयैव भवितव्यम् । न ते स्वप्नेऽपि विचारयन्ति यद्

स्वतन्त्रराष्ट्रस्य कलङ्क हेतुरेव वैदेशिक्या भाषाया प्रधानता। एतन्मानस दास्य न भारतस्य गौरवाय ते तर्कयन्ति च विज्ञानप्रौद्योगादिविषयबन्धवो ग्रन्था आङ्गलभाषाया-मेव। तत्तच्छास्त्र शासन तद्वैषयिक पारिभाषिक शब्दबोधमन्तरा न सम्भवतीति तदध्ययनायाङ्गलभाषावैदुष्यमनिवार्यमेवेति। न शिक्षापद्धतेस्तस्या आवश्यकत्व परिहेयम्। पर प्रौढिवादोऽय नाम तपाम्। रूसजयपाण्यादिदेशा स्वभाषाया विज्ञानादि-नव-नव-विषय-शिक्षा प्रदायासाधारणी कर्तुं प्रभवन्ति समुन्नति चेत् कथ तर्हि भारतस्य स्वभाषाया तेषा शिक्षणेनोन्नति सम्भाव्यते ?

स्वीकृत चैतद् भारत-सर्वकारेण शनै शनै पाठ्यक्रमेऽनिवार्यतयाऽऽङ्गलभाषा-ध्यापनस्य नियममपाकर्तुम्। बहुषु प्रदेशेषु च शिक्षाविभागेन स्वीकृता सा वैकल्पिक-विषयतया ऽध्यापयितुम्। ओष्टानुयायिन स्वमातृ-भाषा मन्यमानास्तस्या अध्ययन मूलादेव विदधति। परमद्यापि बहु शिष्यत एतदर्थं कर्तुम्। विदुषा कर्तव्य तत्तद्-विषयकग्रन्थान् स्वमातृभाषाया निर्माय लोकभाषासूत्रपुस्तकाभाव निराकर्तुम्। सर्वकारेण च विद्वासस्तद्विषयग्रन्थ रचनार्थं प्रोत्साहनीया। छात्रा अपि स्वभाषा-माध्यमेनाध्येतु विषयान् मरुचि प्रवर्तेरन्।

ये केऽपि विमल मतय प्रभवन्त्यवगाढुमाङ्गलभाषा ते काम पठन्तु ताम्। अन्ता-राष्ट्रीय-व्यवहारे तत्प्रयोगस्य सुप्रचलत्वात्, तस्या ज्ञानमपेक्ष्यत एव। पर-मैच्छिकविषयत्वेनैव पाठ्यक्रमे सा निर्धार्येत। अद्यापि विशेषज्ञानापेक्षिण फ्रेञ्च-जर्मनादि यथारुचि शिक्षन्त एव। राजनयिक-दृष्ट्या महत्त्वे विद्यमाने तज्ज्ञास्तदाऽपि सविशेष मान्या भविष्यन्ति, तत्र तेषा श्रमो निष्प्रयोजनो भविष्यतीति न शङ्कितव्यम्।

एव शिक्षाप्रसारस्य जनकल्याणस्य च धियाऽऽङ्गलभाषाया प्राधान्य शिक्षा-पद्धतेर्निराकरणीयमेवेति शम्।

—•—

# मानो हि महतां धनम्

जगति जीवता प्राणिना कृते भोजनादिमाधनान्तरवन्मानोऽपि नितरामनुपेक्षणीय । दुर्गतोऽपि, वयसा हीनोऽपि, विद्यादि-विकलोऽपि जनोऽनुभवति किमप्यात्मगौरवम् । तस्मिन्हन्यमाने क्षुभ्यति स, शक्तश्चेत् प्रतिकरोति कमप्यन्यमुपाय वा श्रयते ।

मानो नाम धनादि मूल । स तु महकार एव न सदा निन्दितो महात्मभि । पर मानस्यायमेवाभिप्रायो यन्न स्व नयेद् दैन्यम् । मनस उच्चता, परत पराजयस्यास्वीकृति । किमप्ययाचनम्, प्रकार्पण्यम्, अनादरास्पुपलम्भ , अयशसोऽभाजनता, परेषा चाटुकारिताया अभाव , दैन्येऽपि निकृष्टवृत्तेरनालम्बनम्, तिरस्कार-मिश्रस्य महतोऽपि वैभवस्य त्याग , अनादरस्यामर्षणम् इत्येते गुणा मानस्य लक्षणानि । विनय शीलोऽपि, निराडम्बरोऽपि सुशीलोऽपि, वयसा, कुलेन, पदेन, धनेन, व्यवसायेन वा हीनोऽपि शक्नोति भवितु मानी । मनस्विता न केवल सद्वृत्तनिष्ठा । दुर्वृत्ता अपि, कलक भाजनान्यपि पापाचारा अपि भवन्ति मनस्विन । रावणो दुर्योधनश्चास्य निदर्शने । मन्त्रिभिर्भ्रात्रा पत्न्या च बोध्यमानोऽपि न रावण सीता मुमोच न च रामेण मह सदधे । तस्योक्तिरिय प्रमाणम्—

'जानामि सीता धरणी प्रसूता जानामि राम मधुसूदनोऽयम् ।
मह हि जाने स्वयमस्य वध्यस्तेनाऽऽहृता मे जनकात्मजेयम् ॥
न कामान् नैव च क्रोधात् त्यजामि जनकात्मजाम् ॥'
( रा० यु० का० )

धार्तराष्ट्रो दुर्योधनोऽपि 'अपि नाम भवेन्मृत्युर्न च हन्ता वृकोदर' । इत्येव सदाऽभिलाष । कृष्णेन सन्धये सम्बोध्यमानोऽपि 'सूच्यग्र नैव दास्यामि विना युद्धेन केशव' इत्येवोदतीतरत् ।

न मानिन कदाचित्परोपजीविनो भवन्ति, पुरुषकारावलम्बिनस्ते । मानिषु प्रतिष्ठावान् सिंह —

'मदसिक्तमुखैर्मृगाधिप करिभिर्वर्तयते स्वय हतै ।'

न जातुचित्स क्षुधा-क्षामोऽपि घासमत्ति परहतान्पशून् वा भक्षयति ।

मानिना स्वभावोऽपि लोकोत्तर । न ते जात्वपि मानविरुद्ध स्वर्गमपि कामयन्ते ।

अत काकाना राजहसाना च प्रकृति स्वतो विभिद्यते—

कृ ङ्खोलूक नख प्रपात विगलत्पक्षा अपि स्वाम्ययम्
ये नोऽश्नन्ति पुरीष पुष्ट-वपुषस्ते केचिदन्ये द्विजाः ।
ये तु स्वर्गतरङ्गिणी बिसलता सद्लेप सर्वाघिता
गाग तो स्मपि त्यजन्ति मलिन ते राजहसा वयम् ॥

(भा० वि०)

अनादरस्तेषा कृते मृत्योरपि दु खावह । 'सभावितस्य चाकीर्तिर्मरणादति रिच्यते ।' सभावना सा सुकमण सुपदाच्च जाता । नातस्तेऽनुचितमारभन्त ।

"वय नो ते विप्रा प्रति दिवसमासाद्य कृपणान्
धन ये याचन्ते परिगणित-नक्षत्र तिथय ॥

अतएव 'सेवा श्ववृत्तिराख्याता ।' श्वा हि लागूल चालनम् अधश्चरणाव पातनुदरप्रदर्शन च करोति । दासवृत्तावपि जनस्तथैवाचरति । स्वामिन प्रसा दाय चाटुकारिता कापण्य याचना चानुतिष्ठति । पर पतनमिदमात्मन । बन्धुहि श्रेष्ठ सर्वेषामात्मा । न तस्यावपातन कदापि विधेयम् । प्रतापोद्भावितयवन हृत्ताप प्रतापोऽवृणाल् कानन वास न तु यवनेश्वराधिपत्यम् । रण दुर्मदो हम्मीरश्चा कामयत राज्य भ्रश, कुलनाश च, न पर तत्याज शरणागत यवनम् । मानिन सदोत्कर्षायैव यतन्ते—

कुसुम स्तबकस्येव द्वे वृत्ती तु मनस्विन ।
मूर्ध्नि वा सर्व लोकस्य विशीर्येत वनेऽथवा ॥

शाङ्गु तले धीवरस्य रक्षा पुरुषा प्रति स्वाजीविका निन्दत उक्ति स्वाभिमान पूर्णा—

सहज किल यत विनिन्दित न हि तत् कर्म विवर्जनीयकम् ।
पशु मारण कर्म दारुणोऽनुकम्पा मृदुकोऽपि श्रोत्रिय ॥

वस्तुतो नास्ति जीवन मान विना मानवानाम् । लघीयस्त्व मान विना । मनस्विनो महान्त इत्युच्यन्ते । मानो हि महता धनम् । अतो न मानो जीवन-समये उप्युपेक्षणीय ।

—•—

# मृत्युः

अहो, कीदृश भीषणं नाम यच्छ्रुत्वैव महतामपि भटशिरोमणीना हृदय कम्पते, विपज्झञ्झावातेष्वपि निष्कम्प धैर्यं म्रियमाणमपि विगलिततमाम्, चलति साहस सहसा सङ्कटाकूपारपारदृश्वनाम्। दुर्लंघ्यतैवास्य तादृशी यन्निदाघशोषितकराल-करैरवगणयमुशुण्डिकामण्डितस्कन्धं, भाङ्कारध्वनिसहभाररवान्वितगोलकापातनिपातितदुर्गघात-घातघ्नीवलवृंहितं सैन्यदलैरावेष्टितादपि भवनाम्नानोपधिजालजटिलीकृतादपि शरीरात् पञ्जरादिव कपोत मार्जारो झटिति धरति जीव बलीयसामपि मृत्यु ।

नाय स्निह्यति धनिकेषु, न दयते दीने, न कातर कृपणे, न बिह्वेति स्त्रैणे, न रज्यते रूपे, नासज्जते यौवने, न रक्षति परिचयम्। सर्वान् यथावसर वशीकरोति। दुर्गतोऽपि, रोगातुरोऽपि, व्याधिग्रस्तोऽपि जीवो नाभिलषति मरणम्, मार्गयते मोक्ष तस्मात्। पर दुर्निवार प्रहारस्तस्य। देवा अपि नाम युगक्षये, भवन्ति तस्याखिलक्ष्या । तथाभूतोऽय दुश्चिकित्स्यो व्याधि । सृष्टेरारम्भादेवानुल्लङ्घितशासनोऽय मर्त्यैरमर्त्यैश्च, अणुभिर्महद्भिश्च, बलिभिर्निर्बलैश्च, सुरूपैः कुरूपैश्च, धनिभिर्निर्धनैश्च।

क्व न तस्य वर्णनम् ? वेदेषु, ब्राह्मणेषु, पुराणेषु, काव्येषु, दर्शने विज्ञाने च ।

कथ तावन्मृत्यु ? अत्र गोपथब्राह्मणम्—'स समुद्रादमुच्यत, स मुच्युरभवत्त वा एत मुच्यु सन्त मृत्युरित्याचक्षते परोक्षेण ।'

शतपथे च—'एष वै मृत्युर्यत्संवत्सर । एष हि मर्त्यानामहोरात्राभ्यामायु क्षिणोत्यथ म्रियते ।' (श १०।४।३।१)

अन्यत्र सूर्य एव मृत्युरिति कथित । क्वचिदशनाया (क्षुधा) मृत्युत्वेन प्रतिपादिता। मैत्रायण्या 'मृत्युस्तम' इत्युक्तम्। यजुष्षु च मृत्युर्जीवित च प्रजापते-श्छायात्वेन वर्णिते—

'यस्य च्छाया अमृत यस्य मृत्यु ।'

एव मृत्युस्तावज्जीवितस्यैवापर पक्ष । कथ तर्हि तस्माद् भीति ? अज्ञानमूलेति ब्रूम ।

न हि तत्त्वज्ञास्तस्माद् भयमश्नुवन्ति। तेषामेव कथनम्—

'मृत्योर्बिभेषि किं बाल ? न स भीत विमुञ्चति ।'

'अद्य वाऽब्दशतान्ते वा मृत्युर्वै प्राणिना ध्रुवः ।।'

गीतायां तु मृत्युर्जीवस्य दशाविशेष एवोक्तः ।

'जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च ।'

यथार्थज्ञास्तस्यावश्यंभाविता विज्ञाय न मुह्यन्ति, अविवेकिनस्तु विस्मरन्त्येवैतत्—

'अहन्यहनि भूतानि गच्छन्तीह यमालयम् । शेषा जीवितुमिच्छन्ति, किमाश्चर्यमतः परम् ॥

रण-सुभटा अपि मृत्युञ्जयिन एव ये न तस्माद् बिभ्यति स्वयं च तमामन्त्रयन्ति ।

य इह समरमपास्य नास्ति मृत्योर्भयमिति युक्तमितोऽन्यतः प्रयातुम् ।
अथ मरणमवश्यमेव जन्तोः किमिति मुधा मलिनं यशः कुरुध्वे ॥ (वे. सं ३)'

महाकवि कालिदासस्तु मरणं प्रकृतिं जीवं च विकृतिं मन्यते—

'मरणं प्रकृतिः शरीरिणां विकृतिर्जीवनमुच्यते बुधैः ॥'

परमपुरुषस्य भक्ता अपि न मृत्युं भयदायकं मन्यन्ते, प्रियस्य परब्रह्मणो लम्भकतया स्वागत योग्य एव सः । भक्तः कबीरः कथयति—

जा मरने से जग डरे मेरे मन आनन्द ।
कब मरिहौं कब पाइहौं पूरन परमानन्द ॥

लोक भाषाया' प्रसिद्धा कवयित्री महादेवी मृत्युं सुन्दरीत्वेन वर्णयति—

'हे सृष्टि-प्रलय के आलिंगन, सीमा असीम के मूक मिलन,
कहता है तुमको कौन घोर, तू चिर रहस्यमयि कोमलतर ॥
तेरे हित जलते दीप-प्राण, खिलते प्रसून, हंसते विहान ।
श्यामांगिनि, तेरे कौतुक को बनता जग मिट मिट सुन्दरतर ॥
प्रिय प्रेयसि तेरा लास्य अमर ॥"

मृत्योरनुभूतिरपि नैकविधा । केचिदतितमां पीडामनुभवन्ति मरणकाले । अपरे तु सुखेनैव तमालिंगन्ति । अतिशीतलस्तस्यानुभवो वर्णितः कैरपि । परं निश्चितमेतद् यद् भावनाकृतैव तस्य भीषणता ।

वस्तुतो जीवनसंग्रामस्य विश्राम-दशैव मृत्युरिति मन्यते । तदाहि जीवो द्वन्द्वातीतः सकलबन्धन-मुक्तश्च सम्पद्यते । उक्तं च तावल्लाङ्गफेलोवर्यकविना—

"All was ended now, the hope, and the fear and the sorrow; All the aching of heart, the restless unsatisfied longing. All the dull deep pain and constant anguish of patience." (longfellow)

(मृत्यौ सति सकला आशयो भ्रायमदच, मार्गा अनुभूतयश्च विलीयन्ते)

अन्यः कविः सिनेका (Seneca) संज्ञः प्रकृति-विहितमिति मृत्वा मृत्युमभिनन्दयेव । तथाहि—

"What is death but a ceasing to be what we were before; We are kindled and put out, we die daily; Nature that begot us, expels us, and a better and a safer place is provided for us."

(अस्माकं सत्ताया लय एव मृत्युः, प्रकृतिर्नयति हन्ति चास्मान्प्रतिपादयति च सुरक्षिततरं स्थानान्तरमस्मभ्यम् ।)

अनेन प्रकारेण न केवलं भारतीयाः, परं पाश्चात्या अपि विचारकाः स्वाभाविकमवश्यंभावि च मरणं मन्यमाना न तस्माद् भयमुचितं मन्यते । अज्ञानकृतं हि तद् भयम् । अन्यथा—

देहिनोऽस्मिन्यथा देहे कौमारं यौवनं जरा ।
तथा देहान्तर-प्राप्तिर्धीरस्तत्र न मुह्यति ॥

इति गीतानुसारेण दशापरिणामाभिन्नादस्मात्कथं भीतिः । अतः सत्साहमं स्वागतयोग्य एवासाविति विभावनीयम् ।

—o—

# अहिंसाया जीवनोपयिकत्वम्

"भगवन् मुनिरयं विश्वामित्रोऽद्यापि द्रुह्यति भवते। कथं भवान् क्षाम्यति तम्।"

"देवि, मान्यथा विभावनीयम्। महाप्रभावोऽयं राजर्षिः स्वतपसो महिम्ना जातोऽधुना ब्रह्मर्षिपदार्हः। केवलं क्रोध एव तस्य परिपन्थी। निष्क्रोधश्चेत्स्यात्, न प्रभवेत् कोऽपि तमतिशेतुम्। ब्राह्मणानां पुनः 'क्षमैव परमो धर्मः। हिंसाभावः प्रतिहिंसामेव प्रसूते।'

इत्यमासीत्संवादः कुट्यां महर्षेर्वसिष्ठस्याऽरुन्धत्याश्च। बहिरतिष्ठच्च कृपाण-पाणिः कौशिकः प्रतिशोध-भावनया विकलान्तरः प्रतीक्षमाणो महर्षेरेकाकिताम्। परं श्रुत्वैतानि शान्त-स्तिमित-निर्यासाणि वचनानि तितिक्षा-सरसानि विश्वामित्रः पश्चात्ताप-संतप्त-चेताः सहसा प्रविश्य-न्तमुनेर्वसिष्ठस्य चरणयोः पपात। महर्षि-मैत्रावरुणस्तु निरीक्ष्य तं प्रेम्णा 'आगच्छ, स्वागतं ब्रह्मर्षे' इति कथयंस्तमालिलिंग। प्रथमासीदहिंसाया विजयः। हिंसा प्रतिहिंसा च मानवता-विरुद्धे न कदापि मैत्रीं जनयितुं क्षमे।

हृदयमिदं भावानामाधिष्ठानम्। तस्य वृत्तय एव दैवमासुरं च धर्मं वहन्त्यो मानवस्य शुभाशुभकर्मणां हेतु-भूताः, दैवी वृत्तिरेव गीतायां दैवी संपदिति प्रतिपादिता। तत्प्रतिकूला चासुरीति दिव्य-गुणाभि-कामैर्दैवी वृत्तिरेवानुरोद्धया। तत्र हि धर्माचरणम् धर्मस्याङ्गेषु च 'अहिंसा सत्यमस्तेयं शौचमात्मविनिग्रहः।' इति 'अहिंसा, समता, तुष्टिः' इत्यादिना च सर्वप्रथममहिंसाया एव परिगणना। तस्येदमामृतम्।

मानवः खलु सामाजिकः प्राणी। समाजोऽपि विविधाचार-विचार-शालिना-मपि परस्परमैक्यवतां जनानां संघः। सोऽनस्थितिस्तेषां मिथः सहयोगेन। तदर्थं च बन्धुता नितरामपेक्ष्यते। सा च विद्यमानायां हिंसावृत्तौ शशशृङ्गकल्पैव। हिंसा हि द्वेष-मूला। न खलु मैत्री विद्वेषश्च सामान्यं भजतः। अभयं परेषां तत्रापरिहार्यम्। न हि भये लसति स्नेहः समादरो वा। अतोऽपि सोऽस्थितिमनुरुन्धानैर स्वीकार्याऽहिंसा।

स्वार्थ-प्रायो जनः। स्वेषु ॥ स्निह्यति परेभ्यश्च द्रुह्यतीति राग-द्वेषाभ्यां भेद-भावना। तत एव प्रयोजन-साधनाय नरः स्वान् रक्षति परांश्च जिघांसति। एवं च

मात्स्य-न्यायः प्रवर्तते । लोक-क्षय-कारिणः सङ्ग्रामाः, सामाजिका अत्याचाराः, परपीडनम्, धर्म-कृतो वर्ग-गतो जाति-गतश्च विरोधः सर्वे एवाशान्ति हेतवोऽस्या हिंसक-वृत्त्या उपजीविनः । अतोऽपि विश्वस्य स्थितये ऽहिंसा ऽपेक्ष्यते ।

न हिंसा प्राणि-वध मात्रम् । परपीडनम्, मर्म-भिदां वचनानां कथनम्, इतरेषां भावनाया उपघातः, किं बहुनाऽन्येषां हृदयं येन कर्मणा व्यथते, तदेव हिंसा । अतः सर्व-प्रथमं मनसो वैरभावमुत्सृज्य सर्व भूतात्मवादः स्वीकार्यः, सर्वत्र स्व-बुद्धिराधेया । अपगत-वैरभावे, प्रवृत्ते च प्राणि-मात्रं प्रति बन्धुत्वे स्वतो निहन्यते हिंसकता । 'समो ऽहं सर्व-भूतेषु न मे द्वेष्यो ऽस्ति न प्रियः' एतादृशी स्थितिर्यदि कस्यचित्स्यात् शान्ता तदा लोक-विरोधेन । त्यक्त द्विड् भावाना महात्मनां संसर्गेण प्रकृति हिंसा प्राणिनोऽपि त्यक्त-हिंसाभावा अजायन्तेति श्रूयते । महात्मा गोतमः क्रूर-कर्माणमङ्गुलि-मालं दस्युं स्व-प्रेम्णैव विजिग्ये इति ख्यातं चरम् । श्वापद-बहुले कानने तपस्यतामृषीणामासीदियं स्थितिः । सिंहा मृगाश्च व्यचरन् तेषामाश्रमेष्वकुतोभयाः । परं स्थितिरेषा वीत रागाणाम् ।

अत्र भवति काचिद् विप्रतिपत्तिः । शास्त्राण्युपदिशन्ति 'मा हिंस्यात् सर्व-भूतानि' इति । परं व्यवहार-क्षेत्रे नैतत्सम्भवति । विलोक्यते तत्र स्व परभावः, रागो द्वेषश्च । तथाहि—

पुनेरपि वनस्थस्य स्वानि कर्माणि कुर्वतः ।
उत्पद्यन्ते त्रयः पक्षा मित्रोदासीन शत्रवः ॥

तदा सम्मुखमागच्छति घातके ऽकृते च प्रति विधाने स हन्यादेव । कथमहिंसया तस्य प्रतीकारः ? प्रतिघाते तु हिंसा सम्पद्येत । अतो न लोके सम्भवति सर्वथा ऽहिंसा । वीतरागाणामेव कृते सा । अनेनैतदेवोत्तरं यत्तस्या जीवने सामञ्जस्यं विधेयम् । सम्भवति कश्चिच्चेत्स्व हृदयादामूलमुच्छेत्तुं वैरभावम्, शान्तश्चेद् रागो द्वेषो वा, तस्य सम्पर्कादेव विगलति रजः परस्य घातकस्यापि । नास्ति ततः किमपि भद्र-तरम् । न सम्भवति चेन्न स्वार्थाय पर-पीडा कार्या । अधिक हिंसा-प्रसक्त्याचरणस्य समक्षमल्पीयो हिंसावतः कर्मणो ऽनुष्ठानम् । परस्यात्याचारादबलस्य रक्षणम्, अन्यायस्य प्रतिरोधो ऽप्यहिंसैव । सत्यपि प्रतीकार-सामर्थ्ये प्रतिविधानं हिंसाया अप्यहिंसा । एवमहिंसा सबलस्यायुधम् । निर्बलस्यापि शान्त भावेन निर्वैरेण चान्याय सहने परस्य हृदय-परिवर्तनं सम्पद्यते ।

वस्तुतः 'आत्मनः प्रतिकूलानि परेषां न समाचरेत्' इति तावदहिंसायास्तत्त्वम् । एतादृशाचरणे न कश्चिद् विरुध्येत न च हिंस्र भावो जागृयात् । स्व-मनोगता हि हिंसा प्रतिहिंसामुत्पादयति । नहि जातु बलेन समवति हिंसा निवृत्तिः । अग्निना न शाम्य-

त्यग्निः। जलमेव तदर्थमपेक्ष्यते। मैत्री च सर्वथा शीतलमुदकं यत् परिपन्थिनामपि शमयति मनांसि द्वेष-दहन-दग्धानि। एवं यथाशक्ति हिंसकता-वर्जने हिंसा-मूलानां च परित्यागे समाजस्यैव प्रति-मूर्तिः सम्पद्यते। कुतस्तदा वैरम्, क्व गमिष्यति घृणा, कुत्राश्रयं भजिष्यति हिंसेति को जानाति। अतएवोक्तं बुद्धादिभिः—

'अहिंसा परमोधर्मः।' धर्मश्च विश्वस्यजगतः प्रतिष्ठा।

तदर्थं सर्वधर्मानुयायिभिरहिंसाऽऽचरणं विधेयम्। स्व कर्तव्य-पालने धर्म-रूपे न हिंसा भवति, इत्यप्यवधेयम्। नहि प्रतिहिंसामुद्भावयति सा। इदमेवाहिंसायास्तत्त्वम्।

———

# वासुदेव ज़रा कष्टम् ।

'अहह ! प्रभो ! कीदृशीं दशां प्रापितोऽस्मि ? कथ्यते कथं सीदन्ति नाम-सर्वांगाणि, न स्फुरतो हस्तौ कर्मणि, न प्रसरतः पादौ भुवि, न गच्छति दृष्टिर्लक्ष्ये, न शृणुतः शब्दं कर्णौ, क्षीयते घ्राणशक्तिः, अपचीयते बलम्, न परिणमति भुक्तम्, एधते ऽनुदिनं वायुः । किं कथयामि ? अपगलित-दशनं स्फुटितजलकन्दुकमिव जातं धवललाला-क्लिन्नं मुखम् । उपचित-श्यामलिम कान्तारावटायतेऽक्षिकूपम्, विगत-मसृणिमानौ गाढगर्तौ घट खर्परायेते कपोलौ, जरत्पारावत-पक्ष धूसरे कलुषितापाङ्गे दग्धकपर्दकायेते कनीनिके, रोम सङ्कुले घर्घरायितस्वने दरयेते तृणजालजटिले नासिके, वली-वलयिता तिलकालकाचिता श्लथत्वक्, दरद्रोणदरा लूनावशेषकाण्ड क्षेत्रस्थलीव प्रतिभाति तनुः, भग्नमेरुदण्ड कृष्टशरासन इवाभाति पृष्ठवंशः, शिथिलवसन-वेष्टिते शुष्क कदलयष्टी इव प्रतीयेते जङ्घे, नटडमरूरिव नृत्यति कम्पमाना ग्रीवा । गतावपि, मतावपि, वचने ऽपि श्रवणेऽपि, स्मरणेऽपि भवति सदा स्खलनम् । नाधुना करोति कर्णे सुतः, न सम्प्रति तिष्ठति वचने पत्नी, नेदानीं सहते दर्शनं स्नुषा, न परामृशति हितं बन्धुवर्गः । कौलेयकस्येव पतितखण्ड-मात्र प्रयोजनस्य न स्ति गृहे कश्चिदादरः । किं करवाणि ? कुत्र वा गच्छामि ? कं वा शरणं यामि । वञ्चितोऽस्मि मृत्योरपि ।' इत्थं भवति शोचनीयावस्था जराजीर्णकलेवरस्य मनुजस्य ।

दशामिमां गमिते शरीरे क्षीयते सकलमपि सन्निहितं शक्ति-पुञ्जं परमनुदिनमेधते तृष्णा । उक्तं च—

> जीर्यन्ते जीर्यतः केशा दन्ता जीर्यन्ति जीर्यतः ।
> जीर्यतश्चक्षुषी श्रोत्रे, तृष्णैका तरुणायते ॥

तथा च—

> अङ्गं गलितं पलितं मुण्डं, दशनविहीनं जातं तुण्डम् ।
> वृद्धो याति गृहीत्वा दण्डं तदपि न मुञ्चत्याशा पिण्डम् ॥

अबाधमेधते वृद्धस्य तृष्णा, प्रगुणो भवति सुत दारेषु मोहः, वार्धुषिक कुसीदवद् वर्धते प्रतिदिनं कोपः, करपुटाकलितसिकतानिकर इव परिहीयते दिने दिने शक्तिः, तरङ्गिणीतरङ्गभङ्गीभग्नपुलिनकल्पो लघीयान् जायते ऽन्वहमादरः । दशमीहतक इति, वृद्धापसद इति, जराविकलमतिरिति च सोल्लुण्ठं हस्यते वार्धक्यग्रस्तो जनेन ।

महान् यद्यपि दीर्घजीवनकृतो ऽनुभवो वृद्धस्य कल्याणाय कल्पते शिशूनाम्, तथापि न त आद्रियन्ते यौवन-मद-मत्त-मनसो वार्द्धक्य-विजृम्भितमिति वदन्तः ।

क्षीणे वयसि जीर्णे वपुषि च बहुधा भ्रश्यते मतिरपि प्रवयसाम् । तदा ते विस्मय-करं मौर्ख्यमनुतिष्ठन्ति । बहुधा रोगादिक्लान्तशरीरास्ते खिलीकुर्वन्ति सकलमपि परिजनं निजया विचित्रया वृत्त्या । वर्तमाने ऽशोभमाने भौतिकता-प्रधाने युगे दुरवस्थैव वृद्धानां पुत्रसात्कृतार्थजातानाम् । परिणीत एव सुतः परित्यज्य पितरौ वात्सल्य-निर्भरौ पृथगेव वासं करोति पत्न्या सह । यावद् वर्तते तयोरधिकारे धनम् तावदेव संभवति शुश्रूषा । परं न सर्वे ऽपि लक्षाधीशाः पुष्कलधना वा यन्नाम स्वाधिकारे धनं रक्षेयुः । तनयानां दयामात्रमाश्रयन्त एव वृद्धा यथाकथंचित्कालं व्यत्यापयन्ति । परं तामवस्थां प्राप्ता मध्यमी नोपहास-योग्याः । सेव्या एव सुतानां महतो ऽनुभवान् लोकोपकाराय रक्षन्तः । परं नायमादर्शः पाल्यते जनैः । अतो जरा-जीर्ण-जनानां दुर्दशैव समाज इति कष्टं जरा ।

# कष्टं निर्धनजीवनम्

सुखदुःखमयेऽस्मिञ्जीवने दारिद्र्य नाम वृष्टि-विरहितो दारुणो वज्रनिपात, घातापूर्वक शल्य-प्रवेश, अयस्त्रि-स्पर्शो दुर्महो दाह, प्रत्यदर्शनस्फुरिताघातः, व्रण-भूयिष्ठ कुष्ठम्। कस्तावदस्मिन् जगति दौर्गत्य-खिलीकृतो य सुख जीवति ? चिन्ता-दाव-दग्ध-मनसा दरिद्राणां वस्तुतो न जीवनम् जीवनम्।

किं साध्यते तै प्रयोजनमिह विविध-सार-राशि-सम्भृतेऽपि भुवने ? सर्वाण्यपि विकास-साधनानि क्रीतान्यपहृतान्यधिकृतानि च धन-पतिभि। तेषां शिशव सुरस-रसायनायित-भोज्यपुष्टवपुष कुट्टिमेषु क्रीडन्ति परं निर्धनानां पृथुका मुष्टि-मित-पृथुक-कणेभ्योऽपि रुदन्त क्षुत्क्षाम-कण्ठा बाल्य एवानुभवन्ति चिरनिद्राम्। न तेषां शिक्षा नापि दीक्षा, न संस्कार कुतो नमस्कार, न परिधानम्, दूरे वेशविधानम्, नोदरपूर्ति क्व भोगकला स्फूर्ति। संस्कृता अपि द्रव्यबहिष्कृता न मानवोचित जीवन जीवन्ति धनहीना। सर्वाण्यपि विकास-क्षेत्राणि न तेषामाशाप्रदानि।

आयाति वसन्तः मर्त्येषामुल्लासकृत्। ग्रीष्मस्तु नानादेश पर्यटनौत्सुक्यमानयति, वर्षास्तु शमयति ताप रवि-करजेन सह मानसमपि, शीतस्तु सन्दिशति विविध-भोगायतनता वपुष उल्लाघ हेतुता च। परं निर्धनानां कृते विपद्-वज्र-पातनमेवैतत्सर्वम्। निदाघे प्रखर-कर-कर-दाहदग्धा, प्रावृषि निरन्तर-वृष्ट-जलधर-धारा सारध्वस्त-शरणा, शीते च काले शिशिरतर-समीरण-वेपमान-जडीभूताङ्गा प्रज्वाल-जठरानल-पीत-शोणिता न कामुचित् विन्दन्ति शर्म-लेशम्। उक्तं च केनचित्—

रात्रौ जानुर्दिवा भानु कृशानु सन्ध्ययोर्द्वयो।
एवं शीतं मया नीतं जानु-भानु-कृशानुभि॥

दारिद्र्य-खिलीकृते जीवने स्वजना अपि द्रुह्यन्ति, मित्राण्यपि शत्रूयन्ते, ज्ञातयोऽप्यरातीयन्ते, पत्नी सपत्नीयते, माता विमातरति। यथाहि—

अम्बा तुष्यति न मया न स्नुषया साऽपि नाम्बया न मया।
अहमपि न तया न तया, वद राजन् कस्य दोषोऽयम्॥

महतोऽपि कुटुम्बस्यैकस्मिल्लघावेव कक्षे निवासोऽतिदुःखद —

तत्रिभिन्नेव गृहोदरे रसवती, तत्रैव सा कण्डनी
तत्रोपस्करणानि तत्र शिशवस्तत्रैव वास स्वयम्।

सर्वं सोढवतोऽपि दुःस्थगृहिणः किं ब्रूमहे तां दशाम्
अद्य श्वो-जनयिष्यमाण-गृहिणी तत्रैव यत्कूजति ॥ (वैनतेय कवे)

साधनानामभावे तु तद्दारिद्र्यमतिशयेन दुःख-प्रदं सम्पद्यते—

वृद्धोऽन्धः पतिरेव मञ्चकगतः, स्थूणावशेषं गृहम्
कालोऽभ्यर्णजलागमः, कुशलिनी वत्सस्य वार्ताऽपि नो।
यत्नात्सञ्चिततैल-बिन्दु घटिका भग्नेति पर्याकुला
दृष्ट्वा गर्भ-भरालसां निजवधूं श्वश्रूश्चिरं रोदिति ॥

निर्धनश्चारित्र्यधनोऽपि सर्वैः सन्दिह्यते, सर्वेऽपराधास्तत्र सभाव्यन्ते, अलीकोऽपि दुर्नयारोपस्तत्र सत्यायते। न स क्वापि शान्तिं लभते। नष्टप्रायता तस्य। तथाहि—

दारिद्र्याद्ध्रियमेति, ह्री-परिगतः सत्त्वात्परिभ्रश्यते,
निःसत्त्वः परिभूयते, परिभवान्निर्वेदमापद्यते।
निर्विण्णः शुचमेति शोकनिहतो बुद्ध्या परित्यज्यते,
निर्बुद्धिः क्षयमेति, हा निधनता सर्वापदामास्पदम् ॥

अस्यैव दारिद्र्यस्य कारणात् परेषामवमानना तूष्णीं सह्यते, निकृष्टमपि कर्म क्रियते, पापेऽपि चरणो निक्षिप्यते, नैष्ठुर्यमूरीक्रियते, कारुण्यं धिक्क्रियते। पिता तिरस्करोति सुतम्, भगिनी धिक्करोति सोदरम्, जननी न्यक्करोति तनयम्, पत्नी चापाकरोति पतिम्। दृश्यते च, अनेन विवशीकृताः पतिव्रता अपि पराङ्गता भवन्ति, सवित्री सुतं विक्रीणाति, पिता निहन्ति तनुजम्। किन्त्वज्जघन्यतरं कृत्यमस्माद् यत्स्वसुता भगिनी वल्लभा वा धनिना मन्मथज्वालाया इन्धनीक्रियते। अस्यैव पापस्य कारणाद् घृणितामपि याचना-कदर्थनां परावहेलनामपि व्रजन्ति जनाः। न केवलं जन्म-दुर्गताः, अर्थवन्तोऽपि पश्चादर्थविकला मानवास्तामेव दुरवस्थामनुभवन्ति। उक्तं च—

तानीन्द्रियाण्यविकलानि तदेव नाम,
सा बुद्धिरप्रतिहता, वचनं तदेव।
अर्थोष्मणा विरहितः पुरुषः स एव
भिन्नः क्षणेन भवतीति विचित्रमेतत् ॥

पर्यन्तोऽकान् विविध-भोग-भाजनानि दीनः स्वप्नेऽपि नाम तैः सह तुलयति निजामवस्थाम्, कल्पनायामपि सभावयति तैः सामान्यम्, परं न जातुचिदनुभवति फलितताम्। सत्य एवोक्तम्—

'उत्पद्योत्पद्य लीयन्ते दरिद्राणां मनोरथाः।'

न लेखनी प्रभवति कृत्स्नशो वर्णयितुमस्य दौर्गत्यस्य दोषान् । सर्वथा जीवन्तोऽपि मृता एव जना भवन्ति शिलीकृता एतेन । तत

*'Poverty is a course'*

(दारिद्र्यमभिशाप एव)

इयमांग्लोक्तिरपि सगच्छते । तेन च सत्यमेव—

'कष्टं निर्धन-जीवनम् ।'

—०—

# चक्रवत्परिवर्तन्ते दुःखानि च सुखानि च ।

जीवनमिदं तरंगावर्त-बुद्बुद-संकुलाम्बु सन्निभं नित्य-परि-वर्तमान-सम-विषम-दशा-परिणाम-कटुकं नव-नवानुभव-शबलितम् । न कोऽप्यत्र शश्वदानन्दं कष्टं वाऽनुभवति नियमेन । अत्र सुरासुर-दुर्लभान्भोगान् भुञ्जानो ऽपि, सुधा-सार-पूगायिता-न्पदार्थान् स्वदमानो ऽपि परिमल ललित-कुसुम पटल-मसृण-शय्यामधिशयानोऽपि जन इव कथं भवितेति को वक्तुमीष्टे ? महातरु-स्कन्ध-दोलान्दोलन-दुर्ललिता बालेव घनाघनैरनारतं नियतिरियं क्रीडति प्राणिना भागधेयं । भ्रू कुंस इव प्राकृत-मनोरमण-निपुणा, पारदारिक-विट-वञ्चना पटीयसी योषेव विविध भूमिकावगाहिनी कं न प्रतारयति पुरुष-विशेषं कमला । रजनीव चन्द्रकान्ता परिहसतीव पक्षान्तरेण रञ्जयन्त्यपि स्फुटं सहसोपनत विषादा मानव श्री । वञ्चयेव रमयति नरं परं कदर्थयति च कश्चिद-पाङ्ग-भङ्ग्या । कलित दिवस-मुखरागा सावित्रीव विभा हासाभिलक्ष्य-दन्तुर-मुखा सुदर्शना, भोगाभिरामं योनिराहृत सर्वस्व राजकान्ता सैन्यव्रज-भूषणा सूदकेव परि-लक्ष्यमाणा निसर्ग प्रेम-भर-मन्थरेव च स्थिरीकृताऽपि न नियतमनपगामिनी साम्राज्य-लक्ष्मी । अचिन्तितोपगतान्यपि दैवानुकूलता प्रकटयन्त्यपि दुष्परिमेयानि लीयन्ते सहसै-वैन्द्रजालिक-क्रीडितानीव वैभवानि ।

विपरीतं चाप्यनुभूयते लोके । आजन्मनो अविज्ञात-सुखोपायाः, रज कणा इव लुठन्तो जनानां पादयो, कुक्कुरा इवाहिण्डमाना द्वाराद्द्वारम्, अपारयन्त परि-पूरयितु-मुदर-दरीं विडम्बनामात्र मनुष्यताया कालान्तरे लक्ष्यन्ते धिक्कुर्वन्त इव कुबेर-मपरिमितविभवं ।

कृमि-तुल्यतयोपहसितो ऽद्यतनो जनो भोक्ता श्वो भविष्यति सार्वभौम राज्यम् । इह भवति मुहूर्तेन राजिकावण क्षितिधरोपमं क्षितिधरश्च व्रजति राजिका-कणताम् ।

'यच्चिन्तितं तदिह दूरतरं प्रयाति, यच्चेतसाऽपि न गतं तदिहाभ्युपैति ।।
प्रातर्भयामि वसुधाधिप चक्रवर्ती सोऽहं व्रजामि विपिने जटिलस्तपस्वी ।।"

इत्थं न कस्यचिच्छुभाऽशुभा वा दशा स्थेयसी । जीवनस्य सरसतैव तदा पर्यायतः दुःखानि सुखानि चापतेयुश्चेत् । उक्तं च—

'सुखं हि दुःखान्यनुभूय शोभते घनान्धकारेष्विव दीप-दर्शनम् ।'

यथा चक्रेशिया विरहमनुभूय सगतस्तयाऽधिका प्रीतिमनुभवति प्रेयान् । नैसर्गिकीय गति सुख-दुःखयो पर्यायेण पातिनी । अराणि यथा रथचक्रस्योर्ध्वं रधश्च यान्ति, तथैव समा विषमाश्च दशा भवन्ति प्राणिनां जीवने । यथा भासप्रोदितम्—

'कालक्रमेण जगत- परिवर्तमाना चक्रार-पङ्क्तिरिव गच्छति भाग्यपङ्क्ति ।'

(स्वप्न-वासवदत्ते)

कालिदासस्य च—

'कस्यात्यन्त सुखमुपनत दुःखमेकान्ततो वा
नीचैर्गच्छत्युपरि च दशा चक्रनेमि-क्रमेण ॥' (मेघदूते)

लोकास्तु नेत्थं विचारयन्ति । सुख पद पुरुषार्थाधिगत विभूतय कदाचिद् यदि पतन्ति सकट महोदधो, तरणापटव इव सहसा भवन्ति विकला न च क्षमन्ते शान्त्या त काल यापयितुम् । प्रावृषेण्या सरित इव क्षिप्र भवन्त्युद्वेला सपदप्रसूतौ क्षामता च दधति निदाघ इव कृच्छ्रावसरे । न ते चिन्तयन्ति यन्नकान्तिकीय स्थिति ।

कल्याणी बत गाथेय लौकिकी प्रतिभाति मे ।
एति जीवन्तमानन्दो नर वर्षशतादपि ॥ (वा. रा सु.)

न सर्वदा कस्यचिज्जीवने केवल दुःख सुख वा निहितम् । अद्य यदि सकटानि श्वो नियत सुख भविता । सघनासु घनटास्वपि विद्योतते विद्युद् ।

"If winter comes, spring cannot be far behind."

(शैले)

अतो धैर्य धनैर्भूत्वा जनैर्न तावद् विभवेषु प्रमदितव्य न वा विपदि नेतव्यम् । सुखे दुःख दुःखे च सुख निहितमिति शृङ्खला तयो । न कस्याऽपि वैभव सदा तिष्ठति, किं मूलस्तर्हि दर्पो विधीयेत ? नापि शाश्वतमत्र दुःख यद् विलोक्य व्याकुलता भजन्ति लोका । अथवा साधूच्यते—

दीरघ सास न लेहु दुख, सुख साईंहि न भूल ।
'दई दई क्यों करतु है, दई दई सु कबूल ॥ (विहारीलाल)

अत सत्यमेवोक्तम्—'चक्रवत्परिवर्तन्ते दुःखानि च सुखानि च ॥"

—•—

# भारतीय-संस्कृतौ स्त्रीणां स्थानम्

जीवनस्य तावद् द्वौ पक्षौ पुरुषार्थो भावना च। तत्र प्रथमस्याश्रय पुरुष अपरस्य च नारी। तयोरैक्येनैव जीवनस्य पूर्णता। सभ्यसमाजे स्वीकृताऽपीयं स्थितिर्बहुत्र विसंवादिनी। अतो मूलादेव विचार्यते कीदृशी सा भारतीय संस्कृतौ। किमारम्भतो वरीयसी विपरीता वा।

भारतीया संस्कृतिश्च न मूलतोऽद्यतनी। प्रथम वैदिकी पश्चाच्च सा पुराणोक्ता पद्धतिमनुसरति। परं प्राचीनतमात्कालात्तस्यां नार्या स्थितौ यानि परिवर्तनान्यभूवन् तान्यत्रैवस्मिन्नेव पद्ये भङ्यन्तरेण वर्ण्यन्ते—

पुराऽभूदस्माकं प्रथममविभिन्ना तनुरियम्,
ततो नु त्वं प्रेयान् वयमपि हताशा प्रियतमा।
इदानीं नाथस्त्वं वयमपि कलत्रं किमपरं,
हतानां प्राणानां कुलिश कठिनानां फलमिदम्॥

एतदनुसारेणादौ मानव जीवनस्य पूर्णतैव नार्याऽभवत्। यद्यपि तस्या सृष्टि सन्तति प्रसवार्थैवासीत्, परं तदाऽऽर्याणां वीर पुत्र प्राप्तिरेव परमाऽऽशाऽभूत्। वस्तुतस्तात्कालिक आदर्श एव तन्तत्ये दारपरिग्रह। परं नैवेन तस्या अपत्य प्रसव मात्र मूल्य बोध्यम्। साऽभूत्तत सहधर्म चारिणीत्वेन। तदानीं वधूरभूद् सुमङ्गली। न यद्यपि कन्याजन्म प्रार्थ्यते परं दृश्यते क्वचित् पुत्र शत समकक्षा सुता वर्णिता। न तया विना यज्ञस्य पूर्तिरमन्यत। लक्ष्यते च तदा पुरुषवत्तासामप्युपनयने वेदाध्ययने चाधिकार। लोपामुद्रा घोषा, विश्ववारा च मन्त्र-द्रष्टृ, गार्गी च ब्रह्मवादिनी बभूव। आदौ कुलस्य गणना मातृमूलाऽभवत्। 'मातृमान् पितृमानाचार्यवान् पुरुषो वेद' 'मातृदेवो भव', 'पितृदेवो भव', 'आचार्यदेवो भव', इत्यादौ मातृरूपेण नार्येव प्रथममादरपदमभजत्। 'कन्यारत्न दुष्कुलादपि ग्राह्यम्' इत्यादिवचनैं स्त्रियो जाति-कृताऽयोग्यता न सिद्ध्यति। पत्युर्वरणे सा पितृप्रदेयाऽपि स्वयंवराऽप्यासीत्। क्वचित् प्रदाने तस्या अनुमतिरपि ग्राह्याऽभूदिति दृश्यते।

आसीत् स्त्रीणां पूर्णा शिक्षा-व्यवस्था। चतुःषष्टि कला, कामशास्त्र, वेदा, वेदाङ्गानि च ता पूर्वमध्यैयत। पश्चादेव 'स्त्रीशूद्रौ नाधीयाताम्' एतादृशी व्यवस्थाऽभवत्। नाभूत् पत्यु स्त्रीत्यागाधिकार। भरणपोषणार्थं च पत्या तदर्थं द्रव्य

देयमासीत्। परयू रुग्णत्वे, नपुसकत्वे चावर्तत तस्या देवरादिवरणार्हता। आसीत्तदा गृहस्य सुखं शान्तिश्च गृहिणीसौख्याश्रिते। उक्त च मनुना—

नार्यस्तु यत्र पूज्यन्ते रमन्ते तत्र देवता.।
यत्रैतास्तु न पूज्यन्ते सर्वास्तत्राऽफला क्रिया ॥

स्त्रीणामासीत्पतिव्रतात्व धर्म. पर पुरुषाणामपि पत्नीव्रतत्व हृदयमभूत्। पुराणकालेऽपि न सर्वथा परिहीणा तासा दशा। पुराणे परब्रह्मात्मतया स्वीकृते नार्यपि तस्य शक्तिरिति पूजितैव।

'देव्य समस्तास्तव देवि भेदा स्त्रिय समस्ता सकला जगत्सु।' तदानीमपि तासा हितरक्षण भर्तु: कर्तव्यमासीत्। शिवस्यार्धनारीश्वरत्वेन वर्णने स्त्रीपुरुषयोरियमेवाभिन्नता विवक्षिता। तदा यद्यपि—

पिता रक्षति कौमारे भर्ता रक्षति यौवने।
पुत्रो रक्षति वार्द्धक्ये न स्त्री स्वातन्त्र्यमर्हति ॥

एतादृशी व्यवस्थाऽविद्यत पर न नारीणा विकासस्याऽभावोऽभूदिति ध्येयम्।

'गृहिणी, सचिव सखी मिथ प्रियशिष्या ललिते कलाविधौ।' अजस्यास्मिन् विलापे तात्कालिक नारीविषय दर्शन दृश्यते। तदानीमपि विज्जका, विकटनितम्बा वरदाम्बिकासदृश्य कवयित्र्योऽभूवन्। मध्यकाले तु नार्यो भोगस्य प्रधान साधनममन्यन्त। बालविवाहैस्तासा विकास एवारुध्यत। यवनानामाक्रमणैस्तासा पावन साऽह्रीयत। कालक्रमेण जातेषु जनेष्वशिक्षितेषु, ता प्रति सर्वाणि कर्तव्यानि त्यक्तानि पुरुषै। पादुकेव साऽगण्यत तैर्यथाकाम चागर्ह्यत। परमय प्रभावो यवनसस्कृत्या यत्र नार्या मूल्य वासनापूर्तिः सन्तानोत्पादनमात्र च—

'उपपन्नाहि दारेषु प्रभुता सर्वतोमुखी।'
(शाकु ५)

इति भावना च विकारमेवाभजद् येन स्त्रीणा जीवनमतिशोचनीयतामगात्। एव भारतीया सस्कृतिर्वेदकालिकी पौराणिकी च न नारीणा विषय उदास्ते। न सा सिद्धान्ते तथा तिरस्करणीयोपेक्षणीया च यथा समाजे प्रवृत्तिरुपलभ्यते। अद्य शिक्षिता भारतीया स्त्री पुन स्वाधिकारं लभते। सर्वेष्वपि क्षेत्रेषु तस्या प्रवेश। न किन्तु भेद कृता तस्या सल्लापि अनर्हता विधानेन नाशिता, पर जागरणमिद पाश्चात्यसभ्यतामूलम्। अत काम सा स्वकीयमपहृतप्राय गौरव पुनर्भजते पर तया प्राय पावनता स्वकीया त्यक्तैव। नाद्य सा पूर्ववच्छील गणयति।

एव प्रवृत्तिमार्गे भारतीया सस्कृतिर्मूलतो नारी प्रति न सकीर्णा। पर सामयिक: प्रभावस्तामधोदशामनयत्। यत् सत्य सैव प्राचीना सस्कृति रक्षति। तर्हि कथ तस्या

लघीयसी स्थितिः स्वीक्रियेत। निवृत्तिमार्गावलम्बिनस्तु स्त्रियो निन्दन्त्येव। तेषां विचारेण ताः सिद्धिमार्गस्य बाधिका एव। कामास्त्रत्वेन परिगणितास्ताः स्वरूप-संपदा प्रलोभयन्ति साधकान्। ब्रह्मणो मायैवैषा या नाम स्त्री। अनया वशीकृतो न प्रभवति जनो निवर्तयितुमात्मानं विषय-प्रपञ्चात्। अत एव तैरुक्तम्—

शम्भु-स्वयम्भु-हरयो हरिणेक्षणानां,
येनाक्रियन्त सततं गृह-कुम्भ-दासाः।
वाचामगोचर-चरित्र-विचित्रिताय,
तस्मै नमो भगवते मकर-ध्वजाय॥

भर्तृहरिणा च निन्दितेयं कवयवचोपहसिताः।

स्तनौ मांसग्रन्थी कनक-कलशावित्युपमितौ,
मुखं श्लेष्मागारं तदपि च शशांकेन तुलितम्।
स्रवन्मूत्र-क्लिन्नं करि-वर-कर-स्पर्धिजघनम्,
अहो निन्द्यं रूपं कवि-जन-विशेषैर्गुरु कृतम्॥ (वै. श. २०)

महाभारतेऽपि नारीणां महती गर्हा कृता। साऽपि ज्ञानमार्गप्रवृत्तानां वैराग्योद्बोधनाय। नीतिकारैस्तु क्वचित् प्रसंगाऽयन्त्र च निन्देति, द्विधैव वर्णिता।

आहारो द्विगुणः स्त्रीणां बुद्धिस्तासां चतुर्गुणा।
षड्गुणो व्यवसायश्च कामश्चाष्ट-गुणः स्मृतः॥

"परं साहसिकाः स्त्रियः", 'मधु तिष्ठति जिह्वाग्रे हृदये तु हलाहलम्', इत्यादिभिर्वचनैर्नितरां निन्देव तस्या विहिता। परं गार्हस्थ्यस्याधिष्ठात्री, जीवनस्य सरसता, मूर्तिमती प्रीतिर्नारी, न सर्वथाऽनपेक्षिता। सृष्टेर्निर्माणाय विकासाय च प्रादुर्भावितेयमात्मनः कला विश्वात्मना। कथं साऽनादरणीया यां विना नियतिरपि सहसा निरुन्ध्यात् स्वकार्यम्। मानवतायाः पूर्णता न तामन्तरा संभवतीति महत्त्व-पूर्णमेव तस्याः स्थानम्।

# आचार-प्रभवो धर्मः

भारतीय दर्शने धर्मस्य मानवजीवने निरतिशयं महत्त्वम् । जीवनस्य पुरुषार्थ-चतुष्टये धर्मस्य प्रथमं स्थानम् । न स केवलं परलोकार्थमेवोपास्य, लोकेऽपीह तस्य नितरामपरिहार्यता । तथा हि लौकिक-जीवितेऽर्थस्तदाश्रितश्च कामः सांसारिका भोगा इति यावत्, प्राणिनामिष्टौ । परं तयोरपि कारणत्वेनोक्तो धर्मो मुख्यः । अस्मिन् लोके सुखमवस्थाय परलोकेऽपि सौख्यावाप्तिरेवासुमतां कामना विषयः । तत्प्राप्तिश्च धर्मानुष्ठानेनैव सम्भवति । अत एव 'यतोऽभ्युदय निःश्रेयस-सिद्धि स धर्मः' इति धर्मलक्षण-मुक्तम् । अभ्युदयो हि वर्तमान एव जीविते, निःश्रेयसस्य कल्याणस्य च सिद्धिः परत्र । 'अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभम्,' 'कर्म न स्वकृतमत्र न भुङ्क्ते,' इत्याद्यनुसारेण च शुभस्याशुभस्य च कर्मणः कृतस्य परिणामोऽवश्यं भोक्तव्यो जीवेनेति शुभकर्मणा फलं स्वर्गादि लोकान्तरप्राप्तिरेव । 'ते तं भुक्त्वा स्वर्गलोकं विशालं क्षीणे पुण्ये मर्त्यलोकं विशन्ति । एवं त्रयीधर्ममनुप्रपन्ना गतागतं कामकामा लभन्ते ', गीतायां इति-प्रमाणेन च न धर्मानुष्ठानेनात्यन्तिकश्रेयसो मोक्षस्याधिगतिर्भवेति । तेन तस्य त्रिवर्ग-साधनता कथिता परं नैतावत्यम । मुमुक्षोः स्थितप्रज्ञस्य स्थिरबुद्धेर्यानि लक्षणा-न्युक्तानि तदर्थमपि धर्म-स्वरूपत्वेनोक्तानां व्रतानामनुष्ठानमेव मूलम् । केवलं फला-काङ्क्षया कृतानां चान्द्रायणादि-व्रतानां स्वर्गादिमात्र प्रयोजनत्वम् ।

धर्मस्य धर्मत्व तु महाभारते, 'धारणाद् धर्म इत्याहुर्धर्मो धारयते प्रजाः' इत्युक्तम् । तेन प्रजानां लोके साध्ववस्थितिरपि धर्ममूलैव । वयं तु पदार्थानां स्वरूप रक्षणाचरणमेव धर्मं स्वीकुर्मः । न च तेन प्राचीनोक्तानि लक्षणानि बाध्यन्तेऽपि तु तेषामेव पुष्टिः । यथाऽपां शीतस्पर्शवत्त्वं क्लेदनं च धर्मः । तस्मिन् हीयमाने नापामप्त्वं भवेदिति तासां स्वरूपहानिरेव । तथैव वानं (सदा गमनम्) वायोः, दाहः प्रकाशनं च वह्नेर्धर्मः । तस्मिंस्त्यक्ते वायोर्वायुत्वं वह्नेश्च वह्नित्वं न रक्ष्येत । सैव स्थितिर्मानवानाम् । मनुष्यानुष्ठेयानां जातिस्वाभाव्यादपरिहार्याणां कर्मणां करण एव मानुष्यक-रक्षा ।

सत्यं, क्षमा, धृतिः, शौचं, स्थैर्यमात्मविनिग्रहः ।
अहिंसा समता, तुष्टिस्तपो दानं यशः ॥

इति गीतायां प्रतिपादितानि तत्त्वानि धार्मिक सभ्राह्याणि ।

धृति क्षमा दमोऽस्तेय शौचमिन्द्रिय निग्रह ।
धीर्विद्या सत्यमक्रोधो दशक धर्म-लक्षणम् ॥

धर्मस्यैतानि दश लक्षणानि जीवनेऽनुष्ठीयन्ते चेत्तदैव धर्मस्य स्थितिर्नान्यथा। अतो न धारणेनैव धर्मस्य धार्यत्व धारकत्व चेष्टम्। प्रथम प्रजाभिर्धृतो धर्मो धारयितु क्षम । तत एव—

'धर्म एव हतो हन्ति धर्मो रक्षति रक्षित ।'

इत्यभियुक्तोक्ति सगच्छते ।

न चाहिंसादय केचित्पदार्था येषा गृहे रक्षणेन सिद्धि स्यात्। कर्तव्याना धर्मेण करण न च कर्तव्याना त्याग इत्येव धर्मस्य स्थिति । नाचरणमन्तरा चाहिंसादिव्रत-सिद्धिरित्याचारमूल एव धर्म । अत एव सदाचारो धार्मिकोऽनाचारो दुराचारो वाऽधार्मिक इति कथ्यते। आचारोऽपि यथा देशकालाद्यपेक्षते, विपदि चापद्धर्मस्यानुष्ठान विधीयते, तेनाऽपि क्रियात्मकता (Practicalness) धर्मस्य सुतरा साध्यते। धार्मिकाणा जनानामाचरितानि दृष्ट्वैव लोका धर्माधर्मौ निर्णयन्त । यथोक्तम्—

यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जन ।
स यत्प्रमाण कुरुते लोकस्तदनुवर्तते ॥

महाभारतेऽपि यक्षयुधिष्ठिर सवादे श्रेष्ठ पुरुषाचरणस्यैव धर्म-मार्गत्वस्वीकरण निरूपितम्। यथा हि—

"तर्कोऽप्रतिष्ठ, श्रुतयो विभिन्ना नैको मुनिर्यस्य मत प्रमाणम्।
धर्मस्य तत्त्व निहित गुहाया महाजनो येन गत स पन्था ॥"

गीताया वर्णिता दैवी सपदपि धर्माचरणमेव प्रतिपादयति। तादृशान् गुणानात्म न्यावलम्बन्नेव जनो धार्मिक इति कथ्यते ।

'स्वे स्वे कर्मण्यभिरत ससिद्धि लभते नर ।'
श्रेयान्स्व धर्मो विगुण पर धर्मात्स्वनुष्ठितात्।
स्वधर्मे निधन श्रेय पर-धर्मो भयावह ॥

इत्यपि धर्मस्याचार-मूलतामेव साधयति। सयत जीवन हि सदाचारवद् भवति, सयमश्च धर्मस्याङ्गम् ।

आचार्यं च प्राप्य उपादिनानुष्ठेयानि कर्माणि। यथा तैत्तिरीयोपनिषदि—
"वेदमनूच्याचार्योऽन्तेवासिनमनुशास्ति, सत्य वद, धर्म चर, स्वाध्यायान्मा प्रमद । आचार्याय प्रिय धनमाहृत्य प्रजातन्तु मा व्यवच्छेत्सी । सत्यान्न प्रमदितव्यम्,

धर्मान्न प्रमदितव्यम्। कुशलान्न प्रमदितव्यम्, भूत्यै न प्रमदितव्यम्, स्वाध्याय-प्रवचनाभ्यां न प्रमदितव्यम्, देव पितृ कार्याभ्यां न प्रमदितव्यम्। मातृ देवो भव, पितृ-देवो भव, आचार्य-देवो भव, अतिथि-देवो भव। यान्यनवद्यानि कर्माणि तानि सेवितव्यानि नो इतराणि। यान्यस्माकं सुचरितानि तानि त्वयोपास्यानि नो इतराणि।

ये के चास्मच्छ्रेयांसो ब्राह्मणा, तेषां त्वयाऽऽसनेन प्रश्वसितव्यम्, श्रद्धया देयम्, अश्रद्धया देयम्, श्रिया देयम्, ह्रिया देयम्, भिया देयम्, संविदा देयम्, अथ यदि ते कर्मविचिकित्सा वा वृत्त विचिकित्सा स्यात्। ये तत्र ब्राह्मणाः सम्मर्शिनः युक्ता आयुक्ता, अलूक्षा धर्मकामाः स्युः, यथा ते तेषु वर्तेरन्, तथा तेषु वर्तेथाः। अथाभ्याख्यातेषु। ये तत्र ब्राह्मणाः सम्मर्शिनः युक्ता आयुक्ता, अलूक्षा धर्मकामाः स्युः, यथा ते तेषु वर्तेरन्, तथा तेषु वर्तेथाः। एष आदेशः एषा वेदोपनिषत्। एतदनुशासनम्, एवमुपासितव्यम् एवमु चैतदुपास्यम्।"

एष एवाचारोपदेशो धर्मोपदेशः। न वस्तुतः कश्चिदस्माद् व्यतिरिक्तो धर्मः। सार्वभौमोऽयं न शिक्षयति परद्वेषं घृणां वा। शाश्वतस्य मानवमात्राचरणीयस्य लक्षणमिदं धर्मस्य। अतएव सम्प्रदायत्वेनोक्ता एव देशकालभेदकृता आचारभेदाः। मूलं तु सर्वेषां धर्माणामाचार पूतत्वम्। बौद्धानामहिंसा समता च, जिन धर्माव-लम्बिनामपि सर्वथाऽहिंसा निष्ठा, अपरिग्रहवृत्तिः। मोहम्मद (मुहम्मद) प्रवर्तित धर्मे च शुचित्वम् (ईमान), ख्रीष्टमते (ईसाई) कारुण्यं मैत्र्यं च तत्र सार्वभौमे धर्मे समाविष्टान्येतानि तत्त्वानि। आचरन्नेतदनुसारेण सत्यानुष्ठाता न द्रुह्याद् भूतेभ्य कदाचित्।

अथ धर्म-नाम्नैव लोकाः सगर्हं नाम्ना सकोपयन्ति। केचिदतीत युगीनं परे च स्त्री विषयं तं प्रतिपादयन्ति। इतरे तु वाचाटाः प्रवचनेषु धर्मं पोषयन्तस्तद् विरुद्धमेवा चरन्ति। धर्मोऽद्य लोके सैद्धान्तिकताभूमिमारोपितो जीवनाच्च बहिष्कृतः। अत एव मानवो हीयते मानवतायाः। धावरति स दानवानामाचारान्। धर्मध्वजा अपि ते क्षोभ्या एव दूषितैरात्म चेष्टितैः कलङ्कयन्त्येव धर्मम्। अतो भूयोऽपि योग क्षेम कामैः शान्ति कामैः पुष्टिकामैस्तुष्टि कामैर्यशस्कामैः श्रीकामैश्चाऽऽश्रेयो धर्म आचारेण जीवने। तदैव तेषां क्लेशनिवृत्तिः सम्भवति नान्यथा।

—०—

# आर्जवं हि कुटिलेषु न नीतिः

अत्र संसारे विविधप्रवृत्तिमतां प्राणवतां वसतामेकत्र समाजे भवन्ति मिथः संव्यवहाराः संसर्गमूलाः। ते च भद्रा अभद्राश्चेति नैकविधा लोकानां प्रकृतिवशात्। केचित् तावन्निसर्गेणैव पाषाणा इव कटुस्वनाः, कण्टकवन्मर्मच्छिदः, मशका इव कर्णेजपाः, मत्कुणा इव पररक्तलोलुपाः, सर्पा इव छिद्रवृत्तयः, उत्पाता इव हानिकराः, अङ्गारा इव दाहकाः, उल्मुका इव कलुषितमुखाः, लूता इव कृतजालप्रपञ्चाः, वृका इवोदरपरायणाः सखीनां रिपूणां च हानिकरा एव सिध्यन्ति। परे तु स्वप्नेऽपि न चिन्तयन्तोऽन्यस्याशुभं सर्वेषा हितायैव चेष्टन्ते। तत्र साधुमार्गेण तितिक्षावलम्बने सति पूर्ववर्णितानां खलानां साहसस्य वृद्धिरेव भवतीति न तान्प्रति सन्नीतेः प्रयोगो युज्यते। तेषां कृते तु कूटनीतिरेव प्रदर्शिता नीतिविद्भिः।

नीतिप्रयोगस्याधिकारिणः केवलं सन्तो येषां हृदयं स्फटिकोपमम्, कर्माणि करतलामलकवत् स्फुटानि, तदनुकूलाश्च सुधामुचो वाचः। न स्वप्ने ऽपि तेषा मनो वचः कायं वा छलं स्पृशति। न ते स्वप्ने ऽपि परानिष्टं भावयन्ति, परैः पीड्यमाना अपि सुखयन्ति जगत्। उक्तं खलु तेषां कृते—

> पाटीर! तव पटीयान् कः परिपाटीमिमामुरीकर्तुम्।
> यत्पिषतामपि नृणां पिष्टोऽपि तनोषि परिमलैः पुष्टिम्॥

तेषु प्रयुक्ता नीतिः सुक्षेत्रे कृषिरिव सुफला सम्पद्यते।

यद्यपि सर्वथा साधुदर्शिनो महात्मानो नालोचयन्तः खलानां छद्मपतानां कुत्सितानि चेष्टितानि, तानुपकुर्वत एव, परं न तेन कश्चिल्लाभः संभवति। दुष्टा न बोधिता अपि बुध्यन्ते, शिक्षिता अपि शिक्ष्यन्ते, संभाविता अपि सत्क्रियन्ते, पाठिता अपि पाठ्यन्ते। तेषां प्रकृतिस्तु नलारोपितं श्वपुच्छमिव न स्नेहनादिना सुनमा। दण्ड एव तेषा विनेता, खड्ग एव तेषा साद्धा, भयमेव तेषां शास्तृ। सामयादिस्तु घण्डताऽमीषामेपतेतराम्।

बहुधा खलैः कुटिलमतिभिः सह कृतस्य सद्व्यवहारस्य भूयान् दुष्परिणामोऽनुभूयते। असंभावयन्तः प्रतिक्रियां परस्मात् भूयोऽपि द्विगुणतरमन्याय्यमाचरन्ति, दौर्बल्यं सतो मन्यमानास्तेन क्रीडन्ति। पौरुषे जाते सति गूढनखा इव बहिः सत्यं

प्रदर्शयन्त पश्चात् छिद्रान्वेषिण समये प्रहरन्ति। न तेषा प्रतीकारस्तदा सम्भवति। एतच्चोक्त भारविणाऽसाधारणप्रतिभाविभाविणा किरातार्जुनीये—

व्रजन्ति ते मूढधिय पराभव भवन्ति मायाविषु ये न मायिन ।
प्रविश्य हि घ्नन्ति शठास्तथाविधानसवृताङ्गान्निशिता इवेषव ॥

*कटु सत्यमिद प्रमाणीक्रियते भारतस्येतिहासेन। तपोधना शान्ति शस्त्रा* कषय कुणपादाने सततमबाध्यन्त। राज-खड्ग एवाभूत् तेषा शास्ता। धर्मपथ-पथिका पाण्डवा कुटिलमनभिमर्षितराष्ट्र' सदाऽनुशन्त। महाभारत युद्धमेवाभूत् तेषा चिकित्सा। ग्रीस्य आक्रान्ताऽलक्येन्द्र (सिकन्दर) पुरुणा युद्धेन समाचित एव परावर्तत। तस्य सेनानी शल्योका (सेल्यूकस) अपि मौर्यसम्राजश्चन्द्रगुप्तस्य निशित-खड्ग धाराजले *निर्वाप्य स्वदिग्विजयोद्यामय प्रतापम् शशाम। मिलिन्द (मीनेण्डर)* पुष्यमित्र पौत्रेण वसुमित्रेण निगृहीत एवात्यजद् भारतजयोद्योगम्। साध्ववतत्—

कृते प्रतिकृत कुर्यात् हिंसके प्रतिहिंसनम्।
न तत्र दोष पश्यामि शठे शाठ्य समाचरेत् ॥

ये तु न तथा विदधति भुञ्जत एव ते दुष्परिणामान्। पाञ्चालदेश्या जयपाल-प्रभृतयोऽयोत्स्यन्त चेन्महामदेन *गजनीपतिना,* शाहबुद्दीनेन्द्वाहाबद्दीन दिल्लीश्वर पृथ्वीराज प्रथमविजयेऽपि न समधास्यन्त यदि मुगलै सह भारतीया क्षत्रिया प्रजाश्च, न भारतमपि पराधीनताकालुष्यकलुषितमभविष्यत्। राजनीतौ तु भवति चपेटिकाया उत्तर मुष्टि-वर्ष इष्टिकाना चाश्मवृष्टिरेकस्यापकृतस्य शत प्रत्यपकृतम्। अद्यापि भारतीया शासका कुटिलै पाकस्थानीयैश्चीनैश्च सह मैत्रीमेव दर्शयन्ति, तै कृतानपकारान् मर्षयन्ति, तस्यैव फलित महति भागे चीनानामधिकार, पाक स्थानस्य च स्वार्थसिद्धि। न ते विभावयन्ति 'पय पान भुजगाना केवल विषवर्धनम्' इति गरलदन्तभग एव तेषा चिकित्सा। अत एवानुदिन पराभव।

वस्तुत सामकाले साम्न प्रतापकाले तु प्रतापस्यैवाश्रयण भवति नय। दुर्बला अपि पराजीयमाना शक्ति सग्रह विधाय कालान्तरे विजेतार प्रहरन्ति नाशयन्ति च तम्। कण्टक तावत् कण्टकेनैवोद्ध्रियते। हस्तेनाभिमृष्ट तु गहन प्रविशति प्रकोप च कुरुते। दूषित रक्ते शिरावेध एव प्रतिक्रिया भवति। न जाल्मा (जालिम) जातूप-क्रियमाणा अपि शाम्यन्ति। बिभेति जन पौरुषाधिरूढाद् एव। दाक्षिण्य भजन् रवि-रप्याश्रयति मन्दप्रतापताम्। भवत्याङ्गलभाषायामपि तावदाभाणकम्—

'Tit for tat'

अत साधूक्त श्रीहर्षेण—

'आर्जव हि कुटिलेषु न नीति'

# महान्महत्येव करोति विक्रमम्

इह जगति भवन्ति प्राणिनां मनोऽनुकूला विचारास्तदनुकूलाश्चाचाराः। प्रतिफलति तेषामादाय कर्मसु; अतो येषां कर्मसु, वचनेषु व्यवहारेषु च गौरवं दृश्यते त एव महान्तः। महत्त्वमधिश्रयति तेषां सत्त्वम्। नानुकर्तुं क्षमस्तान् निःसत्त्वः। तथाहि—

व्यालोलकेसरसटाजटिलांसभित्तिरारोपितो मृगपतेः पदवीं यदि श्वा।
मत्तेभकुम्भतटपाटनलम्पटस्य नादं करिष्यति कथं हरिणाधिपस्य॥

महत्त्वं च तेषां प्रतापाश्रयम्। पौरुषेणैव तेऽर्जयन्ति राज्यम्, उपहसितसुरलोक-सम्पदः संपदः। दृष्टिर्हि तेषामुत्कर्षगामिनी। न कदाचित्परिभवं सहन्ते परस्मात् ते। विप्रकृतास्त्वरितं ते तेजोऽधितिष्ठन्ति।

ज्वलति चलितेन्धनोऽग्निर्विप्रकृतः पन्नगः फणां कुरुते।
प्रायः स्वं महिमानं क्षोभात् प्रतिपद्यते हि जनः॥ (अ. शा. ६, ३१)

परं पौरुषमाश्रयन्तोऽपि न विदधति कदाचित्ते दीनाम्नुपाहान् स्वपराक्रमलक्ष्यभूतान्। साटोपं गर्जति, सजघनास्फोटं तर्जयति, दर्पनिसर्पतपिते बलिन्येव प्रयुञ्जते बलम्। भवति तेन सह युद्धे तेषां निरतिशयः परितोषः। कृपणानां तु प्रत्युत्तरेऽपि लज्जते महान्।

'अनुहुंकुरुते घनध्वनिं न हि गोमायु-रुतानि केसरी।'

यथा कस्यचिद् विदुषः परा प्रीतिर्मस्तिष्क-कण्डू-व्यपनयन-पटौ जटिल-ग्रन्थि-ग्रन्थिले महति ग्रन्थ एवाधीते भवति, श्रेष्ठस्य वैज्ञानिकस्य महत्याविष्कारे जायते रुचिः, गरीयान् दार्शनिको यथा गूढतमसमस्या-समाधाने भजते सुतरां तोषम्, तथैव महान् धीरो वीरायैव द्रुह्यति, तमेवाक्रामति यमवलोकयति रणदुर्मदम्। उक्तं च—

दिगन्ते श्रूयन्ते मद-मलिन-गण्डाः करटिनः
करिण्यः कारुण्यास्पदमसमशीलाः खलु मृगाः।
इदानीं लोकेऽस्मिन्ननुपम-शिखानां पुनरयं
नखानां पाण्डित्यं प्रकटयतु कस्मिन् मृगपतिः॥

वस्तुतो विक्रान्तेन सह विरोधे भवति शौर्योत्कर्षः, विजये यशः पराजयेऽपि च प्रशंसा जायते। तदनुरूपतामावलयितुं क्रियते व्यायामः। एतेनाशक्तोऽपि शक्तता

व्रजति। तदर्थमेव प्रोक्तं भारविणा—

"समुन्नयन् भूतिमनार्यसंगमाद् वरं विरोधोऽपि समं महात्मभिः ॥"

अल्प-बलेन सह विरोधे तु पराक्रमिणो लज्जैव भवति। तथाहि विजये न किमपि यश., 'किमनेन कृत वराकोऽसौ जितश्चेत्।' यदि तु कथमपि पराजितो भवेत्तेन, अपरिमार्जनीयमयशो नितरामुपहासश्च जायेतेति जये पराजये चोभयतोऽपि हानिः। कालुष्यं कलंक-जनितं परिहर्तुं न वीरोऽवीरे प्रहरति शस्त्रम्। लज्जते ■ तत्रास्त्रं चालयन्। अतएवाभिव्यक्ति सुभट-शिरोमणिशौर्य-दर्प-निकषायित दोर्दण्ड-कण्डू-व्यपनयन-पटुं प्रतिभटं घूरः। तत एव वीर-भट-मुकुट-मणेर्मेघनादस्योक्तिर्गरीयसी—

क्षुद्राः संत्रासमेते विजहत हरयः क्षुण्णशक्रेभकुम्भा
युष्मद्देहेषु लज्जां दधति पुनरमी सायका निष्पतन्तः।
सौमित्रे तिष्ठ, पात्रं त्वमसि नहि रुषां, नन्वहं मेघनादः
किञ्चिद् भ्रू भंगलीला-नियमितजलधिं राममन्वेषयामि ॥

शोभते वीरेण सहैव वीरस्य प्रतिस्पर्धिता। तदैव भवति तस्य पराक्रमस्य परीक्षा। कृपणे बल-प्रयोगः प्रयोक्तुरेव ह्रियै। न केसरी मूषिकं प्रहरति, मद-मत्त-मातंग-कुम्भ-भेदेन एव तस्य परितोषः। न कदापि विद्वान् विवदतेऽल्पज्ञेन सह। न स्पर्धते धन-कुबेरः कमलाविलास-लालित. स्तोक-द्रव्येण सह। का तुलना सानुमतो गण्डशैलेन सह। समबलेन सह मैत्री वैरं चोभयमपि शोभते। बलीयसा विरोधे मानिनां पराभवोऽप्युत्सवायैव। न वीरः स्वतो दुर्बलं रोगिणं स्त्रियं शरणागतं, शस्त्र-हीनं प्रमत्तं शयानं वाऽऽक्रामति।

युक्तिरापदि यद् यस्य परस्तन्मानिनो ह्रियै।
विधुर्विधुन्तुदस्येव पूर्णस्तस्योत्सवाय सः॥ (शि. व. २,४५)

प्रकृतिरियं मनस्विना सत्वानुकूलमेवाचरितुम्। न ते जातुचित् लघीयसि महत्त्वमुरसहन्ते। अतः साध्विदमुच्यते—

तृणानि नोन्मूलयति प्रभञ्जनो
मृदूनि नीचैः प्रणतानि सर्वतः।
■ स्वुच्छ्रितानेव तरून् प्रबाधते
महान्महत्येव करोति विक्रमम्"

—०—

# काचः काञ्चनसंसर्गाद्धत्ते मारकतीं द्युतिम्।

सामाजिकस्य मानवस्य जीवनं मरणं च समाज एव भवति. समजोऽपि तिरश्चां तस्यात्मनीनः सम्पद्यते, किम्पुनः सजातीयो मनुष्य.। कामं ॥ भवेत्त्यक्तासङ्गः कानने वसन्, तत्रापि तस्य यथाकथंचन संसर्गो जायत एव। तथाहि—

मुनेरपि वनस्थस्य स्वानि कर्माणि कुर्वतः।
उत्पद्यन्ते त्रयः पक्षा मित्रोदासीनशत्रवः॥

यदा मुनीनामपीयं दशा, का कथा रागापहृताना जनानाम्। अतो न संभवति पर-संसर्गाभावः सर्वथैकान्त-वासो वा। एवमवश्यं-भाविनि पर-सगे कस्य ससर्गं उचितः कस्य वा नेति विचिकित्सायां सतामेव सङ्गः करणीयत्वेन खलानां च परिहरणीयत्वेन प्रतिपादितः।

आत्मनस्तावदूर्ध्वोन्मुखी वृत्तिः। काय-क्लेश-कर्म-विपाकादिमये रागादिबहुले शरीरे ऽस्मिन् न जीवस्य शाश्वती स्थितिः। शुद्धस्य सतश्चित आनन्दमयस्य च ब्रह्मणो ऽभिन्नत्वेन तमेव प्रकाशमयमव्ययमनपायंमरजस्तमोमयं स्वं पदं प्रविविक्षुः स नितरामुद्यतते। येषां संगेन तथाविधा प्रवृत्ति जार्गति रागासक्तस्य चेतसि, त एव वस्तुतः सन्तः। येषा संगतिस्तु चेतनामहरहो ऽवपातयति महा-मोह्-कर्दमे पांकपङ्के सद्विचारानव-लुम्पति, जनयति कुत्सितान् विचारान्, प्रवर्तयति च दुष्कर्म-पथे, कारयति सकृदचिन्तितान्यपि महापातकानि, निमज्जयति दुस्तरेऽज्ञानान्धकारे विष इव परिहरणीय एव तेषा संगः। वह्निज्वाला इवास्पृश्यास्ते। नरकवासस्वरूपस्तन्मध्ये सवासः। क्षणमपि कृतस्तेषा संपर्को बहूनुत्पादयति दोषान्, किं पुनस्तैः सह संभाषणम्, मैत्री निवासो ऽनुरागश्च। अतः प्रतिपादितमभियुक्तैः—

दुर्जनः परिहर्तव्यो विद्यया ऽलंकृतो ऽपि सन्।
मणिना भूषितः सर्पः किमसौ न भयंकरः॥

उष्णोदकस्य सम्पर्केण शीतलमपि जलं भजत्यूष्माणम्। अयस्कान्तो मणि-श्चण्ड-कर-प्रकर-प्रतिफलनेन दहनं सूते; उपलो ऽपि चन्द्रकान्तः शशिकिरण-संसर्गेण क्षरति रपम्। सम्पर्काद् भवन्ति दोषा गुणाश्च। भ्रात्रोरेव सजन्मनोः संग-वशाद् दृश्यन्ते भिन्नाः प्रकृतयः। यथा खलु यवन-सहवास-शिक्षित-गाली-प्रदानस्य शुकस्य

कदूक्तीराकर्ण्य कुपितं नृपं प्रति मुनि-वने वसतो हारीतस्य वचनम्—

गवाशनानां स शृणोति वाक्यमहं हि राजन्वचनं मुनीनाम् ।
न चास्य दोषो न च मद्गुणो वा संसर्गजा दोष-गुणा भवन्ति ॥

प्रभाव एव दुःसंगस्य तादृशो योऽनेकान् दुर्गुणान् जनयति गुणांश्च नाशयति ।

पात्रमपात्रीकुरुते दहति गुणं स्नेहमाशु नाशयति ।
अमले मलं निपच्छति दीपज्वालेव खलमैत्री ॥

अतः परिहृत्य सकलाविनययोनिं तं दुःसंगं सतामेव संगतिः कार्या यया गुणानां संचारो जायते, अगुणोऽपि गुणवान्, अविद्योऽपि विद्वान् अश्रुतोऽपि श्रुतवान् संपद्यते ।

जाड्यं धियो हरति, सिञ्चति वाचि सत्यम्,
मानोन्नतिं दिशति, पापमपाकरोति ।
चेतः प्रसादयति, दिक्षु तनोति कीर्तिम्,
सत्संगतिः कथय, किं न करोति पुंसाम् ॥

अन्यच्च—

दूरीकरोति कुमतिं, विमलीकरोति चेतश्चिरन्तनमघं चुलुकीकरोति ।
भूतेषु किं च करुणां बहुलीकरोति, संगः सतां किमु न मंगलमातनोति ॥

स्फुरति मतिस्तेषां प्रभावेण, उदयते कारुण्यम्, जायते कर्मसु पाटवम्, विलीयते व्यसनं दोषेषु, चलति चित्तं सत्पथे, रमते वृत्तिः सुव्रते ।

हीयते हि मतिस्तात हीनैः सह समागमात् ।
समैश्च समतामेति विशिष्टैश्च विशिष्टताम् ॥

भाग्यवन्त एव सतां संगं लभन्ते, दैवानुकूल्याद् वा यदा कदा जायते पर-मल्पीयानपि भूयांसं गुणं करोति रसायनमिव । छायाऽपि तेषां कल्मषहारिणी जीवनस्य ।

गंगा पापं, शशी तापं, दैन्यं कल्पतरुस्तथा ।
पापं तापं च दैन्यं च घ्नन्ति सन्तो महाशयाः ॥

नैसर्गिकी शान्तिर्भासते सतां मुखे, ययाऽन्येषामपि तापः शाम्यति । पीयूष-धारा इव वाक्प्रसूनान्यश्च्योतन्ति ततो, यया प्रीयते हृदयम्; सञ्जीवनरस इव जीव-विकासनोऽपूर्वः प्रेमास्रवतीव तेषां दृष्ट्यैव स्नातवता गलति कालुष्यं सर्वमपि ।

कीटोऽपि सुमनःसंगादारोहति सतां शिरः।
पद्म-पत्र-स्थितं तोयं, धत्ते मुक्ताफल-श्रियम् ॥

अतो भूयसा प्रयतनीयं दुःसंगपरिहाराय। प्राणपणेनापि च कार्यः सत्संसर्गः यैः सह विरोधोऽपि लाभायैव सम्पद्यते। का कथा मैत्र्याः। अत एवोक्तं केनाऽपि—

काचः काञ्चनसंसर्गाद्धत्ते मारकतीं द्युतिम्।

---

## भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
## क्षीयन्ते चास्य कर्माणि दृष्टे तस्मिन्परावरे ॥

इह जगति द्वे विद्ये निगदिते वेद्ये पराऽपरा च। तत्रापरया विश्वमिदं नामरूपात्मकं सविशेषं वेद्यते। शिष्टा च 'परा यया तदक्षरमधिगम्यते' इत्यनुसारेण ब्रह्मण आत्मनश्च प्रतिपादयित्री, यदक्षरं परमं वेदितव्यं यच्च वेदविदो विदन्ति, यच्च वीतरागा यतयः प्रविशन्ति। यस्मिञ्ज्ञाते न किमपि ज्ञातुं शिष्यते। यथा चोक्तं याज्ञवल्क्येन—'आत्मा वा अरे ज्ञातव्यः, श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इति। आत्मैव ज्ञानाधिकरणं परमात्मा जीवात्मा चेति द्विधा विभक्त एक एवानेकत्वमापन्नः। भोगाधिकरणं देहमधिष्ठायाविद्याकृतं क्लेशकर्मविपाकं भुञ्जान एवास्मिञ्जगति विहरति स जीवात्मा मायया मुक्तोऽसावेव 'अहं ब्रह्मास्मि' 'सोऽहम्' इत्यभेदबुद्धिमापन्नः पुनरपि शाश्वतं स्वरूपं प्रविशति।

नामरूपात्मकेऽस्मिञ्जगति निखिलमपि पदार्थजातं केवलं सन्मयं, चिन्मयमानन्दमयं वा सविकल्पोपाधिकं तस्य प्रजापतेरेव व्यक्तं रूपम्। अतः न केवलमस्मिन्नापातरमणीये विश्वस्मिन्नपि केवलं रन्तव्यम्। कुलालचक्रवन्निरयं प्रवर्तमानस्यास्य जगतो वर्तते कश्चिन्नियन्ता येन प्रेरितो जीवनिवहो विविधानि कर्माण्यनुतिष्ठति।

ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति।
भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया॥

परमत्र विषये द्विविधा प्रतिपत्तिः मानवानाम्। एके देहात्ममानिनः शरीराद् व्यतिरिक्तं न कमपि दृश्यमदृश्यं वाऽऽत्मभूतं मन्यन्ते, परमात्मनस्तु कथैव का। तेषां मतं भोगाधिकरणं देहोऽयमेवात्मा, भस्मसात्कृतेऽस्मिन् सोऽपि नश्यति। अतो भोगानेव ते परमार्थत्वेन स्वीकुर्वाणास्तत्रैव रमन्ते।

"यावज्जीवेत्सुखं जीवेद् ऋणं कृत्वा घृतं पिबेत्।
भस्मीभूतस्य देहस्य पुनरागमनं कुतः॥"

इत्येव तेषां विश्वासः।

अपरे चात्मतत्त्वं स्वीकुर्वाणा मन्यमानाश्च परमात्मसंज्ञं मन्दिरे, तीर्थे वा परिमार्गयन्ते। तेषु केचन तत्प्राप्तये तनुं ग्लपयन्ति, तपःक्लेशं सहन्ते, व्रतानि च चरन्ति। वस्तुतस्ते सर्वेऽपि न यथार्थ-दर्शिनः। न स सर्वथा विस्मर्तव्यो नाप्यन्यत्रान्वेष्टव्यः। अन्तरेव स सर्वेषां रमते बुद्ध्या ज्ञानेनैव द्रष्टव्यो लभ्यश्च। तनुरियमेव हितस्याधिष्ठानं वैकुण्ठलोकश्च। यथोक्तम्—

अष्टचक्रा नवद्वारा देवानां पूरयोध्या।
तस्यां हिरण्मयः कोशः स्वर्लोको ज्योतिषाऽऽवृतः॥

छान्दोग्यास्त्वाममनन्ति—

'अथ यदिदमस्मिन्ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशस्तस्मिन्यदन्तस्तदन्वेष्टव्यं तद् वाव विजिज्ञासितव्यमिति। तं चेद् ब्रूयुर्यदिदमस्मिन्ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशः किं तदत्र विद्यते यदन्वेष्टव्यं यद् वाव विजिज्ञासितव्यमिति। स ब्रूयाद् यावान् वाऽयमाकाशस्तावानेषोऽन्तर्हृदय आकाश उभे अस्मिन् द्यावापृथिवी अन्तरेव समाहिते उभावग्निश्च वायुश्च सूर्याचन्द्रमसावुभौ विद्युन्नक्षत्राणि यच्चास्येहास्ति यच्च नास्ति सर्वं तदस्मिन्समाहितमिति। तं चेद् ब्रूयुरस्मिंश्चेदिदं ब्रह्मपुरे सर्वं समाहितं सर्वाणि च भूतानि सर्वे च कामा यदैनज्जरामाप्नोति प्रध्वंसते किं ततोऽतिशिष्यते इति। स ब्रूयान्नास्य जरयैतज्जीर्यति न वधेनास्य हन्यते। एतत्सत्यं ब्रह्मपुरमस्मिन्कामाः समाहिताः। एष आत्मापहतपाप्मा विजरो विमृत्युर्विशोकोऽविजिघित्सोऽपिपासः सत्यकामः सत्यसंकल्पः‥‥‥।'

एवं स्वान्तस्थ एव तस्मिन्कुत्र व्रजेत्तमवबोद्धुम्? महिमाऽस्यैतादृशो यन्नैवया परिभाषया निरूप्यते।

अणोरणीयान्महतो महीयानात्माऽस्य जन्तोर्निहितो गुहायाम्।
तमक्रतुः पश्यति वीतशोको धातुः प्रसादान्महिमानमात्मनः॥

(क. उ.१.२०)

सन्नप्ययमात्मा न सर्वैर्दृश्येत गुहास्थत्वात्। इन्द्रियाणि हि बहिर्मुखानि कथं वाऽधोक्षजमेतं पश्येयुः।

पराञ्चि खानि व्यतृणत्स्वयंभूस्तस्मात्पराङ् पश्यति नान्तरात्मन्।
कश्चिद् धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन्॥

(क. उ. ४)

आत्मन आत्मत्वं हि—

यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह।
यच्चास्य संततो भावस्तस्मादात्मेति कीर्त्यते॥

स एव शरीरेऽधियज्ञरूपोऽग्निः। यथा गीतायामुक्तम्—

'अधियज्ञोऽहमेवात्र देहे देहभृतां वर।'

तथा च—

अरण्योर्निहितो जातवेदा गर्भइव सुभृतो गर्भिणीभिः।
दिवे दिव ईड्यो जागृवद्भिर्हविष्मद्भिर्मनुष्येभिरग्निः॥
एतद्वै तत्॥ (क. उ. २, १, ८)

इत्थं सोऽग्निश्चायनीयः श्रेयस्कामैः। चयनप्रकारस्तु न दुर्लभः। तथाहि—

स्वदेहमरणिं कृत्वा प्रणवं चोत्तरारणिम्।
ध्याननिर्मथनाभ्यासात्पश्येद्देवं निगूढवत्॥

तस्मिन्नेव दृष्टे, साक्षात्कृतेऽनुभूते च परमार्थसिद्धिः। स एव हि चरमः पुरुषार्थो यत्र लीनो न भूयो मृत्युमृच्छति, उदके प्रास्तो लवणइव तत्रैव लीयते। यथाह याज्ञवल्क्य. "स यथा सैन्धवखिल्य उदके प्रास्त उदकमेवानुविलीयते नाहास्योद्ग्रहणायेव स्याद्यतो यतस्त्वाददीत लवणमेवैवं वा अरे इदम्महद्भूतमनन्तमपारं विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानु विनश्यति न प्रेत्य संज्ञास्तीत्यरे ब्रवीमि।" (बृह) न चात्र विश्वस्मिन्नपि किमपि तद्व्यतिरिक्तमस्ति। स एव विविधरूपो वर्तते।

"यत्र हि द्वैतमिव भवति तदितर इतरम्पश्यति तदितर इतरञ्जिघ्रति तदितर इतरमभिवदति तदितर इतरं शृणोति तदितर इतरम्मनुते तदितर इतरं विजानाति। यत्र त्वस्य सर्वमात्मैवाभूत् तत्केन कम्पश्येत्तत्केन कञ्जिघ्रेत् तत्केन कमभिवदेत्तत्केन कं शृणुयात् तत्केन कम्मन्वीत तत्केन कं विजानीयात्। येनेदं सर्वं विजानाति तं केन विजानीयाद् विज्ञातारमरे केन विजानीयादिति।" (बृह.)

स एवास्याधिष्ठाता नानारूपोऽत्र इत्यो ज्ञेयश्च।

प्रजापतिश्चरति गर्भे अन्तरजायमानो बहुधा विजायते।
तस्य योनिम्परिपश्यन्ति धीरास्तस्मिन्ह तस्थुर्भुवनानि विश्वा॥
वेनस्तत्पश्यन्निहितं गुहा सद् यत्र विश्व भवत्येकनीडम्।
तस्मिन्निदं सं च विचैति सर्वं स ओतः प्रोतश्च विभुः प्रजासु॥
(यजु ३२।८)

अयमेवानन्दः, अस्मा एवान्नमयं, प्राणमयं, मनोमयं विज्ञानमयं च कोशमतिक्रम्य पराक्रममाश्रियत आत्मा। 'रसो वै सः, रसं लब्ध्वैवायमानन्दी, भवति।'

सुखमात्यन्तिकं यत्तद् बुद्धिग्राह्यमतीन्द्रियम्।

तथा च—

'यल्लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः।'

कथं नाम न स दुर्विज्ञेयो ज्ञेयो यस्य ज्ञानमन्तरा न मृत्युमत्येति—

वेदाहमेतं पुरुषम्महान्तमादित्यवर्णं तमसः परस्तात्।
तमेव विदित्वाति मृत्युमेति नान्यः पन्था विद्यतेऽयनाय॥

मृत्युरेव हि महद् भयं लोके तद्यदि जितं सर्वथाऽभयमात्मन.।

पराचः कामाननुयन्ति बालास्ते मृत्योर्यन्ति विततस्य पाशम्।
अथ धीरा अमृतत्वं विदित्वा ध्रुवमध्रुवेष्विह न प्रार्थयन्ते॥
(क. उ. २, १, २)

महानयं संसारमार्गो दुर्गमो यत्र पतिता जीवा मज्जन्ति मोहान्धकारे, स्वपन्ति च विषयनिशायाम्। तेषामेव दुःखम्, तेषामेव संशयः, तेषामेव मृत्युभयम्। जाग्रतामप्रमादानां च तत्र कुतो भयम्, कुतो दुःखम्, क्व शंका?

अविद्यायामन्तरे वर्तमानाः स्वयंधीराः पण्डितंमन्यमानाः।
दन्द्रम्यमाणाः परियन्ति मूढा अन्धेनैव नीयमाना यथान्धाः॥
(क उ. १, २, ५)

ते प्रेयोमार्गं श्रयाणा संसारबन्धनान्यनुबध्नन्ति।

विज्ञानसारथिर्यस्तु मनः प्रग्रहवान्नरः।
सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्॥ (क. उ. १, ३, ९)

स ज्ञातवान् पुरुषस्तु—

"स पर्यगाच्छुक्रमकायमव्रणमस्नाविरं शुद्धमपापविद्धम्।
कविर् मनीषी परिभूः स्वयम्भूर्याथातथ्यतोऽर्थान् व्यदधाच्छाश्वतीभ्यः समाभ्यः॥" (ईश. ८)

एवं च—

अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यत्।
अनाद्यनन्तं महतः परं ध्रुवं निचाय्य तन्मृत्यु मुखात्प्रमुच्यते॥

तस्य ज्ञानमेव चरमः पुरुषार्थः। स ज्ञातवान् सर्वत्रैकमेवात्मानमनुपश्यति। न स परस्य कष्टाय क्रमते। निर्मोहो विशोको धीरश्च भवति।

यस्तु सर्वाणि भूतानि आत्मन्येवानुपश्यति।
सर्वभूतेषु चात्मानं ततो न विजुगुप्सते॥ (ईश. ६)

तथाभूतस्यैव चोपदेश —

ईशावास्यमिदं सर्वं यत्किञ्च जगत्यां जगत् ।
तेन त्यक्तेन भुञ्जीथा मा गृध कस्य स्विद्धनम् ॥ (ईश १)

ससारबन्धहेतु सपन्मयीमसभूतिमुपासमाना एवात्महन. । तेषामेव कृते ऋषेरुद्बोधनम्—

उत्तिष्ठत जाग्रत प्राप्य वरान्निबोधत ।
क्षुरस्य धारा निशिता दुरत्यया दुर्गं पथस्तत्कवयो वदन्ति ॥
(क उ १।३।१४)

ततो जागृवाना कर्तव्य सस्य परमतत्त्वस्य ज्ञानेनामृतत्वप्राप्तिरेव—

न सदृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम् ।
हृदा मनीषा मनसाऽभिक्लृप्तो य एतद् विदुरमृतास्ते भवन्ति ॥

एव च—

यदा सर्वे प्रभिद्यन्ते हृदयस्येह ग्रन्थय ।
अथ मर्त्योऽमृतो भवत्येतावद्ध्यनुशासनम् ॥ (क. उ २, ३, १५)

अतो यावन्नासौ पुरुषो विदितस्तावदज्ञ एव जन। । स च अगत्यन्तर्हित ।

हिरण्मयेन पात्रेण सत्यस्यापिहित मुखम् ।
तत्त्व पूषन्नपावृणु सत्यधर्माय दृष्टये ॥

दृष्टे च तस्मिन्ससया नश्यन्ति । अत साध्वेवोक्तम्—

भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसशया. ।
क्षीयन्ते चास्य कर्माणि दृष्टे तस्मिन्परावरे ॥

---

# आशा हि परमं ज्योतिर्नैराश्यं परमं तपः

इह जगति सुख-दुःख-बहुले संपद्विपद्विषमायिते नैकदशाकषायिते मृत्युभय-विरसीकृतेऽपि भवन्ति प्राणिनां विविधाः संव्यवहाराः। नास्ति कोऽपि जनो यः खलु क्लेशकलुषितमतीतं विचार्य दैन्यमलिनं च वर्तमानमप्यनुभवद् न शुभं भविष्यन्तमाशास्ते। जानन्तोऽपि लोका जीवितं क्षणभंगुरं प्रयतन्ते सरसीकर्तुमिदम्। दारिद्र्य-दारित-मना अपि दुर्गतो भाविनि काले संभावयत्येव वैभवभूयिष्ठमात्मानम्। इति विफलितकृषिरपि कृषीवलो द्विगुणफलाशया वपत्येव बीजं क्षेत्रे तावतैव चोत्साहेन सिञ्चति रक्षति च। मृत्युभयेऽविकलेऽपि को न प्रगतये समाचरति पूर्णं प्रयासम्। जातप्रायस्य शिशोरपि वात्सल्यविवशा सवित्री संभावयत्येव वयोविलास-सुभगं बाल्यं निखिल-सौख्य-सरसी-कृतं यौवनं सन्ततिफलितं विवाहं जरसि च तेन विधीयमानां सेवाम्। प्रकृतिरियं प्राणिनां भूतस्य स्मरणं भविष्यतश्चाशा।

वस्तुतः प्रेरणादात्रीयमाशा भूतानां यया कृच्छ्रबहुलमपि जीवनं सौख्यमयं विधीयते। विरहिणी मिलनाशयैव प्राणाधिकस्यापि वल्लभस्य विरहकालं धान्त्या व्यत्यापयति।

आशाबन्धः कुसुमसदृशं प्रायशो ह्यङ्गनानाम्
सद्यः पाति प्रणयिहृदयं विप्रयोगे रुणद्धि ॥ (पू. मे.)

न निराशस्य स्फुरतः करौ किमपि विधातुम्, न प्रवर्तते मतिः, क्षीयते बलम्, अपह्रीयते साहसम्, सीदति उत्साहः, नश्यति कान्तिः, म्लायते तेजः, शाम्यति प्रतापः, नश्यति पौरुषम्। न स जीवितुमपि प्रभवति तथा सन्। कल्पनाः, योजनाः, प्रेरणाः, प्रवर्तनाः, प्रार्थनाश्च सकला अपि भविष्यति साधुसंभावनामूलाः।

आशाबंहिता एव जनाः प्रभवन्ति भुवि महान्ति कार्याणि कर्तुम्। त एवाभ्रंलिहानि भवनानि निर्मापयन्ति, पाश्चमहाराश्रणाः सुयसाः शिदान्ते, देशान्तराणि गन्तुमुपगृह्णन्ते। व्यवसायिनो सायासेनैव वाणिज्य-

मनुतिष्ठन्ति । नवदम्पती मंगलमयस्य एव भाविनो जीवनस्य कामनयैव दाम्पत्ये सरसतामनुभवतः । कश्चित् छात्रोऽपि पूर्वमेव परीक्षोत्तरणे विद्यालाभे निराशश्चेन्न जातु परीक्ष्यतां स्वीकुर्यादध्ययनं वा समाचरेत् । आशामन्तरा न लोको जीवितुमपि प्रभुः । आशावादपुरुकया दृष्ट्या (optimistic outlook) सबला जातिरेव विश्वं न्यक्कर्तुं क्षमा । किं तादृशो वराकः कर्तुं प्रभवति कर्मासाधारणं यः खलु उत्तिष्ठतु शयानो वा जीवितमाक्रोशन् विधातुं मृत्युमेव कामयते । अत्र तु तादृश एवारोढुं क्षमः प्रगतिगिरिशिखरं यस्य भावना नित्यम्—

"पश्येम शरदः शतं, प्रब्रवाम शरदः शतं, शृणुयाम शरदः शतमदीनाः स्याम शरदः शतं भूयश्च शरदः शतात् ।"

इति—

'ततो पश्यन्ननुब्रुवन् दीर्घमायुरसमिवेज्जरिमाणं जगम्याम् ।'

इत्येवंविधा च वर्तते । विपदम्बलमसनिविडितेऽपि कण्टकसंकुले ऽपि साधनविकले ऽपि च कर्मपथेऽतुलममन्दमप्रघृष्यमुत्साहस्नेहप्रदीपितमाशादीपं वहन् साधारणोऽपि जनः कल्पते सफलताश्रियं चुम्बितुम् । नैराश्यकुहूमलिनाशयस्तु सबलोऽपि, ससहायो ऽपि ससाधनोऽपि त्यज्यत एव फललक्ष्म्या । सुखमयमपि जीवनं विषमयमिव मधुरमपि भोजनं विरसतामेति तस्य । अत आशैव उत्कृष्टतमं ज्योतिरप्रदीप-कृतम्, अरवि-प्रभासितम्, अशशिकर-कलितम्, अनग्नि-शिखा-प्रसूतम् ।

परं निन्द्यते ऽपि सा विचारकैरितरैः । यदा परतो धनलाभ-कामना, सुखैषणा वा ऽऽशा-पदेन गृह्यते तदा न प्रशस्यते । विरक्तिमार्गावलम्बिनः परमार्थ-परिपन्थितामस्या मन्यन्ते । एनामधिकृत्य हि मानवः को न कदर्थनामनुभवति ? नीचानामपि धनिनां स चाटुकारितामङ्गीकरोति, न तत्कृतामवमाननां गणयति, न भर्त्सनया लज्जते, कान्तारपथमप्यतिक्रामति, तरति दुर्गमानपि जलनिधीन् । अनया क्षिलीकृतो निन्दितान्यपि कर्माणि कर्तुमुद्यतते । अतएव निन्दता साधुक्तं भर्तृहरिणा—

आशा नाम नदी मनोरथजला तृष्णातरंगाकुला
रागग्राहवती वितर्कविहगा धैर्यद्रुमध्वंसिनी ।
मोहावर्तसुदुस्तराऽतिगहना प्रोत्तुङ्गचिन्ता तटी
तस्याः पारगता विशुद्धमनसो नन्दन्ति योगीश्वराः ॥ (वै. श. ४५)

आशावन्तो हि दुर्मदानां धनिनां कटुवचनानि सहन्ते, सुखमयमपि जीवनं विदधति कटुकायितम् । सकलमपि भुवनं तेषां सत्कारपात्रं भवति—

"आशाया ये दासास्ते दासाः सर्वलोकस्य ।
आशा येषां दासी तेषां दासायते लोकः ॥"

न ये कामपि लाभसभावना जगत आवहन्ति सम्राजोऽपि ते न तृणाय मन्यन्त—

वयमिह परितुष्टा वल्कलैस्त्व दुकूलै
सम इह परितोषो निर्विशेषो विशेष ।
स हि भवति दरिद्रो यस्य तृष्णा विशाला
मनसि तु परितुष्टे कोऽर्थवान् को दरिद्र ॥ (वै श ५०)

वस्तुत आशाग्रहग्रस्ताना जीवन विडम्बनैव भवति ।

एहि गच्छ पतोत्तिष्ठ वद मौन समाचर ।
एवमाशाग्रहग्रस्तै क्रीडन्ति धनिनोऽर्थिभि ॥

नित्यमेवाधिकाधिक विभवादिकमाशासानाना न कदापि भवति शान्ति, अशान्तस्य च सुख कुत । अत उक्त केना ऽपि—

आशा हि परम दु ख नैराश्य परम सुखम् ।
सद्भिरस्मादेव कारणात् सर्वप्रथममियमाशा निन्द्यते ।

'चाह गई चिन्ता मिटी मनुआ बेपरवाह ।
जिनको कछू न चाहिये तेई साहसाह ॥"

एव निष्कर्षे व्यवहारपक्षे जगद्व्यापारहेतुभूततया जीवनाधाररूपिणी नोपेक्षणीया तावदाशा, पर निवृत्तिपक्षे परस्माल्लाभेच्छाया च सा गर्ह्य यतस्ता-मविनीभूय मनस शान्तिरपि दुर्लभा स्यात् । तत साधूक्तम्—

'आशा हि परम ज्योतिर्नैराश्य परम तप ।'

---

# 'यस्मिञ्जीवति जीवन्ति बहवः, सोऽत्र जीवतु ।'

अस्मिन्नाना-चरित्र-विचित्रिते विविध-विभूतिमति जगति दृश्यन्ते प्राणिनो नैकविधाः प्रवृत्तयः । केऽपि बहु-साधन-साधित-सकलसंपदोऽपि नित्यमेव विलासैक-संग्रह-परा आत्म-पोषण एव सकलमपि जीवनं यापयन्ति । क्षणमपि न ते कमपि स्वकीयेन धनेन, वचनेनान्तःकरणेन वा सुखयितुं क्षमाः । शुनामिवोदर-पोषणैक-व्रताना शूकराणामिव विषयलम्पटानाम्, मत्कुणानामिव पर-रक्त-पायिनाम्, मत्कुणानामिव परोपजीविनाम्, लुब्धकानामिवान्य-जीवापहारिणाम्, स्वर्णकाराणामिव पश्यतोहराणाम्, लोक-चस्मराणा तेषां धूमकेतूनामिवोदयो भुवन-विनाश-पिशुन एव । इतरेषां विपदि स्वकीयायां सम्पदि च ते हृष्यन्ति; क्षुत्क्षाम-कण्ठेऽपि निखिले जनेऽनावश्यकमाकण्ठं भुञ्जाना अजीर्ण-ग्रस्ता अपि कञ्चन वीक्ष्य भक्षयन्तमुदर-शूलेन म्रियन्ते । संसारो भवति धनकृतः, परं भारेणेव तस्यैते खलाः कदर्थ्यन्ते ।

तद्-व्यतिरिक्ता भवन्ति केचन कामं विरसाः परं सरलाः परविपदि तरलित-हृदः, येषां जीवितस्य पलमात्रमपि पर-हित एवोपयुज्यते । आत्मार्थेऽपि तेषां न स्वार्थे; कण्ठ-गतेष्वपि प्राणेषु न जातु जहति तेऽन्य-हित-व्रतम् । यदि सत्यं तेषामेव सतां शशि-कराणामिव पर-ताप-हारिणाम्, सुमनसामिव सुरभित-मनसाम्, श्रीखण्ड-खण्डानामिव दाह-लोपिनां जीवितं जीवितम् । धन्या तावदेकाऽपि घटी याऽन्य-कार्ये उपयुज्यते । पर-हित-व्रतिनां साधूनां जन्मैव भुवन-कल्याणाय जायते । कथं न ते तथा भवेयुः ? मानुषं तावदिदं शरीरम् ! नास्य कृतार्थता कुक्षिंभरिता-मात्रेण ।

जातः कूर्मः स एकः, पृथु-भुवन-भरायार्पितं येन पृष्ठं
श्लाघ्यं जन्म ध्रुवस्य भ्रमति नियमितं यत्र तेजस्वि-चक्रम् ।
संजात-व्यर्थ-पक्षाः परहित-करणे नोपरिष्टान्न चाधो
ब्रह्माण्डोदुम्बरान्तर्मशकवदपरे प्राणिनो जात-नष्टाः ॥

(वं. दा.)

पक्षिणोऽपि स्वोदर-पूरणं विदधति । किं तेनैव कर्मणा चतुरशीति-लक्ष-योनि-चंक्रमणानन्तरमुपलब्धस्य मानुष्यकस्य साफल्यम् ? किमपि गुरुतरं कृत्यं कारयिषति शरीरेणानेन सुदुर्लभेन धाता । वृथैव यैरर्पितोऽयमवसरः, पश्चात्ताप एव तेषां भवति ।

नाभ्यस्ता भुवि वादि-वृन्द-दमनी विद्या विनीतोचिता,
खड्गाग्रैः करि-कुम्भ-पीठ-दलनैर्नाकं न नीतं यशः ।
कान्ता-कोमल-पल्लवाधर-रसः, पीतो न चन्द्रोदये,
तारुण्यं गतमेव निष्फलमहो शून्यालये दीपवत् ॥ (वै. श. ८६)

वस्तुतो ये स्वजीवनमिहाऽऽगत्य लोक-हिताय, समाज-संस्काराय, दरिद्र-दैन्य-दुर्दलनाय, पापि-पाप-प्रणोदाय, दुर्बल-रक्षणाय, देशोद्धाराय चोत्सृजन्ति, महनिशं परहित-साधन-रताः स्व-योग-क्षेममपि विस्मरन्ति, सफलीकृतं तैर्जीवितम् । तेषामेव सवित्री सवित्री, तेषामेव कुलं कुलम्, तैर्भूषितैव धरणी धरणी । पावनीक्रियते तैरिदं भुवनम् ।

एकेनापि सुपुत्रेण सिंही स्वपिति निर्भयम् ।
सहैव दशभिः पुत्रैर्भारं वहति गर्दभी ॥

विरला अपि ते भूषणता भजन्ति लोकस्य । खेदं तेऽनुभवन्ति परहित-क्षमताऽभावे ।

कस्त्वं भोः कथयामि, दैवहतकं मां विद्धि शाखोटकं
वैराग्यादिव वक्षि ? साधु विदितम्, कस्मादिदं कथ्यते ।
वामेनात्र वटस्तमध्वग-जनः सर्वात्मना सेवते
न च्छायाऽपि परोपकार-करणे मार्गस्थितस्यापि मे ॥

अजा-गल स्तनस्येव तस्य जन्म निरर्थकमेव येन न रक्षिता अबलाः, न येन ससहाया असहायाः, न पाठिता पाठार्थिनः, न तर्पिता अर्थार्थिनः, नानुगृहीता अनुग्रहार्थिनः, न दमिता अरयः, नोन्नीतं कुलम्, न धन्यीकृतः समाजः, न साधिता साधुता । यस्याश्रयेणानाथा अपि सनाथतां यान्ति, अबन्धवोऽपि बन्धुतां भजन्ते, अशरणा अपि सशरणतां व्रजन्ति, अबला अपि सबलतां गच्छन्ति, हताशा अपि प्रसाधिताऽऽशतामाश्रयन्ति, तस्य जनुषैव धन्यीकृता जननी । पयोमुचामिव ताहशा-मुदयो लोकाभ्युदयाय खलु । अत साध्विदमुच्यते—

यस्मिञ्जीवति जीवन्ति बहवः, सोऽत्र जीवतु ।
वयांसि किन्न कुर्वन्ति चञ्च्वा स्वोदर-पूरणम् ॥

—•—

# संघे शक्तिः कलौ युगे।

आसीत् कोऽपि कालो यदा मानवस्य व्यक्तिगतं बलमेवापेक्ष्यत मानादिरक्षणाय। स्ववीर्यगुप्ता हि मनोः प्रसूतिरिति सदैवायुज्यत कथनम्। परं चिरातीतं तद् युगम्। अद्य न तावती शक्तिः, न तेजः, न प्रभावः, नापि क्षमता मनुष्ये यदेकलः कश्चिन्महत्या अपि सत्तायाः प्रतिरोधे प्रभवेत्। कामं वैयक्तिकीमापदं प्रतिकर्तुं शक्नुयात्सः। समुदायकृतान्यत्याक्रमणानि, येषामुपायोऽपि सामवायिकं बलमेव। वज्रं हि वज्रेणैव तक्ष्यते। अतो वर्तमाने संघ एव सर्वातिरिक्ता शक्तिः।

यद्यपि संघोऽपि व्यक्तीनामेव कल्प्यते, व्यक्तयः सशक्ताश्चेत् संघो ऽपि तासां शक्तिमान् स्यात्, प्रभवत्कस्याऽप्युपकाराय विपदां वा प्रतीकाराय। निर्बलानां समवायस्य तु न भवेत्काऽपि प्रभविष्णुतेति संघहेतो व्यक्तिगतं सामर्थ्यमेव प्रथमं तावदपेक्ष्यम्, सत्यमेतत्। सबलाना संघटन बलातिशयाय कल्पते। परं निर्बलानामपि समुदायो न निर्बलो ऽपि तु संहतशक्तिमत्त्वादधृष्यतां व्रजति। तथा चोक्तम्—

बहूनामप्यसाराणां समवायो दुरत्ययः।
तृणैरावध्यते रज्जुर्बध्यन्ते मत्तदन्तिनः।

तृणं नाम भवति लघुतमं द्रव्यम्, तत्कल्पितेनाऽपि दाम्ना यदि मत्त-मातंगा निबद्धुं शक्यन्ते तर्हि हस्त-पादादिमतां विवेक-सहायानां मानवानां संघस्य शक्तिः किंविधा सम्पत्स्यते इति विचारणीयमेव।

पाणेरेकस्यापेक्षया युगलस्य शक्तिर्द्विगुणा। एवमेव पृथक्पृथग् यतमानानां बलं महति कार्ये बहुधा न फलिनतां व्रजति विशेषतश्च तिष्ठति बहुपरिमाणे प्रतिबले। परं संघशक्त्या महानपि रिपुः पराजीयते। अग्निस्फुलिंगा अपि निचिता एकत्र दहन्ति ग्राममपि। विन्दुशः संचितमपि जलं शमयति करालतामुपबृंहस्य। भूयसा समुदितान्यपि तारकाणि विभासयन्ति गगनांगणम्। सिंहोऽपि बलाद् धृष्यते शृंगायुधाभिरजाभिः। परं संघीभावस्य न तावत् समर्द एव जनानामर्थः। पर्वंखि समवेता लक्षशो

ऽपि जना न संघर्तां व्रजन्ति, सहसा ऽपि समागते संकटे प्राणरक्षणार्थं पुच्छमुत्थाप्य पलायन्ते । बुद्धि-मनः-करणानामिवानेकव्यक्तीनामैकमत्यमेक-व्रतत्वम् समनस्त्वम्, सयोगत्वं ससंकल्पत्वं च संघीभावायावश्यकम् । यथाह वेदः—

सहृदयं सांमनस्यमविद्वेषं कृणोमि वः ।
अन्यो अन्यमभि हर्यत वत्सं जातमिवाघ्न्या ॥

समानी प्रपा सह वोऽन्नभागः समाने योक्त्रे सह वो युनज्मि ।
सम्यञ्चोऽग्निं सपर्यतारा नाभिमिवाभितः ॥
(अ. वे. ३,३०)

समानी व आकूतिः समाना हृदयानि वः ।
समानमस्तु वो मनो यथा वः सुसहासति ॥
(ऋ. १. १९१,४)

इत्थमेकीभूतमनस एव संघीभावाय कल्पन्ते । परं न संघभावना ऽनायासेन संभवति । नेतुः शासन-पालनं तदर्थमनिवार्यम् । न च नेतारं विना कस्यापि संघटनस्य साफल्यम् । तं विना हि सर्वे स्वेच्छयैव कार्यं कुर्युः । तेन च सर्वथा ऽव्यवस्था स्यात् । अनुशासन-सूत्रेणैव भिन्नरुचयो ऽपि लोका ऐक्य-बद्धाः सम्पद्यन्ते । तदुक्तम्—

"अनायका विनश्यन्ति नश्यन्ति बहुनायकाः ॥"

सेनानाम्, रक्षापुरुषेषु, (*Police*) संहितेषु च शासकेषु, बालचरेषु (Scouts) रक्षादलेषु (Home Guards), क्रीडकमण्डलीषु (Games-team) संघभावना (Party-spirit) अनुशासनं च सर्वथा ऽनिवार्यं । संकटकाले जनानामेतादृशाः संघा एव साहाय्याय कल्पन्ते ।

न केवलमस्मिन् जनयुगे, पुराऽपि संहननस्या ऽभूदावश्यकता । तदभावे च महती हानिरस्माभिरनुभूता । महाभारत-युद्धस्य कारणं परस्परं भेद एवासीत् । संहितीभूय कार्यकरणस्य शक्तेरभावेनैव स्तोकसंख्या अपि यवना भारतमधिकर्तुं प्राभवन् । अन्यदाः शासकास्तु मिथः असहायमाना वैर-प्रति-शोधायाक्रामकाणामेव साहाय्यमाचरन् । स्मरन्तु युधिष्ठिरस्य वचनम्—

परस्पर-विरोधे तु वयं पञ्च शतं च ते ।
अन्यैः सह विरोधे तु वयं पञ्चशतोत्तरम् ॥

अत एवाल्पीयास एव गोरण्डा भारतीयान् परस्परं योधयित्वा स्वयं महादेश-मिममधिचक्रुः। अधुना स्वतन्त्रे ऽपि भारते पुनः संघभावना लुप्ता लक्ष्यते। सर्वे संकीर्ण-दृष्टय सम्प्रदायस्य, धर्मस्य, जातेर्दलस्य भाषायाः, प्रान्तस्य चापदेशेन देशं खण्डशः कर्तुं प्रयतन्ते। न ते दूरदर्शिनः; ये स्वकलहेन प्रगल्भं चेष्टमाना मातृभूमिं संशयसागरे मज्जयन्ति। भद्रं तदैव, यदा ते स्वार्थ-भाव परित्यज्य भारतीयतामात्र-मनुरुध्य मन्त्रमिममनुसरेयुः—'संघे शक्तिः कलौ युगे' इति।



## किं विश्वरूपो मानवः ? ( Is man a multi-personality ? )

मानवः सृष्टि-भूषणम् ; तस्य चैतन्यस्य विस्तारः कलासु, शिल्पेषु, सर्वेष्वपि विद्याक्षेत्रेषु, गम्येष्वगम्येषु च विषयेषु द्रष्टुं शक्यः। स एको हि नामातीन्द्रियान् ज्ञानैकाधिगम्यान् विषयानपि सीमातीतान्तर्दृष्ट्या साक्षात्कर्तुं प्रभवति, दैव्यासुरी च प्रवृत्तिस्तस्यात्म-क्षेत्रमधितिष्ठत.। प्रथमाया प्राबल्ये स विश्व-कल्याणाय कल्पते, अपरस्याः सबलत्वे तु जगतो रुजे। समस्तानां कल्याणानामुपाधीनां च स स्फुट निधानम्।

न केवलं शारीर-बलेन, आत्मबलेनापि गुप्ततरेणाज्ञात-पूर्वाण्यपि, अदृष्टचराणि कुतोऽप्यश्रुतान्यपि क्षेत्राणि साक्षात्कर्तुं दुरधिगमानपि विषयान्समधिगन्तुं क्षमोऽसौ।

मनुजस्तावदभिमतोऽखिल-जगद्बीज-भूतस्य परमात्मनो व्यक्तरूपः प्रतिनिधिर्यस्तस्य कलामात्मनः प्रतिभया, पौरुषेण साधनया च लब्धुं यतते। यो विश्वात्मा 'एकोऽहं बहु स्यां बहु प्रजायेय' इति संकल्पेन सूक्ष्ममतीन्द्रियमकरणगोचरमात्मानं जगद्रूपेण व्यक्तीभावमधिगमयति, सोऽपि विश्वरूपो विराडिति कथ्यते। तस्य व्यक्तित्वं नैकधा प्रतिभात्यस्मिन् विविध प्रवृत्ति-मति जगति। प्रजापतेः शक्तेः साक्षादुपधानं नरोऽद्य स सर्वेष्वपि क्षेत्रेषु यतते समतिशेतुम्।

विश्वात्मतया जगति व्याप्तस्य तस्य गतिः क्व व्याहन्यते ? अपाराणामगणितनक्र-मकरचक्र-जलावर्त-शतवक्र-मरुद्राल-हिल्लोलजाल-दुष्पाराणामकूपाराणां वक्षःसु, जलधरघटाभिदुरासु मनतरुलतातृणश्यामलिममेदुरान्धकारासु दुरारोहासु गिरिशिखासु क्रीडाशिखरिष्विव स्वैरं विहरन्, स्वच्छन्दं खग इव च नभसि पर्यटन्, सदाशीतेष्वनुपभुक्तचण्डरश्मितापेषु प्रालेयालयेषु प्रदेशेषु स्वालय इव सुखं वसन् विज्ञान-बलेन सततोद्यमेन च दुर्धर्षायाः प्रकृतेरपि विजेताऽसौ।

वैज्ञानिकः सन् सोऽद्य दुर्दिव्यचिकित्स्यानां रुजां नाशायामोघशक्तीनोषधीनाविष्करोति, आसुर्या प्रतिभयाऽधिष्ठितः संहारशक्तिं स्वकरे संगृह्य निर्माणबीजैरेवाणुभिः सृष्टिविध्वंससाधनानि निर्मिमीते, सिंहादिमरुष्णोष्णरक्तपायिभिर्हिंस्रजीवैः रुद्ध-मानव-गति प्रसरेषु कान्तारेषु विद्युद्दीपोज्ज्वल-विभा-विभासितहर्म्यराजिचक्रचकायितमानवाधि-

वृन्दानि नगराणि प्रतिष्ठापयति येषु निवासाय्याकलनीयविभवलालिता धनपतयोऽहमहमिकया स्पर्धन्तेतमाम् । एकतः स एतादृशानि विस्मयकराणि सृष्टिश्रेयःसाधनानि प्रजनय्य विधातुर्महिमानमधिजिगमिषति, परतश्चाग्नि-गोलकैर्बहुजन-संकुलानि महापुराणि समूलदाहं निर्दह्य प्रलयकारिणः पशुपतेः पदमपजिहीर्षति ।

स एव मानवोऽधुना स्वाप्रतिहत-शक्तिप्रभावात् मुख्यतमायाः शक्तेः पदमधिगतवान् स्वभावनयैव कस्मिन्नप्यदृष्टचरे परमात्मनि विश्वसितीति मतः स स्वयमीश्वरस्य कल्पयिता जनयिता च मन्यते । विज्ञानवित् सन् सर्व-विधानां विधानम्, आश्चर्याणां कर्ता, संहार-यज्ञस्यानुष्ठाता, सृष्टिक्रतोः प्रतिष्ठापयिता, रुजामपहर्ता, शिल्पानामुद्भावयितोन्नमयिता च । नासाविदानीमात्मानं सार्वकालिकं मृत्युकवलं मनुते मृत्युञ्जयत्वं लब्धुं च सततं प्रयत्नमनुतिष्ठति ।

अद्य स एव प्रभुः, ईश्वरः, श्रद्धयोपास्यः, सेव्यस्तोष्यश्च । तस्मिन् हृष्टे, तुष्टे, पुष्टे, स्वस्थे, सुस्थे, आरोग्य-शालिनि, अधिगतसकलजीवनीयानिवार्य-वस्तुजाते, विबुधि, कला -मधिजग्मुषि, विश्वमेवेदं त्रिविष्टप-पदवीमधिष्ठास्यति । स एव कौपीनधारी दरिद्रो नारायणः सुप्तावस्थोऽपि मानव-मनांसि प्रबोधयितुं भिक्षा-पात्रं करे दधानो रथ्यासु परिभ्राम्यति ।

इन्द्र-स्पृहणीय भोगान् भुञ्जानः स एव निर्धनान् धनमदान्धः कीट-मशक-कल्पान् परिपश्यति । समाज-सेवी दुर्गतानां रोगिणां परिचर्यां चरन्नश्रूणि प्रमार्जयन् मधुरवचनैर्हृत्सु मोदं संचारयन् करुणा-प्रतिमूर्तिर्विभाति । साम्राज्यलोलुपोऽन्ध एव चण्डरण-ताण्डवं वितण्डयन् स्वैरसुप्तेषु लोकेषु विनाशवज्रमनभ्रं पातयति । जनानां प्राणदाताऽन्नदाता तुष्टिदाता, पुष्टिदाता, कर्ता, भर्ता संहर्ता च स एव । तस्यैव विस्तारः सर्वत्र । स एव प्रभवति निखिलेषु क्षेत्रेषु । तस्यैव महिमानं गायन्मानानि स्थावर-जंगमानि प्रत्यक्षमप्रत्यक्षं वा गायन्ति । स. विराट् विश्वरूपः भूमा, सर्वथा चेतरेषां विशेषणानां भाजनम् । कैर्नाम शब्दैस्तस्य गरिमा स्तुवेत ?.

केवलमेतावदेव वक्तव्यं यत् तस्य दैव्याः प्रतिभायाः प्रसार एव जगत उपकाराय क्षमो न स्यात्पुनः । पौराणिको नारायणः स्वसृष्टान् प्राणिनः स्वयं न घ्नन्ति तु प्रलयं-कर-त्रिपुरारिद्वारेणैव घातयति । परमयं मानवाकारः स्वयमिमां जगतीं नानाविध-साधनैः प्रविश्याऽऽविष्कृतैः सुरलोक-कल्पां परिकल्प्य स्वकरैर्णैवाग्निवर्षं न दद्देत् । एषा विरोधिता मानवस्य विश्वरूपत्वं जगतोऽश्रेयसे प्रत्याययति ।

तथा चेत्सा, तर्हि 'सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्' इति शब्दैर्वर्णितः स मानाशिरः-कर-पदवाङ्गः पौराणिकं स्वरोचिषरूपमेतां भजन् सृष्टेर्नाशायैव कल्पिष्यत इति निश्चप्रचम् ।

—०—

# अणुशक्तिः

विश्वस्यैतिहास आसीत्तद् विस्मयकर दिन यस्मिन्नि स्पन्दश्वासेन, स्तिमित-नाडी गतिना, स्थगित-पक्ष्म तारक चक्षुषा मानवेन श्रुतं यदमेरिकासैन्याधिकारिभि पातितेनैकेनाणुपिण्डेन ( Atom-bomb ) जयपाणिदेशस्य ( जापान ) नागासाकिनगर लक्षत्रय जन कोलाहलपूरित निमिष-मात्रेण भस्मसादनुष्ठितम् । न तत्र मानव, न भवनम्, न तरु, न तृणम्, न च क्षुपम् (Plants) क्वाप्यशिष्यत । सकलाऽपि शस्य श्यामला धरणी क्षणेन पक्व मृण्मयीव कपिलोवरायिता च । सैव दशा हिरोशिमापुरस्यापि समजनि । अभूतपूर्वेयमासीद् घटनाऽकाण्ड एव यथा मनुष्यस्य रक्त लिप्सा-ताण्डवेन ताण्डवितम् । तादृशोऽभूदस्य नवास्त्रस्य लोक घस्मरश्चमत्कारो येन विस्मितस्याऽपि जगतोऽजायत भयाक्रान्त मन । स्मारिता सर्वे प्राक्तनस्य महाभारतस्य यत्र वायव्यानि, कार्शानवानि, वारुणानि चायुधान्यक्षिप्यन्त । क्रीडनकीकृतानि नवेनामुना पारमाणव-पिण्डेनासाधारणविनाशवमेन प्रलयकारिणा खड्ग भुशुण्डी शतघ्नी-प्रभृति प्रहरणानि ।

सकलाऽपि सृष्टि पदार्थानामणुभिर्निर्मिता, सूक्ष्मतमोऽणुश्च स्वतन्त्र इति वैज्ञानिकाना प्राचामभू मतम् । भारतीयदार्शनिकास्तु—

जालसूर्यमरीचिस्थ सूक्ष्म यद् दृश्यते रज ।
तस्य षष्ठितमो भाग त्रसरेणु स कथ्यते ।
तस्य षष्ठितमो भाग परमाणुरिति स्मृत ॥

इति प्रतिष्ठापयामासु । परमामरीकेयो वैज्ञानिको अल्बर्ट आइन्स्टाइनसशस्तेपामपि परस्परसम्बद्धतामजूघुषत् । तस्य सिद्धान्त सापेक्षवाद (Relativity) इति प्रसिद्ध । तन्मतानुसारेण जार्मण्यदेशस्य विज्ञानविद् ऑटो हॉननामा परीक्षण शतानि कृत्वाऽणूना खण्डने समर्थोऽभवत् । डा० रदर्फोर्ड, वर्नर हीजन बर्ग, मैक्सवान लेन एवं वैज्ञानिका अपि तत्रानेकान् प्रयोगान् व्यदधु । पश्चाज्जार्मण्यदेशे (जर्मनी) श्रेष्ठानामणुविशेषज्ञाना मण्डल भीषणतमस्य पारमाणवास्त्रस्य निर्माणे संलग्नमासीत् ।

केचिदामरीकेयाः प्रणिधयोऽणुरहस्यं विज्ञाय स्वदेशेभ्यो विज्ञानविद्भ्यो निवेदितवन्तः। दैववशादेतस्मिन्नन्तरे शार्मण्यदेशो युद्धे पराजित इति तत्रत्या वैज्ञानिका न प्राभवन् तदस्त्र-निर्माणे। ग्रामरीकेयास्तु रहसि प्रयत्नास्तत्र कर्मणि कालान्तरे सफलतामभजन्। प्रथम परीक्षणं च तस्य मारिक (मैक्सिको) द्वीपे लासवेगास स्थाने प्रशान्तसागरस्य तटेऽक्रियत। महीयस आयस-स्तम्भस्य मुखे पारमाणवः पिण्डो न्यधीयत। दूरे च सूक्ष्मदर्शकान् गृहीत्वा विज्ञान-विदोऽतिष्ठन्। विद्युद्वर्तनेन (Electric Switch) तस्य स्फोटने कृते महत्तमोऽश्रुतपूर्वोऽदृष्टपूर्वश्च विस्फोटनादः समजनि। तदुद्भवेन गुरुतमेन प्रकाशेनैकस्य दिङ्क्षोदृ ष्टिरेवालुप्यत। कोटिशो मत्स्या व्यनश्यन्। लौह-स्तम्भस्तु धूमेनैव सहालीयत। विलोक्यैतादृशीमदृष्टचरां शक्तिमस्त्रस्यास्य वैज्ञानिका नितरामहृष्यन्। जयपाणिश्च (जापान) कथमपि पराजयं न स्वीकुर्वन् तस्य शरव्यताम् (Victim) अगात्।

विज्ञानविदामनुभवेनाणूनामप्यात्मा भवन्ति। अणवत्रोना (इलेक्ट्रोन) प्रोतनाः (प्रोटोने) न्यूतनाः (न्यूट्रोन) च कणा अणून् परितो भ्राम्यन्ति। तदर्थं यूरेनियम-२३५ संज्ञः थोरियमसंज्ञश्च धातुरतिशयेनोपयोगिनो। हेलीयमेवेण (हेलियमगैस) निरन्तरप्रहारै-रलवत्रोनिकाः प्रोतनिकाश्च कणा. पृथग् जायन्ते। एतेन गरीयसी शक्तिरुत्पद्यते। अतः पिण्डनिर्माणे तामेव पद्धतिमनुरुन्धाना वैज्ञानिका. पिण्डेषु यूरेनियम-संज्ञं धातुं निक्षिप्य तदधारचर्षीयित्यानयनाय मधुसारेण (मोम) मिश्रयन्ति। पिण्डस्य विस्फोटे कृतेऽणुकणाः परस्पर-समर्द्दन खण्डशो भवन्तः शक्तिं जनयन्ति।

स्थूलवस्तुना सूक्ष्मशक्ती परिणमनमेवास्याः पद्धतेर्मूलम्। प्रस्थार्धपरिमितेन यूरेनियमधातुना या शक्ति सगृह्यते सा महदपि नगर क्षणाद् भस्मसात्कर्तुं शक्यते। वैज्ञानिकानुसारेण सौरचक्रऽप्ययमेव प्रक्रिया कार्यं करोति। अतोऽणु-शक्तया भविष्यति काले कृत्रिमसूर्यनिर्माणे वृष्टे. करणं धातूना परिवर्तन च सम-विष्यति। यन्त्रचालनम् यानगति, विद्युज्जननम्, मरुभूमे. शाद्वले परिणमन चाणु-प्रभावेण सुकरम्, प्रकृति-विजयाय प्रयतमानो नरोऽधुना सृष्टिनिर्माणस्य मूलतत्त्वान्यपि वशीकर्तुं समर्थ.। अधुनाऽर्थित्वामुं शक्तिं दुश्चिकित्स्या अपि यदा निराकर्तुं शक्यन्ते, अशयेन्धनभारेण लोकान्तरयात्राऽपि साधीयसी सम्पत्स्यते। कृत्रिमसुवर्णरचनया दुरसद दारिद्र्यमपि नामशेष करिष्यते।

परं नायं पक्ष. साधितोऽद्ययावन्मानवेन, लोकसंहारसमा शक्तिमेव संग्रहीतुं निरन्तरं यतते। अणवस्त्रनिर्माणे आशा प्रगतिमवेक्ष्य प्रथम. परमाणुपिण्डोऽधुना बाल-क्रीडनकायते। उदजन्मा: (Hydrogen bomb) किरणवमा घातकानि वायव्या-स्त्राणि च भाण्डागारेषु सगृहीतानि। प्राक्तनान्यस्त्राणि पूर्वपक्षे स्थापितानीदानीम्।

# अणुशक्तिः

विश्वस्येतिहास आसीत्तद् विस्मयकर दिन यस्मिन्नि स्पन्दश्वासेन, स्तिमित-नाडी गतिना, स्थगित पक्ष्म तारक-चक्षुषा मानवेन श्रुत यदमेरिकासैन्याधिकारिभि पातितैनैकेनाणुपिण्डेन ( Atom bomb ) जयपाणिदेशस्य ( जापान ) नागासाकिनगर लक्षत्रय जन कोलाहलपूरित निमिष मात्रेण भस्मसादनुष्ठिम् । न तत्र मानव, न भवनम्, न तरु, न तृणम्, न च क्षुपम् (Plants) क्वाप्यशिष्यत । सकलाऽपि शस्य श्यामला धरणी क्षणेन पक्व मृण्मयीव कपिलोपरायिता च । सैव दशा हिरोशिमापुरस्यापि समजनि । अभूतपूर्वमासीद् घटनाऽकाण्ड एव यथा मनुष्यस्य रक्त लिप्सा ताण्डवेन ताण्डवितम् । तादृशोऽभूदस्य नवास्त्रस्य लोक घस्मरचमत्कारो येन विस्मितस्याऽपि जगतोऽजायत भयाक्रान्त मन । स्मारिता सर्वे प्राक्तनस्य महाभारतस्य यत्र वायव्यानि, काशानवानि, वारुणानि चायुधान्यक्षिप्यन्त । क्रीडनकीकृतानि नवेनामुना पारमाणव-पिण्डेनासाधारणविनाशवमेन प्रलयकारिणा खड्ग भुशुण्डी शतघ्नी-प्रभृति प्रहरणानि ।

सकलाऽपि सृष्टि पदार्थानामणुभिर्निर्मिता, सूक्ष्मतमोऽणुश्च स्वतन्त्र इति वैज्ञानिकाना प्राचामभूमतम् । भारतीयदार्शनिकास्तु—

जालसूर्यमरीचिस्थ सूक्ष्म यद् दृश्यते रज ।
तस्य षष्ठितमो भाग त्रसरेणु स कथ्यते ।
तस्य षष्ठितमो भाग परमाणुरिति स्मृत ॥

इति प्रतिष्ठापयामासु । परमामरीकियो वैज्ञानिको ऽल्बर्ट आइन्स्टाइनस्तयोरपि परस्परसम्बद्धतामजूघुषत् । तस्य सिद्धान्त सापेक्षवाद (Relativity) इति प्रसिद्ध । तन्मतानुसारेण जार्मण्यदेशस्य विज्ञानवित् ऑटो हॉनजामा परीक्षण-शतानि कृत्वाऽणूना खण्डने समर्थोऽभवत् । डा० रदफोर्ड, वर्नर हीजन बर्ग, मैक्सवान लेन एते वैज्ञानिका अपि तत्रानेकान् प्रयोगान् व्यदधु । पश्चाच्च जार्मण्यदेशे (जर्मनी) श्रेष्ठानामणुविक्षेपज्ञाना मण्डल भीषणतमस्य पारमाणवास्त्रस्य निर्माणे सलग्नमासीत् ।

केचिदामरीकेयाः प्रणिधयोऽणुरहस्यं विज्ञाय स्वदेशेभ्यो विज्ञानविद्भ्यो निवेदितवन्तः। दैववशादेतस्मिन्नन्तरे शार्मण्यदेशो युद्धे पराजित इति तत्रत्या वैज्ञानिका न प्राभवन् तदस्त्र-निर्माणे। आमरीकेयास्तु रहसि प्रयत्नास्तत्र कर्मणि कालान्तरे सफलतामभजन्। प्रथमं परीक्षणं च तस्य माक्षिक (मैक्सिको) द्वीपे लार्सवेगास स्थाने प्रशान्तमागरस्य तटेऽक्रियत। महीयस आयस-स्तम्भस्य मुखे पारमाणवः पिण्डो न्यधीयत। दूरे च सूक्ष्मदर्शकान् गृहीत्वा विज्ञानविदोऽतिष्ठन्। विद्युदुत्कर्तनेन (Electric Switch) तस्य स्फोटने कृते महत्तमोऽभूतपूर्वोऽदृष्टपूर्वश्च विस्फोटनादः समजनि। तदुद्भवेन गुरुतमेन प्रकाशेनैकस्य दिङ्मोदं ष्टिरेवालुप्यत। कोटिशो मत्स्या व्यनश्यन्। लौह-स्तम्भस्तु धूमेनेव सहालीयत। विलोक्यैतादृशीमदृष्टचरां शक्तिमस्त्रस्यास्य वैज्ञानिका नितरामहृष्यन्। जयपाणिश्च (जापान) कथमपि पराजयं न स्वीकुर्वन् तस्य दार्स्यताम् (Victim) अगात्।

विज्ञानविदामनुभवेनाणूनामप्याशा भवन्ति। अलक्त्रोना (इलेक्ट्रोन) प्रोतनाः (प्रोटोन) न्यूतनाः (न्यूट्रोन) च कणा अणून् परितो भ्रामन्ति। तदर्थं यूरेनियम-२३५ संज्ञः थोरियमसंज्ञश्च धातुरतिशयेनोपयोगिनौ। हेलीयमेषेण (हेलियमगैस) निरन्तरप्रहारै-रलक्त्रोनिकाः प्रोतनिकाश्च कणाः पृथग् जायन्ते। एतेन गरीयसी शक्तिरुत्पद्यते। अतः पिण्डनिर्माणे तामेव पद्धतिमनुरुन्धाना वैज्ञानिकाः पिण्डेषु यूरेनियम-सञ्ज्ञं धातुं निक्षिप्य तदवारचर्शैथिल्यानयनाय मधुसारेण (मोम) मिश्रयन्ति। पिण्डस्य विस्फोटे कृतेऽणुकणाः परस्पर-समर्ह्न खण्डशो भवन्तः शक्तिं जनयन्ति।

स्थूलवस्तूनां सूक्ष्मशक्तौ परिणमनमेवास्याः पद्धतेर्मर्म। प्रस्थार्धपरिमितेन यूरेनियमधातुना या शक्तिः संगृह्यते सा महदपि नगरं क्षणाद् भस्मसात्कर्तुं शक्यते। वैज्ञानिकानुसारेण सौरचक्रेऽप्यनयैव प्रक्रिया कार्यं करोति। अतोऽणु-शक्त्या भविष्यति काले कृत्रिमसूर्यनिर्माणं वृष्टेः वरणं धातूना परिवर्तनं च संभ-विष्यति। यन्त्रचालनम् यानगतिः, विद्युज्जननम्, मरुभूमेः शाद्वले परिणमनं वायु-प्रभावेण सुकरम्, प्रकृति-विजयाय प्रयतमानो नरोऽधुना सृष्टिनिर्माणस्य मूलतत्त्वान्यपि वशीकर्तुं समर्थः। अधुनाऽऽश्रित्याणुं मक्तिं दुश्चिकित्स्या अपि यदा निरावर्तुं शक्यन्ते, अक्षयेन्धनसारेण लोकान्तरयात्राऽपि साध्यीयसी सम्पत्स्यते। कृत्रिमसुवर्णरचनया दु:सहं दारिद्र्यमपि नामशेषं करिष्यते।

परं नायं पन्थाः सावितोऽप्ययावन्मानवेन, लोकसंहारकारां शक्तिमेव स संग्रहीतुं निरन्तरं यतते। अणवस्त्रनिर्माणे जातां प्रगतिमवेक्ष्य प्रथमः परमाणुपिण्डोऽधुना बाल-क्रीडनकायते। उदजनबमाः (Hydrogen bomb) किरणबमा घातकानि वायव्या-स्त्राणि च भाण्डागारेषु संगृहीतानि। आग्नेयान्यस्त्राणि पूर्वमेव स्थापितानीदानीम्।

एषां परीक्षणेष्वपि विसृमरास्तरंगायिताः कणा दु साध्यरोगाञ्जनयन्ति, वायुमण्डले चासाधारणी विक्रियामाचरन्ति, यथाऽतिवृष्टिरनवृष्टिश्च दु.खाकरोति भुवनम्। अतः शान्तिप्रियाणि राष्ट्राणि जिजीविषन्तश्च तेषां जनताः सधिक्कारं गर्हयन्त्येतानि परीक्षणानि। अप्रतीकारैरमीभिरस्त्रैः समीपमानीतो युगक्षय इति गरीयसी तृतीय-युद्धविभीषिका।

अपेक्ष्यते च संप्रति शक्तेरस्या जनकल्याणार्थं प्रयोगः। यावानर्थं उपयुज्यते ऽतोहेतुकानामस्त्राणां निर्माणे, तावता सकलस्यापि जगतो दारिद्र्यस्य नाशः संभवति। पुञ्जवादेन सुतरां पीडिताः प्रजाः सरोषा अस्य नाशाय चोद्युक्ताः। तेनाऽपि प्रलय-कल्प एव संहारो भविष्यति। अत पूर्वमेव सर्वैरपि संभूय साधनैरशान्ति–हेतोरस्यदारिद्र्य-स्यैव प्रलयो विधेयः। चिरं पीडिता दलिता शोषिता च मानवजातिरद्य भोजनमपेक्षते नास्त्राणि, विकासं काङ्क्षति न विनाशम्, बोधमभिलषति न युद्धम्, प्रीतिमीहते न वैरम्।

अतएव भारतेन पुनर्निर्माणाय प्रयतेनाणुशक्तेः प्रयोग. प्रजाकल्याणाय शान्ति-स्थापनार्थं च विधीयते। मुम्बापुर्यां (बम्बई) समीपे त्र्यम्बकपुरे (ट्राम्बे) स्थापिता-ऽस्त्यणवी प्रयोगशाला, आयोजितश्चैकोऽण्वायोगः (अणु-कमीशन)। अणुयन्त्रस्य ((Atomic plant) स्थापनेऽमरीकाशासनेन भूय. साहाय्यं कृतम्। गुरुजल-(Heavy water) प्रभृतीन्युपकरणानि प्रत्तानि। डा० भाभा-सञ्ज्ञो वैज्ञानिक-प्रवरोऽस्य निर्देशकः। अप्सरःसञ्ज्ञा धमनिका (अणु भट्टी) स्वकार्यं कर्तुं प्रवृत्ता। अधुना भारतसर्वकारोऽणुशक्ति-चालितानि विद्युत्प्रतिष्ठानानि स्थापयितुं विचारयति। सर्वाण्यपि राष्ट्राणि प्रयुञ्जीरन्नेद् शान्तये योगक्षेमाय च जनानामिमां शक्तिम्, अल्पीयसा कालेन सकलोऽपि दारिद्र्य-दोषः प्रजानां गच्छेत् स्मरणीयताम्।

# आधुनिका उपग्रहप्रयोगाः

लोकाः पुराणेषु बहुधा अपठन् नारदादीनां मुनीनां लोकान्तरेषु गमनम्। महाभारतेऽपि सन्त्येवंविधानि वर्णनानि। बाल्येऽपि च पितामही मातामही वाऽश्रावयदुड्डयनखट्वाम् (उड़न खटोला) आरुह्य राजश्चन्द्रस्य राज्ञी तारामुपर्ययसोः कथाम्। सर्वाणीमान्याख्यानानि विस्मयकराणि कपोलकल्पितान्येवामन्यन्त जनैः। प्रभूतथापि मानवस्य कौतूहल वितत-पक्षान्पक्षिणो दर्शं दर्शम्, भासमानानि च स्थल-प्रमाणि तारकाणि रजत-पुष्पाणीव नीलनीलायां शाट्याम्। अकामयत सोऽपि मुक्त-बन्धनो विगलितसीमबन्धे विहर्तुं नीलाम्बरे। व्यचारयन् वैज्ञानिका बहूनि वर्षाणि यावदन्तरिक्षयात्रार्थम्। कथमुड्डीयता मानवो नभसि ? कथंकारं भविष्यति तस्य भार-संतुलन तत्र ? कः प्रकारोऽस्य तस्मिन्नवस्थानस्य ? क उपाय. पतनाभावस्य ? इत्यादयो बहुविधाः प्रश्ना अभूवन् तेषां मनसि, परं विमानाविष्कारेणानेकेषां तेषु समजनि समाधानम्। स्वनादपि तीव्रगामिभिः खेट-यानैर्दूरीकृतः स्थानकृतोऽन्तरायः। स्वल्पेनैव चानेहसा दुर्गमानपि प्रदेशानद्रिमध्यगतान् समुद्रवक्षःस्थितांश्च भूभागान् गन्तुं शक्नोति जनः।

एवंविधे व्यतिकरे वैज्ञानिका अकल्पयन् कस्यचिद् द्वि-भूमिकस्य यानस्य रचनाम् यत्केनाऽपि प्रबलशक्तिमताऽक्षयेणेन्धनेन चालितं भवेत्, यन्न पृथ्व्या गुरुत्वा-कर्षणेन कृष्येत, नोल्काभिर्बाध्येत, न तापैस्तप्येत, न ब्रह्माण्डादिकिरणैर्धृष्येत न जाड्याज्जडीक्रियेत। प्रथमे महायुद्धे शार्मण्यदेशयैर्वैज्ञानिकैर्निर्मिता वी (V) सज्ञा-स्तीव्रगामिनः स्वतश्चालिता अग्नि-बाणा अभूवंस्तेषामादर्शाः। परं द्वितीय-महायुद्धस्य मध्य आपतनादतिष्ठन्नपूर्णा एव सर्वा योजनाः।

द्वितीयमहासमरानन्तरं तु प्रक्षेपास्त्रनिर्माणेन सह पुनः प्रावल्यमगादयं प्रश्नः। अमरीका रूसश्च प्रतिभटतामगच्छन् चन्द्रलोकाभियानोद्योगे। परं सहसा विस्मितेन जगता श्रुतं यत् ख्रीष्टाब्दे १९५७ तमे अक्तुबरमासस्य चतुर्थे दिने रूसाः

सार्धमणद्वयमात्रमुपग्रहं वियति प्रेषयितुं प्राभवन् । प्रक्षेपणीयेन क्षिप्तोऽयं भूग्रहः शताधिकयोजनात्मकमुच्छ्रायं गत्वा स्वप्रक्षेपकात् पृथग्भूतः प्रतिहोरमष्टादशसहस्र-क्रोशलघिन्या गत्या पचोनशतेन कलाना (Minute) पृथ्वीं परिक्रामति । न यावदमरीका प्रहिणोति स्वकीयं प्रथमं कृत्रिमं ग्रहम्, रूस्या अपरमपि ततोऽपि गुरुतरं सध्वनिग्रहयन्त्र सप्रसारणकलं (Radio) साधिदेवतमिव लाइकाख्यया शुन्या पुनः प्राक्षिपत् । गतेनान्तरिक्षयात्राया प्राणिना शरीरे कः प्रभावो भविष्यतीति विषये लब्धा भूयासः सकेताः ।

मासत्रयानन्तरमामरीकेयैरपि वैज्ञानिकैः प्रक्षिप्तो लघीयानुपग्रहः । सहस्रा-धिकयोजनोच्छ्राय गतोऽय प्रतिहोरमेकोनविंशतिसहस्राणि क्रोशाना गत्या लंघयन् षडुत्तरेण शतेन कलाना भुवं पर्यक्राम्यत् । अपरावप्युपग्रहौ तदीयैरेव वैज्ञानिकैः सृष्टौ साधारणावेव ।

रूस्याना तृतीय उपग्रहो गुरुतमः सार्धत्र्यटन (Ton) भारात्मकोऽपि तीव्र-गत्या गगने चक्रमणपरो विस्मयावहः । चतुर्थे वारे च प्रक्षेपणास्त्र चन्द्रमण्डलमपि निर्भिद्य सूर्याभिमुखमगच्छत् । एतस्मिन्नन्तरे रूस्याश्चन्द्रस्य पृष्ठदेशं द्रष्टुं तदीय-प्रदेशाना चित्राणि च ग्रहीतुमकल्पन्त । तैः गागारिन-तितोवनामानौ द्वौ यात्रिणौ आकाशे प्रेषितौ पुनरानीतौ च ।

गते ग्रीष्मकालेऽमरीकावासिभिरुत्सृष्टे कृत्रिमग्रहे मानवोऽपि यात्रा व्यधात् । कामं स नाधिकोच्छ्रायं गत । भारतस्य तद्देशस्थो राजदूतश्च ग्रहस्थ-यात्रिण्यभूदिति समाचारपत्रेभ्यो ज्ञातम् । इत्थं दिनादिनं लोकान्तरयात्राया दिशि प्रगतिरेव भवति । आरादेवो अमरीकाया च विंशत्यधिकैः सहस्रं जनाना चन्द्र-लोक-गमनाय याने स्वस्थानानि सुरक्षितीकृतानि । चन्द्रः खलु भूमण्डलस्य नेदीयान् प्रतिवेशी इति प्रथमं तन्मुख्येव यात्राऽऽयोज्यते । पर रूस्यास्तु चन्द्रलोकयात्रा पूर्णकल्पा मत्वाना मंगलग्रहयात्रायै परामृशन्ति । सन्ति यद्यपि कारवनासमाहिताः समस्यास्तेषा समक्षम् । यथा

१—आकाशे यानास्थानस्य (हवाई अड्डा) निर्माणम् ।

२—मानवशरीरे ब्रह्माण्डादिकिरणाना प्रभावस्य निवारणम् ।

३—तत्रत्यशीतोष्णादेर्मानवस्य सुरक्षा ।

४—पुनः परावर्तनस्याव्याहतता

५—प्रक्षेपणवेगसह्यता

मार्गे भोजनादेर्मलमूत्रत्यागादेश्च सुविधा कथं स्यादिति च प्रश्नोऽपुनार्जप न सगाहिनः । अतः शिष्टमद्यापि तत्र भूयः कार्यम् । प्रतीक्षते जगद् विस्फारितेन चक्षुषा सकौतुकेन चान्त करणेन सत्यतामस्य स्वप्नस्य ।

—०—

# विश्वसंघस्यावश्यकता

सृष्टेरारम्भादेव यथा यथा मानवेषु मिथः कलहप्रवृत्तिः प्राप पदं तथा तथा समजनि भावना संघटनस्य। आत्मनिर्भरतायामपि बहुषु कार्येषु परापेक्षतयाऽन्यसाहयोगं सर्वैरपीष्यत इति सामाजिकताऽऽद्रियते। यथा सामान्यजीवने कौटुम्बिकता जातीयता च जनानां सश्लेषहेतुस्तथैव राष्ट्रीयता मित्रभावश्च राष्ट्राणां बन्धनमूलम्। राजनैतिकेष्वाक्रमणेषु सत्सु मिथः साहाय्येन प्रतिरोधोऽक्रियत। इत्थं नगरराष्ट्रं संहतैर्विशालानां राज्यानां राज्यैश्च साम्राज्यानामुदयोऽभूत्।

इयं संघभावना विशेषेण विरोधस्य संग्रामस्य चान्तायैव समुदिताऽऽसीत्। निर्मितेषु च संघेषु, कुटुम्बेष्विव लघुराष्ट्रेष्वपि नाभवन् सहसा रणाः। तेषां संख्या न्यूनताममजत् परं भीषणता नितरामेधत। नाजायत तादृशी जनहानिर्लघुषु कलहेषु, यादृशी महासमरेष्वभवत्। केवलं कतिपये ग्रामाः प्रथमं सम्मिलिता अभवन् परं व्यापकेषु युद्धेषु जनपदा आसन् योधिनः। इत्थं संपरायैः सहैव संघीभावस्यापि क्षेत्रमगाद् वृद्धिम्।

अद्य तु स्थितिरेव विलक्षणा। एकतो देशकृता, जातिकृता, वर्णकृता, वर्गकृता सिद्धान्तकृता भेदाश्च मानवान् दूराद् दूरतरं नयन्ति, परतस्तु विज्ञानमूला आविष्कारा बहुधा भिन्नमपि विश्वं श्रियघटितप्रायमपि संघटयन्ति। एकत्र प्रयुक्ते युद्धे न समीपस्थो देशोऽविकृतः स्यात् तु क्षमः। साधारण्यपि क्रान्तिर्द्वीपाद् द्वीपमारयेव सकलमपि भुवनं चालयति। सर्वेऽपि प्रदेशाः, सर्वाण्यपि राज्यानि, निखिलान्यपि राष्ट्राणि तथाऽद्य नैकट्यं भजन्ते यथा विकासे ह्रासे वा प्रगताववनतौ वा परिस्थितिर्लंघ्वेवान्यत्र सङ्क्रामति।

शताब्दीयं नवसभ्यतायाः, नवनवाविष्काराणाम्, अभिनव-विकासस्य च। मानवेनास्यामश्रुतपूर्वाऽदृष्टपूर्वाऽचिन्तितपूर्वा च कृता समुन्नतिरिति प्रायो विश्वसन्ते लोकाः। परमेतावदपि ते जानन्ति यत्पूर्वार्ध एवास्या विश्वघस्मरे अनातपूर्वे द्वे महायुद्धे भुवनेन दृष्टे। तृतीयस्य भयं चाजाइपाणीयप्रायेन सर्वेषां निरसि

जागर्ति । यादृशी भीषणता गतयोर्महासमरयो श्रूयते, न तादृशी महाभारतेष्वनेकेष्वपि स्यात् ।

इमामेव विनाशलीला समीक्ष्य प्रथमयुद्धानन्तर पृथ्व्या सग्राम नामशेषता नेतु राष्ट्रसघ (League of Nations) सस्थापित आसीत् । पर नादोयन्त तस्मै केऽप्यधिकारा , न च बलवन्ति राष्ट्राणि व्यश्वसन् तस्य शान्तिप्रियेषु सिद्धान्तेषु । विशेषत इटली, जर्मणि शर्मण्यश्चेति त्रयो देशा 'धुराष्ट्राणि' (धुरी राष्ट्र) इति प्रसिद्धा आतङ्कप्रिया नीतिमाश्रयन् । प्रथमेन 'अबीसीनिया,' 'लीबिया', 'अल्बानिया' इति राष्ट्रत्रय बलवदाक्रम्यात्मसात्कृतम् । स्पेनदेशे तत्रत्येन सेनापतिना फ्राकोनाम्ना विद्रोहेण प्रजातन्त्रस्य लोपो विहित । पर सर्वमिद घटनाचक्र नाटकीयदृश्यमिवानायासेनैवाजायत । क्लीब इव च राष्ट्रसघ' केवल पश्यन् नापारयत किमपि प्रतिकर्तुम् । तस्य परिणतिश्च द्वितीयो महासमर ।

अस्यान्ते च पुन सयुक्तराष्ट्रसघस्य स्थापनाऽक्रियत तमेव प्रथम लक्ष्य पुरस्कृत्य, कृतानि च तेन महान्त्यनेकानि कार्याणि । तथाऽपि स्वार्थपराणा राष्ट्राणा दलबद्धता पक्षपरिपोषनीतिश्च तस्मिन् दृश्यते । अद्यावधि तत्र गौराङ्गाणामेव प्रभुत्वम् । न तेऽन्यायवृत्त श्वेताङ्गजातीयराष्ट्रस्य प्रतीप किमप्याचरितुमुद्यता । प्रत्युत स्वार्थ-वशेनान्यायमेव बहुत्र समर्थयन्ति । सयुक्तराष्ट्रसघोयो मञ्च पक्षद्वयस्य सघर्षमञ्चायते । अद्यापि तत्र बहूना राष्ट्राणां न्यायोचिताऽपि सम्मतिररण्यरुदितमिवोपेक्ष्यते । वर्णद्वेषो वर्गद्वेषश्च तत्रापि दृश्येते । अफ्रीकामहाद्वीपस्य बहुषु भागेषु श्वेताङ्गै कृतानत्याचारान् स षण्ढ इव पश्यति न तान्प्रति दण्डायोत्सहते ।

साम्यवादेन सर्वाधितसाहसदधीनोऽद्य भुवनमाह्वयते । सोऽपि जनसख्याशक्ति चाधिकृत्य विश्वस्य महाराष्ट्रम्, पर न सयुक्तराष्ट्रसघस्य सदस्यतामागधापि । इत्थ निरस्त-प्राया सकलाऽप्याशा नीतिमिमामनुसरताऽधुना सघेन । अत एव बुद्धिमन्तो नीतिविदोऽधुना सग्रामस्य सर्वथा लोपाय विश्वसघस्य स्थापना समर्थयन्ते यस्मिन् सकलमपि भुवनमेकमात्र राष्ट्र भविष्यति, सकला अपि मानवा एकस्या पृथिव्या पुत्रा. सन्त ऐक-मत्येन ता प्रार्थयिष्यन्ते—

> यस्यां समुद्र उत सिन्धुरापो यस्यामन्न कृष्टय सबभूवु ।
> यस्यामिद जिन्वति प्राणदेजत् सा नो भूमि पूर्वपेये दधातु ॥
>
> (अथ. १२, १, ३)
>
> विश्वम्भरा वसुधानी प्रतिष्ठा हिरण्यवक्षा जगतो निवेशनी ।
> वैश्वानर बिभ्रती भूमिरग्निमिन्द्रऋषभा द्रविणे नो दधातु ॥
>
> (अथ० १२, १, ६)

न यत्र कश्चित्क्षुधया न चापरोऽजीर्णेन विनङ्क्ष्यति, न यत्र जातिकृतो वर्णकृतो वर्गकृतो देशकृतो लिङ्गकृतश्च भेद कलहं जनयिष्यति, न यत्र सैन्यानां, रक्षापुरुषाणां, शासकानां च दर्पकर्कशा वागुद्वेक्ष्यति ; न मनुष्यो मनुष्यस्य रक्तं पातयिष्यति ; कुटुम्ब इव, कुल इव, जाताविव, वर्ग इव समाज इव सकलेऽपि भुवने जन सामान्येन सम्मानं भजिष्यति, परम् 'उद्यमेन हि सिध्यन्ति कार्याणि न मनोरथैः' इत्यनुसारेण न सङ्कल्पमात्रेण तादृशस्यादर्शस्य प्रतिष्ठा सम्भवति। यावन्न मानवस्य हृदयात्पातकमिव स्वार्थपरता, परस्परमविश्वासश्च निष्क्रामति, यावन्न स स्वपरभाव कलुषमिव जहाति, यावन्न स सकलमपि भुवनमात्ममयं पश्यति, कथं तावदस्य स्वप्नस्य साफल्यम्? तथापि लोकक्षेमैकहेतोरस्योद्देश्यस्य पूर्त्यै प्रयत्नो विधेय एव।

---

# भारतस्य पराराष्ट्रनीतिः

नीतिं विवेचयता माघेनोक्तमासीत्—

> तन्त्रावाप-विदा योगैर्मण्डलान्यधितिष्ठता ।
> सुनिग्राह्या नरेन्द्रेण फणीन्द्रा इव शत्रवः ।। (शि. व. २।८८)

एतदनुसारेण शासकैः स्वराष्ट्रस्य पराराष्ट्रस्य च चिन्ता विधीयते । यथासमयं राष्ट्रान्तरैः सह सन्धिविग्रहोऽप्यनुष्ठीयते । यावदभूत्साम्राज्य-विस्तार-चिन्ता, तावत्तु परराष्ट्र-विभागस्य कार्यमासीन्मित्रराष्ट्रैः सह सन्धिदार्ढ्यम्, उदासीनेषु च बलवतां सख्यापादनम्, निर्बलानां च निग्रहणम् । परमद्य प्रजातन्त्र-युगे साम्राज्य-भावनाया नास्ति महत्त्वम् । 'राजा घृणी ब्राह्मणः सर्वभक्षी' इति मतमद्य नादरास्पदम् । कोणे-कोणे, धरण्या दासतायाश्चिरपरिचिताः शृङ्खलाः सरभसं शकलीक्रियन्ते, क्व तदा नवविजय-प्रसंगः ? तथापि व्यापारादि-सौकर्याय पक्ष-पोषणाय च कूटनयप्रयोजितो मैत्र्य-सम्बन्धो योज्यत एवेति न निष्प्रयोजनोऽयं विदेश-सम्पर्कविभागः ।

भारतस्य दास्यकाले वैदेशिकाः शासका एव स्व-हितानुरोधात् विदेशैः सह नीति-बन्धम् अकुर्वन्, परं स्वातन्त्र्य-लाभानन्तरं भारतीया एव प्रभवः पक्ष-विपक्ष-निर्धारणे इति ते देश-हितं पर्यालोच्य तटस्थनीतेरेवाश्रयणं श्रेयस्करममन्यन्त । कालेऽस्मिन् साम्यवादिनां जनतन्त्रवादिनां च विरुद्धौ पक्षौ । प्रथमस्य नायको रूसोऽपरस्य चामरी-केति प्रतिद्वन्द्विनावेतौ । भारतं च चिरकालिक-पारतन्त्र्यवशात् साधन-हीनम्, विज्ञाना-दिषु च नगण्यम् । पक्षद्वये च स्व-प्रभाव-प्रसाराय प्रयतमाने, पौरस्त्यपश्चिमाभ्यां दिग्भ्यां सहैव तत्तद्देशेषु च विभक्तेषु, तृतीय-महायुद्ध-विभीषिका-समाक्रान्ते जगति औद्योगादि-दृष्ट्या निर्बलेषु प्राच्य-देशेषु, स्वास्तित्व-रक्षणाय अनुपेक्षणीये शक्ति-संग्रहोद्योगे, अपरिहार्ये विध्वंसोन्मुखे विकासे, साधन-संभार-समाहरणाय मार्गणीये साहाय्ये च समभावि केनापि पश्चाद्वर्तिनो राष्ट्रस्य तटस्थत्वम् । परं दूर-दर्शिभि-र्भारतनेतृभिः सुचिन्तितमेव चिन्तितं यदेकतर-पक्षाश्रयणेऽपरस्य विरोधः स्यात् । पर-प्रभावे च साहाय्यार्थमनुचितोऽपि समयः (Condition) स्वीकार्यो भवेद् यो

राष्ट्रीयसंमानस्य हितस्य च परिपन्थितामाश्रयेत् । केनचिदपि विरोधे सति वृथैव व्यायाम-कालेऽपि युद्धादिना शक्तिह्रासो हानिकरः सम्पद्येत ।

परं वाराङ्गनेव नृपनीतिः स्वार्थानुबन्धिनीति न न्याय्य इति कृत्वा कश्चित्पक्षस्तटस्थवादस्य विषयः । अतः प्रथमं भारतस्य नीतिमधिकृत्य सर्वेऽपि समशेरत । हंगरीराज्ये कृतं दमनचक्रं भारतीया शासका निनिन्दुरिति रूस्या अकुप्यन् । मिस्रदेशोपरि आङ्गलीयस्य फ्रांसीयस्य चाक्रमणस्य विरोधं तेऽकुर्वन्निति पाश्चात्त्या अपि रुष्टा । अमरीका-प्रदत्तामन्त्र-सहायतां तपणामिति राष्ट्रसमानविरोधिनीं कृत्वा प्रत्यादिशन्निति तदीयनीतेर्दार्ढ्यमपि स्फुटतामगात् । कुरुदेशे (कोरिया) सिन्धुचीने (हिन्दचीन) च शान्ति-स्थापनार्थं भारतस्य कार्यं प्रशस्यतममभूदिति भूयानर्जित आदरः । दलित-राष्ट्राणां पक्ष-पोषः अत्याचारिणां च विरोधः कृत इति साधिता न्याय-प्रियता दुर्बलानां विश्वास-भावना च । 'शान्ति-स्थापना न सुरक्षा-संघटनं (Defence Organization) शस्त्रसंग्रहैर्वा भविष्त्री, साम्राज्यवादस्य (Imperialism) पुंजवादस्य (Capitalism) शोषणनीतेः (Policy of exploitation) चान्तेन, दारिद्र्य-ग्रस्तानामवनतानां च विकासेनैव सा सम्भवति । संयुक्तराष्ट्र-संघस्य साफल्यं न सबल-राष्ट्राणां प्रभावेण अपितु बहिष्कृतानां प्राच्यदेशानां सहयोगेन भविष्यति, निष्पक्षतया सर्वत्रैवान्यायो निराकरणीयः, इति भारतस्य घोषणा । सबलानामपि विवादानां मन्त्रणाभिः समाधाने विश्वस्तदृभिरदसीयैः शासकैर्न पाकस्थान (पाकिस्तान) पूर्तंगल (पुर्तगाल) वा स्व-प्रदेश-मोक्षाय बलात्क्रियते । अनया तटस्थतानीत्या निकटमागतोऽपि तृतीयो महा-समरो दूरीकृतः' । अद्य परिचिनोति विश्वमस्यनीतेर्यथार्थताम् अतः शान्ति-स्थापनार्थं प्रार्थ्यंते तस्य योगः । श्रूयते तस्य वाणी । समर्थ्यते च तस्य पक्षः । सर्वतस्तस्य प्रगतये धनेन, विशेषज्ञप्रेषणेन, प्रशिक्षण-प्रदानेन, यन्त्रागार-प्रतिष्ठापनेन च साहाय्यं विधीयते विरोधिभिरपि राष्ट्रैः । कानिचिद् दुराग्रहपराणि राष्ट्राणि वर्जयित्वा सर्वैः सह भारतस्य मैत्री । न तत्र वादः, वर्गः वर्णो वा बाधकः । अथ तावद्देशान्तरं पक्षस्तस्य नीतेः । अपरस्मिन् तु महती हानिरप्यनया समपद्यत । तथाहि, महत्त्वाकाङ्क्षिभिः कुटिल-मतिभिर्बलदर्पिभिश्च कैश्चिद् राष्ट्रैस्तस्य तटस्थता नीति-दौर्बल्यप्रमाणमित्येव स्वीकृता । अतोऽतीतेष्वपि त्रयोदशाधिकेषु वर्षेषु नाद्यापि त्यक्तः पूर्तगल्लीयैर्भारतस्य प्रदेशः । पाकस्थानमपि कूटनयेनाङ्गलामेरिकमाहात्म्येन वृद्धसाहसं नाधिकृतं कश्मीरभागं मुञ्चति । निरन्तरं भारतमपकुर्वदपि तदस्माच्छासर्वं सामदानाभ्यामेव तोष्यते, स्वहितानां बलिदानेनापि तत्प्रसाद्यते । जागतमवगणय्यापि तेन सह सन्धिर्विधीयते । चीनस्य माया-जालप्रतारितैरतंदेशस्य महान् भाग्यश्चीनैर्हारितः । मैत्र्यैव सोऽपि मोचयिष्यत इति मरु-मरीचिका भ्रान्तैस्तैरद्यापि चीने विश्वासो विधीयते । अस्या नीतेस्तावदद्य परिणामो यत्—

न यत्र स्थेमानं दधुरति-भय-भ्रान्त-नयना
गलद्दानोद्रेकभ्रमदलिकदम्बाः करटिनः।
लुठन्मुक्ताभारे भवति परलोकं गतवतोः।
हरेरद्य द्वारे शिव ! शिव ! शिवानां कलकलः

(भा वि.)

वस्तुतो युगमिदं शक्ति-संतोलनस्य। सर्व-विध-शस्त्रास्त्र-समृद्ध-सैन्यस्य, त्रिविध-चमू-परिवृढ-बलस्य राष्ट्रस्य शब्द एव प्रामाण्यमर्हति लोके। उक्तं च—

अवन्ध्य-कोपस्य विहन्तुरापदां भवन्ति वश्याः स्वयमेव देहिनः।
अमर्ष-शून्येन जनस्य जन्तुना न जात-हार्देन न विद्विषादरः॥

(किरा. १। ३३)

अतो वर्तमानायां स्थितौ शक्तिसंग्रहाय युद्धस्य प्रत्यादेश एवोचितः। सम्मानस्य रक्षार्थं कामं रणस्यानिवार्यताऽऽपतेत्, परं यावच्छक्यं तद् दूरीकृत्य देशस्य सर्वतोमुखं निर्माणमेव करणीयम्। तदर्थं च तटस्थतानीतिरेवापेक्ष्यते। अनया च लोकमतमपि स्वपक्षे क्रियते। संकट-काले तदपि सहायकं स्यात्। अनया सह कूटनीतिर्यद्याश्रीयते राजनयानुसारेण सा हितानुबन्धिनी भवेदित्यपि नयज्ञानां मतम्।

---

# जनतन्त्र-पद्धतिः, तस्या गुणा दोषाश्च

अद्यत्वे राजनीति-शास्त्रस्य (Political Science) दृष्ट्या शासनस्य राजतन्त्रम् (Monarchy) अधिनायक-तन्त्रम् (Dictatorship) प्रजातन्त्रम् (Democracy) शिष्ट-तन्त्रम् (Autocracy) सैन्यतन्त्रम् (Beaurocracy) इत्येवं प्रकारेणानेकाः पद्धतयो निरूप्यन्ते, तासु जनतन्त्र-प्रणाल्येव सर्वाधिका लोकप्रिया। वर्तमाने युगे विश्वस्मिन्नपि विरलान्येव राष्ट्राणि वर्तन्ते, यत्रान्या विशेषेण राजतन्त्र-पद्धतिर्वर्तते। साम्यवादिषु देशेष्वपि न राजतन्त्रमपि तु जनतन्त्रस्यैव विकृतः प्रकारोऽधिनायक-तन्त्रमधिकृतम्। इंग्लैण्डादिषु देशेषु, यत्र राज्ञा न सर्वथाऽभावः, केवलं सामन्त-युगस्यावशेष-सूचकम् राजतन्त्रम्। तत्राऽपि जन-संसदा तेषामधिकारा नियम्यन्ते। विधानानुकूला. शासकास्ते प्रजा-प्रतिनिधिभिर्निर्णीतस्य प्रामाण्यमाचरन्तो हस्ताक्षर-यन्त्रमात्रम् (Signing Machine)। जनतन्त्रस्य परिभाषा नव-जगत् (New world) संज्ञया ख्यातस्यामरीका-देशस्य राष्ट्रपतिना अब्राहम लिंकनेनैवं कृता—

'Democracy is a government for the people, of the people, by the people.'

अर्थात् जनाना हिते जनैर्निर्वाचितानां जनानां शासनं जनतन्त्र इति।

अस्या जनतन्त्रपद्धत्या अनेके गुणाः। अस्या शासनाधिकारः प्रत्यक्षं परोक्षं वा प्रजानामेव। लोकेन स्व-मतदानेन निज-प्रतिनिधीकृत्य प्रेषिता जना एव बहुसंख्यकाः सन्तः, शासनं चालयन्ति। अतो नैवतन्त्र इवास्या व्यक्तिगतं स्वातन्त्र्यमपह्न्यते। प्रति-गृहं, प्रतिविपणि, प्रति-चत्वरं शासकदलस्य स्वैरमालोचनं कर्तुं शक्यते, यथो भ्रष्टेषु शासकेषु रुष्टा जनता यथा-नियममान्दोलनैः संसदि चाविश्वास-प्रवर्तनैः शासन-कर्तॄन् पदाच्च्यावयितुमर्हन्ति। प्रत्येकं वयस्को (Adult) नरः नारी वा स्वमतदानस्याधिकारिणी। नात्र व्यक्तेरेकस्या उचिताऽनुचिता वेच्छा निग्रहानुग्रहयोः प्रभुः लोकाः हितमहितं वा विमृशन्तीति लोकतन्त्र-शासने ते स्वकल्याणं साधु कर्तुं क्षमाः। विचार-स्वतन्त्रता तदभिव्यक्ति-सामर्थ्यं चास्या. प्रणाल्या विशेषता। अत एव

समाचार-पत्राणां प्रजानां प्रतिनिध्यमाचरतां वैशिष्ट्यमत्र। न कोऽपि निरपराधो यथानियमं न्यायालयस्य निर्णयं विना निग्रहीतुं शक्यः। तथा कुर्वंश्च शासनमप्यभियुज्यते। प्रजातन्त्रे विधानं सर्वोपरि। तस्य समक्षं शास्ता शासितो वा समानः। लिङ्गकृता, जातिकृता वर्ग-कृता वाऽयोग्यता न तत्र विहिता। किमपि कार्यं बहूनां विचारेण भवतीति नैकस्येच्छा राष्ट्रं स्वर्गं रसातलं वा प्रापयितुं क्षमा। अन्यासु प्रणालीषु योग्या अयोग्या वा कतिपये जना प्रजानां भाग्य-निर्णयमनुतिष्ठन्तीति भूयानन्यायावसरः। परं नैतत्प्रजातन्त्रे सम्भवति। योग्याः परीक्षिताश्च निर्वाचिताः स्युश्चेत्तर्हि व्यवस्था लोक-कल्याणायैव कल्पेतेति न संशयः।

विश्वस्य प्राचीन इतिहासः प्रायो राजतन्त्र-प्रधान एव। अतीते सर्वत्रापि सामन्त-वादस्यैव प्रभुत्वमभूत्। राज्ञां महाराजानां सम्राजां च वर्चस्वमक्षुण्णमासीत्। परं लभ्यन्ते तादृशानि प्रमाणानि यैः प्रागैतिहासिककाले जनतन्त्रस्य सत्ता सूच्यते। यथा वेदेष्वेव—

'स्वाराज्यं वैराज्यं पारमेष्ठ्यम्, राज्यं महाराज्यमाधिपत्यमयम्' इति। एतेषु स्वाराज्यं विशेषेण वैराज्यं राजविहीनं शासनं प्रजातन्त्रमेव सूचयति। एतादृश शासन-प्रधानानि राष्ट्राणि च गणा इत्युच्यन्ते स्म। महाभारतस्यानुशासनिके पर्वणि राजधर्म-प्रसंगे युधिष्ठिरस्य गणानां विषये भीष्मं प्रति प्रश्नो लभ्यते। बौद्धसाहित्यानुशीलनेन गोतम-बुद्धस्य समये लिच्छिवीनां शाक्यानां मल्लानां वृजीनां च गणराज्यान्येवासन्। लिच्छिवीनां शक्तिमद् राष्ट्रं वैशाल्यां (इदानीं बसाढ इति ख्यातो ग्रामः) बभूव, शिशुनागवंश्येन बिम्बसार-पुत्रेणाजातशत्रुणा च ध्वस्तमभूदिति प्रसिद्धम्। अलक्षेन्द्र (सिकन्दर) स्याक्रमणकाले पञ्चनदेषु मद्रकाः, यौधेयाः, त्रिगर्ताः, क्षुद्रकाः, अन्ये च गणा आसन्। एवं भारते जनतन्त्रपद्धतिः पुराऽप्यासीदिति निर्विवादम्। समुद्रगुप्तस्य जयेन तस्या अन्तोऽजायत।

अथ यद्यपि कोणात् कोणं विश्वस्य राजतन्त्रस्य भूः सत्ता सतङ्क्वारं त्रुट्यन्ति, अतिशयेन लोकप्रिया चेयं प्रजातन्त्र-पद्धतिः तथाऽपि न सर्वथा निर्दोषा। तथाहि— योग्या अयोग्या वा शिक्षिता अशिक्षिता वाऽत्र प्रतिनिधी-भावं मतदानं चार्हन्ति। बहुधा छलेन धन प्रदानेन वाऽनर्हा अपि सदसां सदस्या भवन्ति। तादृशाः स्वार्थमेव साधयन्ति न परमार्थम्। पुनर्बहु-सदस्य-दले शासने सति, तस्यैव नीतिरुचिताऽनुचिता वा, राष्ट्रस्य भाग्यं निर्णयं करोति। धन स्खलितान्यपि समर्थन्ति। प्रत्येकं कार्यं सदसः स्वीकृत्या स्यात् इत्यत्यावश्यके कार्येऽपि वृथा विवादेन विलम्बो जायते। निर्वाचनव्यवस्थायां पोषणादिषु च महान् अर्थव्ययः सम्पद्यते।

शासन खलु मन्त्राधीन भवति । न च भूयासो मन्त्र रक्षणे समर्था ।

उक्त च—

> मन्त्रो योध इवाधीर सर्वाङ्गै संवृतैरपि ।
> चिर न सहते स्थातु परेभ्यो भेद-शकया ॥ (शि व २।१६)

भीष्मेणापि युधिष्ठिरकृत प्रश्नमुत्तरयता गणराज्याना दोषा वृद्धि-प्रकाराश्च वर्णिता । यथा—

'चार मन्त्र बलादाने सामदान विभेदनै । क्षय व्यय-भयोपायै कर्षयन्तीतरेतरम् ॥
तत्र दानेन भिद्यन्ते गणा. सघात वृत्तय । भिन्ना विमनस सर्वे गच्छन्त्यरिवश भयात् ॥
भेदाद् गणा विनश्यन्ति भिन्ना सूपजपा परं । तस्मात्सघात योगेषु प्रयतेरन् गणा सदा ॥
अर्था ह्येवाधिगम्यन्ते सघात बल-पौरुषात् । बाह्याश्च मैत्रीं कुर्वन्ति तेषु सघात वृत्तिषु ॥'

इत्थ गणतन्त्रेषु विविधाना दलाना शासने मन्त्रभेदस्य भय भवति । तदर्थमपि भीष्मेण प्रोक्तम्—

"मन्त्रगुप्ति प्रधानेषु चारश्चामित्रकर्षण । न गणा. कृत्स्नशो मन्त्र श्रोतुमर्हन्ति भारत ॥"

परेषामुपजापेन गणा शत्रुवश यान्ति । तै कृतादुपप्रवाद् भय महदुत्तिष्ठति । उत्कोचादिबाहुल्येन, प्रमादेन, चरित्र-दोषाच्च गणतन्त्राणा दोषा उद्भवन्ति । एतान् दोषानभिवीक्ष्य स्पष्टीभवति जनतन्त्रस्य दौर्बल्यम । पर शिष्टेषु ततोऽप्यधिका उपाधय इति जनै प्रजातन्त्र-प्रणाल्येव विशेषेण स्वीक्रियते ।

अद्य लोक-तन्त्र स्वीकृत्य राष्ट्रैरत्याश्चितोन्नति कृता । अमरीका देश, रूस, मिश्र, भारतम् अन्ये च प्रजातन्त्र एव नवनिर्माण व्यधु । पर तत्साफल्याय जनाना शिक्षा, स्वकर्तव्य प्रति जागरूकता, दृढमनुशासनम्, योग्यतमाना परीक्षिताना च हस्तेऽधिकार., आलोचनाना साध्वी सख्या चानिवार्या । अन्यथाऽवसरवादिना हस्ते गत शासन राज-तन्त्रादप्यतितमा क्लेशद भवति ।

---

# भारत-चीन-सीमा-विवादः

प्राच्य देशेषु भारतवर्षवत् चीन देशोऽपि नितरां प्राचीनः सभ्यः उन्नतश्च। तस्यापि संस्कृतिरतिपुराणी समुन्नता च। गुप्तकाले कुमारजीवशान्तिरक्षित प्रभृतयो महापण्डितास्तं देशमगच्छन् बुद्धस्य संदेशं च तत्र समदिशन्। चिरादेव भारतेन सह तच्छासकानां मैत्री सम्बन्ध एवाभूत्। भारतस्य स्वातन्त्र्यलाभानन्तरं प्रधानमन्त्री जवाहरलालोऽपि चीनानां स्वागतभाजनतामगात्। तत्रत्यो मुख्यामात्यश्चाउ एन-लाई नामा चास्माकं देशस्य यात्रामन्वतिष्ठदस्मत् सत्क्रियां चागृह्णात्। सर्वतः 'भारतीया-श्चीनाश्च भ्रातरः' (*हिन्दी चीनी भाई भाई*) इति घोषः प्रासरत्। *विश्वेन ज्ञातम्, द्वौ* महादेशौ भिन्नादर्शावपि मिथः सख्याबद्धौ जगति किमपि नवं परिवर्तनं करिष्यतः।

चीनस्य प्राचीनाः शासका विशेषेण माञ्चूवंश्याः सम्राजोऽतिविस्तारवादिनः साम्राज्य लोलुपाश्चासन्। परं गत शताब्द्यां सर्वतः प्रवृत्ते प्रजातन्त्रवादे डा० सनयात सेन नाम्नो नायकस्य नेतृत्वे तत्रापि क्रान्तिर्जाता राजतन्त्रस्य समाप्त्या च सह जनतन्त्रं प्रतिष्ठितम्। गत-महायुद्धानन्तरं च महति गृह-कलहे साम्यवादिनां विजयेन चीन-देशः साम्यवादप्रणालीमनुरुन्धे। •

भारतस्योत्तरसीम्नि पृथिव्याः पृष्ठदेशत्वेन (संसार की छत) ख्यातस्त्रिविष्टप-देशः (तिब्बत) चिरन्तनः बौद्धधर्मानुगामी च। कदाचिदयं चीनैरधिकृतः पश्चाच्च स्वातन्त्र्यमभजत्। आङ्ग्ल शासन-काले तत्र भारतीयाः व्यापारादिषु सौकर्यार्थं बहूनधिका-रानभुञ्जत। अस्माकं सैन्य-गुल्माश्च तत्राभवन्। विस्तृता पर्वत शृङ्खला तं देश-मस्माद् विभजते। १९१४ तमे ख्रीष्टाब्दे शिमला नगरे आङ्गल चीन तिब्बत-प्रतिनिधि-सम्मेलने मेकमोहन-सञ्ज्ञेनाङ्ग्ल प्रतिनिधिना निर्धारिता सीम रेखा स्वीकृताऽऽसीत्। क्षेत्रमिदं गिरि-मध्यवर्ति नितरां दुर्गमं मार्ग हीनं च। लद्दाख क्षेत्रे 'चुशूल' सञ्ज्ञमेकमेव वातायानम् (हवाई अड्डा)। वस्तुतो भारत-सर्वकारेण चीन मैत्री विश्वस्तेन न तस्मिन् भागे सुरक्षा-व्यवस्था व्यवस्थापिता।

यावत् त्रिविष्टप देशः स्वतन्त्र आसीत्, तावन्नान्वभूयत किमपि काठिन्यम्। परं यदा चीनैः सैनिकाक्रमणेन त्रिविष्टपो वशीकृतः, तदवधि विवादारम्भोऽपि

जात । चीनाक्रमणस्य स्तवर्जं सर्वैरपि देशैर्विरोधे कृते भारत-शासकैर्घोषित यत् त्रिविष्टपश्चीनस्यैवाङ्गमिति । एतेन वर्धितोत्साहैश्चीनैः पूर्णतया त्रिविष्टप आयत्तीकृत । पर तदा स्वायत्त-शासन तस्य स्वीकृतम् । अयमेव राजनैतिक प्रमादो भारतस्यापि शिरोव्यथाया मूलम् । काममद्य भारतीया प्रधानामात्या न स्वत्रुटि स्वीकुर्युः परमयमभूद् राजनैतिकोऽभ्युपगमः । तेनैव भारतीय क्षेत्रोपरि चीनाक्रमण सुकरमभूदिति स्वय कल्पेय विपत् ।

न चेयमाक्रान्तिराकस्मिकी, अपि त्वायोजित-पूर्वा । अत एव चैनेषु मानचित्रेषु विस्तृत भारतीय क्षेत्र चीन सम्बन्धितया दर्शितम् । बहुश सीमा निर्धारणाय चोदिता अपि चैनाधिकारिणोऽवहेलामवाचरन् । त्रिविष्टपे स्व योजना सत्यापयितु तैरनुष्ठितेभ्य कार्येभ्यो भीतास्त्रैविष्टपा शासका भारते शरणमगृह्णन् । अधुना भारतीयाना त्रिविष्टपे व्यापारादि कार्यं निरुद्धम् । शक्ति-मदान्धास्ते चीना अस्मान् विस्तारवादिनो वदन्ति, स्वय च तैर्विस्तृत भारतीय क्षेत्रमधिकृतम् । एकदा रक्षासैनिकाना गुल्मोऽप्याक्रान्तो निर्दय च हता निरपराधा सैनिका ।

अद्यापि भारतस्य शासका न प्रत्याक्रमण विदधति, पर्यन्त-भूमिषु मार्गादिनिर्माणे रक्षा प्रयत्नानाचरन्ति । परमधिकृत-क्षेत्राणा मुक्तये न किमपि सम्प्रति प्रतिविधातु शक्यते युद्ध-भीतै । तेषामुद्यमो न सत्यमनोपूरणम् । इत साम्यवादिनो भारतीया अपि चीने समवेदना भजन्तोऽन्त कोप समाचरन्ति । अन्ये गणास्तु (Parties) त प्रति कठोरा प्रतिक्रियामर्पयन्ते ।

अधुना स्थितिरियमति विषमा । युद्धार्थिन प्रमोदन्ति दर्श दर्शमिम सीमाविवादम् । भारतीया प्रजा अनुभवन्ति कातर्यं न प्रतिविदधतां शासकानाम् । राजनैतिकानि दलानि समस्याया अस्या अपदेशात् समावयन्ति विजय निर्वाचने । शासकाश्चास्माकमुभयत पाशरज्जु मध्ये पतिता । स्व क्षेत्र-रक्षणाय प्रत्याक्रान्तु चेच्चेष्टेरन् चेत्स्वल्पमपि युद्ध महासमरे विपरिणमेत् । उदासीरन् चेत्क्षुब्धा प्रजा कदर्थयेयु तान् । सभाविनस्य तृतीय-समरस्य क्षेत्र माभूद् भारतमित्यपि तेषा प्रयास । तथा सति देशस्यैव विध्वसो भवेदित्यवाञ्छनीयमेतत् । परमना सर्वेषा स्वक्षेत्रस्य परहस्त गमन राष्ट्रीयसम्मानस्यैव हानिकरम् । पर यदि न समाधीयते विवादोऽय साम्ना, दुष्परिणामोऽय सर्वस्य परिणमेत्स्यामि विरोध रूप । असहृततमयो प्रलततमयोर्महतोर्देशयोरनयोर्मैत्र्यव लोकक्षेमाय कल्पेत । पर शान्तिकामनोभयतस्त्वापद्यते । दुराग्रहे तु मृगतृष्णेव समाधानाशा ।

# स्त्री-शिक्षा कीदृशी भवेत् ?

अथ प्रश्न इदानीं भारतीयानां समक्षं भूयोभूय आयाति यत् स्त्रीशिक्षा कीदृशी स्यात् ? कथं तावदस्योद्भूतिः ? नाभूत्प्राचीनकाले एतादृशी समस्या । तदा बाला इव बालिका अपि पाठ्यन्तेस्म । गार्गी, घोषा, विश्ववारा, लोपामुद्रा चैता नार्यो ब्रह्मवादिन्यो मन्त्रद्रष्ट्र्यश्चासन् । जनक-सुलभोपाख्यानाच्च सुलभाया वैदुष्यं स्फुटीभवति । महाभारते कुन्त्या विदुलायाश्च यादृशं चरित्रं चित्रितम्, रामायणे च कैकेयी तथा सीता यादृश्यौ वर्णिते, तदपि तासां साधु शिक्षितत्वं साधयति । आद्यशङ्कराचार्यस्य मण्डनमिश्रपत्न्याः सकाशात्पराजयः, 'या वैदर्भगिरां वासः कालिदासादनन्तरम्,' विजयासम्बन्धं इयमुक्तिः, 'नीलोत्पलदलश्यामां विज्जिकां मामजानता, वृथैव दण्डिना प्रोक्तं सर्वशुक्ला सरस्वती ॥' इति सरस्वती प्रतिमूर्ति-विज्जिका-प्रशस्तिः, 'काले माषं मापे मासं षश्च शकासं वदति सकाशम् । उष्ट्रे लुम्पति र वा ष वा, तस्मै दत्ता विकट-नितम्बा ॥' इति विकट-नितम्बायाः वैदोरिकस्तिरमलाम्बिकाया प्रौढ-गद्य-निर्भरा वरदाम्बिका परिणयचम्पूः सर्वमेतत् स्त्रीणां शिक्षितत्वं साध्नोति । तास्वसु चतुःषष्टिः कलानां ज्ञानं विज्ञानं साहित्यं कामशास्त्रं च साध्वध्यैयत । राजकुमारीणामभिजातकन्यानां च शिक्षणाय समानिता आचार्या न्ययुज्यन्त । साधारणेषु जनेषु कीदृशी व्यवस्थाऽभूदिति न प्रमाणमद्योपलभ्यते । परमनुमीयते यत्तदर्थमपि कश्चित्प्रबन्धोऽवश्यमेवासीत् ।

मध्ययुगे विशेषेण यवनागमनात्प्रभृति नारी-शिक्षा निरुद्धाऽभवत् । तेषां समाजे स्त्री वासनाशमनस्य साधनम् उपभोगसामग्री चेति विजय-मद-मत्ता अमन्यत । अन्या सबलात्कारमद्दूषयन्निति तासां पितरो बाल्य एव पाणिमग्राहयन् । तस्य परिणतिरतितमां समाजघातिका समजनि । ययाऽस्याः स्त्रियः सर्वथाऽज्ञानान्धकारे न्यमज्जन् । येषामेव विचारवतां सन्तति साक्षरा सती शिक्षितेति सम्मानमभजत् ।

आङ्ग्लानां शासनकाले नव-शिक्षा-पद्धति-प्रसारेण सहैव कन्यानां शिक्षणस्यापि प्रश्नः समजायत । प्राचीन-परम्परानुयायिनः 'न स्त्री स्वातन्त्र्यमर्हति' इति वचने

'स्त्रीशूद्रौ नाधीयाताम्' इति कथने च श्रद्दधाना सर्वथा नारी-शिक्षाया विरोधिन । प्रगतिशीलास्तु पुरुषाणामिव स्त्रीणामपि विकास समाज-कल्याणाय मन्वानास्तासा शिक्षाया पक्षपातिन । वस्तुतो न कोऽपि सम्यमन्यो नारीमशिक्षिता दिदृक्षेत् । जननी-भगिनी, पुत्री गृहिणी चेति बहु-व्यक्तित्वशालिनी नारी शिक्षाऽभावे कथ समाजस्योन्नतमङ्ग स्यात्, कथ वा कस्यचिच्छिष्टस्य विदुषोऽर्धाङ्गिनी पद भजेत् । शिक्षितैव पुरुषस्य सह धर्म-चारिणी सख्या जीवन-सहचरी च भवितु समर्था । सैव सुदक्षा गृहिणी गृह लक्ष्मी-विलासोचित विधातु प्रभविष्णु । मोद्यमेवंतद् यदि सुशिक्षिता नारी गृह-सचालने असमर्था मन्येत । न च केवल शिक्षा तासा शील भग-हेतुः । किं नाऽशिक्षान्धकार-मग्ना अनाचार दूषिता जायन्ते ? शिक्षा-प्रभावात् तासा विवेको जागर्ति, यस्य प्रसादात् चरित्र-भ्रष्ट-दोषाँल्लम्पटाश्च पुरुषान् साधु परिचेतु क्षमा स्यु । नार्या धैर्यमात्मबल साहस च जागृत स्यात्, यतो न यथा स्वेच्छया बलाद् वा भ्रश्येत ।

पर शिक्षेय कीदृशी देयेति प्रश्नोऽद्यापि तिष्ठति । वस्तुत स्त्रीणा चारित्र-भ्र शकेमा पाश्चात्य-शिक्षामधिकृत्यैव, यत्र विषयाणामभ्यासो विधीयते, शीलसम्बन्धे तूदास्यते । माध्यमिक शिक्षा-सस्थाना वातावरण विशेषेण सह-शिक्षा-प्रधानानाम्, तत्र छात्राणामुच्छृ ङ्खलताऽनुदिन वर्धते । ते विद्याध्ययनेन सार्धं पत्नी-मान्वेषणमपि विदधति । मार्गे सहपाठिनीरनुधावन्ति, ता श्रावयन्तोऽश्लीलानि गीतानि गायन्ति, विशेषेणाकर्षकाणि वस्त्राणि परिदधति, चलचित्रादि प्रदर्शनेन ताः प्रलोभयन्ति । एतेन शालीना अपि कन्या शीलाच्च्याव्यन्ते । महाविद्यालयेषु विश्व-विद्यालयेषु तु स्थितिरतितमा दूषिता यत्र (प्राध्यापका स्वय स्व-शिष्या काम-पिपासा-साधनानि विदधति । ताश्च वराकयस्तान् प्रसादयितु परीक्षाया भूयसोऽङ्कादव लब्धुमात्मानमर्पयन्ति । यदि कन्याना सरक्षका शिक्षामेव तासा दूषिका मन्येरस्तर्हि कस्तेषा दोष ?

विद्यार्थिन्योऽपि पतिवरा इव क्लृप्तशृङ्गारा कटाक्षपातै परिहासैश्चाह्व-यन्तीव सतीर्थ्यानध्यापकाश्च । चलचित्राणा वातावरणस्य च तादृश प्रभावो येन सर्वत्र तादृग्युच्छृङ्खलता लभ्यते । यदा—

कृश, काण, खञ्ज, श्रवणरहित पुच्छविकलो
व्रणी, पूयक्लिन्न कृमि कुल शतैरावृत-तनु ।
क्षुधा क्षामो जीर्णं पिठरक-कपालार्पित-गल
शुनीमन्वेति श्वा, हतमपि मदयत्येव मदन ॥ (भ श.)

का कथा तर्हि सद्यस्कुक्कुटाण्डभोजिना वृषिका पिच्छिल मनसां यूनाम् । इत्थमिय पाश्चात्यशिक्षा पथभ्रष्टा करोति । तर्हि कन्या केवल गीतारामायणादिक

पठेयु, पूर्ववद् वा 'असूर्यम्पश्या' तिष्ठेयु ? नैतत्सम्भाव्यतेऽस्मिन् युगे। यदा तासा कृते सर्वाणि क्षेत्राण्युन्मुक्तानि, यदा ता स्वसाहसेन बुद्ध्युत्कर्षेण च पुरुषान् पराजयन्ते, सैन्यसञ्चालने, विमानचालने, मल्लयुद्धे, सागरतरणे, यान्त्रिकविद्याया प्राड्विवाक-व्यवसाये च तासा तुल्या गतिस्तदा कथ ता दर्वीहस्ताश्चुल्लीधमन एव काल नयेयु ? केषाञ्चिद् विदुषा मत यत् स्त्रीणा कृते पाठ्यक्रम एव पृथक् स्यात्। भाषाणा ज्ञानेन सह कला, शिल्पम्, साधारणी चिकित्सा (First-aid), पाक-क्रिया, गार्हस्थ्य विज्ञानम् (Domestic Science), गणित, व्यवहारज्ञान चेति तासा शिक्षा विषये सर्वं समावेश्यम्। नारीणा दाम्पत्यं मातृत्व च यथा सफल भवेत्तथा ता शिक्षणीया। यतो न तासा कार्यक्षेत्र पुरुषाणामिव। तासा विषयेषु एतेषु प्रतिभाया विकास साधु सम्भवति। शालीनता गृहकार्यदक्षता च स्त्रीणामनुपेक्षणीया।

वस्तुतो नात्र काचिद् विप्रतिपत्ति। नारीणा साफल्य मातृत्व एवेति प्राय सर्वा एव ता दाम्पत्य स्वीकुर्वन्ति। अतो यथा ता सुख सकौशल च गार्हस्थ्यमाचरेयु-स्तथा शिक्षणीया। कला शिक्षयित्वाऽर्थार्जनसामर्थ्यं तासामवश्यमापादनीयम्, येन सङ्कटकाले न पराश्रयणमपेक्षित स्यात्। स्त्रियो हि प्रायोऽर्थकार्पण्येनैव मार्ग-भ्रष्टा भवन्ति। तासा शिक्षा चरित्रनिर्माणेन सह व्यवसायोपयोगिनी स्यात्। पारन्तु विशेषेण प्रतिभावत्यस्ता अन्यानपि विषयान् शिक्षितुमर्हन्ति। न तत्रावरोध कार्य। कला, धर्मशिक्षा, इतिहास, विविधभाषाणा परिचय, धर्मशास्त्रम्, व्यवहार-शिल्पम्, पाक क्रिया, आसुत (अचार मुरब्बा आदि) प्रभृति वस्तु-विज्ञानम् तासाममी विषया अनिवार्या स्यु। भूमि धराणा कन्या कृषिमुद्यान शिक्षा चाम्पत्येषु। सलिलपत्तनेषु स विशेषरूचय तत्राधिक प्रयतेरन्। औषध विज्ञानस्य सामान्य ज्ञानमपि तासा सर्वासा स्यात्। एतादृशी शिक्षा स्वस्थे क्षेत्र प्रवृत्ता सती नारीणा क्षेमाय कल्पेत।

---

# वर्णाश्रम-व्यवस्थाया उपयोगिता

ऋग्वेदस्य दशमे मण्डले चतुर्णां वर्णानां विराट्पुरुषाङ्गत्वेन वर्णनं लभ्यते—

> ब्राह्मणोऽस्य मुखमासीद् बाहू राजन्यः कृतः।
> ऊरू तदस्य यद् वैश्यः, पद्भ्यां शूद्रो अजायत॥

आर्यैः समाजस्य वर्ण-चतुष्टये जीवनस्य च चतुर्ष्वाश्रमेषु विभाजनं कृतम्। वर्णेषु ब्राह्मणः समाजस्य मुख-स्थानीयः, क्षत्रियश्च बाहु-स्थानीयः, वैश्यो जंघा-स्थानीयः, शूद्रश्च चरण-स्थानीयः, एवमाश्रमेषु जीवनस्य प्रथमः कालो ब्रह्मचर्यस्य, द्वितीयश्च गार्हस्थ्यस्य, तृतीयो वानप्रस्थस्य चतुर्थस्तु संन्यासस्येति सकलस्यापि शतवर्षात्मकस्य पुरुषायुषस्य पूर्णो विभागः सोद्देश्यः।

अद्येयं व्यवस्था प्रायो निन्द्यते लोकैः, अनुपयोगिनी हानिकरी च साध्यते। परं वैज्ञानिकीयं न तैः साधु परिचीयते। वस्तुतो वर्ण-व्यवस्था समाजवाद आर्याणाम्। तथाहि विद्याया अध्ययनमध्यापनं यजनं याजनं प्रतिग्रहो दानं चेति ब्राह्मणस्य कर्तव्यानि। शासनं, प्रजाना रक्षणं बलकार्यं क्षत्रस्य। कृषि वाणिज्यं पशुपालनं चेति वैश्यस्य कर्माणि। वर्णत्रयस्य सेवा स्वजातीय-कर्मणामनुष्ठानं च शूद्रस्य कार्यं निर्दिष्टम्। ब्राह्मणस्य मुखस्थानीयता तत्कर्मापेक्षया। तथाहि विद्याया अध्ययन-मध्यापनं वा यज्ञादि च मुखेनैव क्रियते। तस्य स्वयं ज्ञान-ग्रहणं ज्ञान-प्रदानं मस्तिष्क-कार्यं बौद्धिकतां प्रकटयति। बुद्धिबलस्य शरीर-बलापेक्षया श्रेष्ठता स्वीकृतोपकारकत्वात्। शारीरं तु पाशवं पर-पीडनेऽपि प्रभवतीति ततो निकृष्टम्। परं समाज-रक्षण-कार्य-मधिकारयुक्तं नियन्त्रितं सत् कल्याणाय कल्पतेऽनियन्त्रितं तु मदान्धतया पीडनं कुर्यात्। अतो बुद्धिबलस्य शारीर-बल-नियामकत्वम्। वस्तुतः केवलं बुद्धिबलं शारीरं वा न श्रिये। द्वयोः समन्वय एव समाजस्य क्षेमाय। यथोक्तम्—

> यत्र ब्रह्म च क्षत्रं च सम्यञ्चौ चरतः सह।
> तं लोकं पुण्यं प्रज्ञेषं यत्र देवाः सहाग्निना॥

परं न केवला बौद्धिकता देहबलं वा श्रेयसे संभवति। अन्नाधीना खलु प्राणिनां प्राणाः। व्यवहारास्चार्थ-साधना। अत एव समाजस्य पालनं कृषि-वाणिज्याद्यधीनम्। तत्कर्म च वैश्यानाम्। यतोऽध्ययनाध्यापनादिकर्मणि न वणिग्वृत्ति-रुचिता, रक्षणस्य चोत्तरदायी न कृष्यादेरतिरिक्तं भारमर्हति व्यवस्था-भङ्गात्। वंशानुक्रमागते च व्यवसाये नैपुण्योदभव इति सततेरपि पैतृकोद्योग एव प्रवृत्तिर्विहिता। समाजस्य क्षेमाय शर्मणे च चतुर्थ-वर्णस्य शूद्रस्य स्वीकृतिः। विद्या-सत्तादि-विहीनोऽयं वर्गः सेवा-धर्मेणैव निःश्रेयसाय कल्पते।

बुद्धि-कर्म मस्तिष्कस्य, तच्चोत्तमाङ्गमिति ब्राह्मणस्याम्यर्हितत्वम्। परं न तस्य धनार्जनादिना सम्बन्धः। तत्र प्रवृत्तो हि स स्वकर्मण्युदासीत। क्षत्र च क्षतात्त्राणम् तस्यैतस्याधीनं तदर्थं बाह्वोरेव प्रयोग इति बाहु-स्थानीयो राजन्यः। न तस्य दानादि-ग्रहणं तपश्च नियतं कर्म। दानस्य पौरुष-विपरीतत्वात्तपसश्च दौर्बल्यावहत्वात्। शिक्षा रक्षा चेत्युभयं समाज-भद्रायावश्यकम्। अतएव ब्रह्म क्षत्रयोः परस्परं सह-योग उचितो मतः।

जंघे यथा गमनादि-व्यापार-प्रवर्तिके, ताभ्यां विना पङ्गुरेव प्राणी; तथैव कृष्यादिं विना न सामाजिका व्यापाराः संभवेयुरिति लोकयात्राया आधार-भूतो वैश्य-वर्गः। पादयोर्वपुषः स्थितिरिति शूद्रस्य समाज-स्तम्भत्वमिष्टम्।

इयं वर्ण-व्यवस्था जन्म-मूलाऽऽसीत् कर्म-मूला वेति विचिकित्सायां द्विविधे अपि प्रमाणे उपलभ्येते। 'चातुर्वर्ण्यं मया सृष्टं गुण-कर्म-विभागशः' इत्यत्र 'मया' इति पदेनेश्वर-कर्तृकत्वं वर्ण-चतुष्टयस्य मन्यते।

नोपतिष्ठेत्तु यः पूर्वां नोपास्ते यश्च पश्चिमाम्।
स शूद्रवद् बहिष्कार्यः सर्वस्माद् द्विजकर्मणः॥'

इति मनुवचनात् 'स्त्री-शूद्रौ नाधीयाताम्' इति सूत्रकारोक्तेश्च जन्म-मूलता वर्णानां सिध्यति। परं महाभारते यक्ष-युधिष्ठिर-संवादे वृत्तवत एव ब्राह्मणत्वोक्तेः विश्वामित्रस्य ब्राह्मण्य-प्राप्त्युद्योगोपाख्यानाच्च कर्मणैव वर्णानां स्थितिः प्रमाणी-क्रियते। गीतायां चतुर्णामपि वर्णानां स्वाभाविकानि कर्माण्युक्तानि। यथा—

ब्राह्मण-क्षत्रिय-विशां शूद्राणां च परन्तप।
कर्माणि प्रविभक्तानि स्वभाव-प्रभवैर्गुणैः॥
शमो दमस्तपः शौचं क्षान्तिरार्जवमेव च।
ज्ञानं विज्ञानमास्तिक्यं ब्रह्म-कर्म स्वभावजम्॥
शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम्।
दानमीश्वर-भावश्च क्षत्र-कर्म स्वभावजम्॥

कृषि गो-रक्ष्य वाणिज्यं वैश्य कर्म स्वभावजम् ।
परिचर्यात्मक कर्म शूद्रस्यापि स्वभावजम् ॥ (गीता १८ । ४१-४४)

एतेन तु वर्णाना जन्मजातत्व सिध्यति ।

एवमेव चतुर्णामाश्रमाणा व्यवस्थाऽपि विचार-पूर्विकैव । जीवनस्य विशेषेण तिस्र एव दशा भवन्ति—कौमार यौवन जरा च । एतासु प्रथमा निर्माणात्मिका, द्वितीया विकासात्मिका, तृतीया च ह्रासात्मिका । सृष्टि-यज्ञ इवास्मिन्नपि जीवन-यज्ञे शैशव वसन्त यौवन ग्रीष्म, जरा च शरत् । आदौ सप्त-धातूना वृद्ध्या पुष्ट्या च सह बुद्धेर्मस्तिष्कस्य मनसश्च विकास सभवति । तदर्थं शक्ति सचयस्यावश्यकता । यथा घटे पूर्यमाण एव छिद्र स्याच्चेत् सलिलस्य निष्क्रमणे न स पूर्यते । एवमेव यौवन-प्राप्ति-पर्यन्त शक्तीना विकासे जायमाने तासा रक्षणमपरिहार्यम् । अत एव विंशति-वर्षाणि यावद् ब्रह्मचर्यस्य कालो निश्चित । अस्मिन् मनो बुद्धि शरीराणा विकासादतिरिक्त न किमपि चिन्तनीयम् । विकासे पूर्णे सति गार्हस्थ्ये सचिताना शक्तीनामुपयोगोऽर्थ कामयोरुपभोगे । सन्तति प्रजननेन सृष्टेर्विस्तार पितॄणामुक्ति चापाद्य नि सगतया विषयाणामुपभोगोऽस्याश्रमस्य धर्म । न जातु काम कामानामुपभोगेन शाम्यतीत्युक्तेः शनै शनैर्विषयेभ्यो मनस उपरामाय वानप्रस्थाश्रम श्रेयोऽभूत् । पुनश्च गृह भार विन्यस्य धर्मार्जनाय विराग ग्रहणमस्य धर्म । पचाशद्वर्षोपरि प्रवृत्तस्यास्याश्रमस्य तपसि लोक कल्याणायात्मन श्रेयसे चोपयोग । पञ्चसप्तत्युत्तर तु शिथिलानामिन्द्रियाणा सर्वथा विषयेभ्य उपरामान्निवृत्त-कर्मणोऽधिगतब्रह्मज्ञानस्य परम पदाधिगतये प्रयास एव सन्यास । ब्रह्मचर्य कालेऽध्ययन प्रवृत्त्या न जनाना जीविका चिन्तोचिता । गार्हस्थ्यस्य पचविंशति वर्षेषु चार्थार्जन कामोपभोग-प्रवृत्तेरवसर एवेतिोपपत्ति । पचाशदुपरि च धनार्जनादि-कार्येभ्यो विरतेर्नवानामनुकाला कृते कर्मक्षेत्र मुक्तमभूत्, तदूर्ध्वं ब्रह्मचर्य-पालनेन च सन्तति-निग्रहोऽप्यनायासेन साधित ।

इत्यमवलोकनेनार्याणा वर्णाश्रम-व्यवस्थाया वैज्ञानिकता सूच्यते । प्रत्येक जनस्य वृत्तेर्निर्धारणात् कस्याऽपि जीविका हरणस्य शकैव नैवमभूत् । एतेन न सम्प्रतीव कार्यार्थे जना द्वाराद् द्वारमभ्राम्यन् । आश्रमैश्च नियमिता समाजस्य जीवन-सस्था । कौमार एव विवाहे सति वार्धक्य यावत् सतति जनयता यावज्जीव चार्थार्जने ससक्त-मनसा क्व शान्ति, सौख्य वा स्यात् ?

केचित्तु वर्ण-व्यवस्था सामाजिकान्यायहेतुमाश्रम-व्यवस्था च परोपजीविता-मूल वदन्तो निन्दन्ति ताम् । तेषा मते वर्ण-व्यवस्थयैव समाजे जनितोत्तमाधम-भावना । ब्रह्मचारिणा वानप्रस्थाना सन्यासिना च निष्प्रयोजनो भारो गृहस्थाना स्कन्ध आरोपित । कालक्रमेण तैरेको भिक्षोपजीवी वर्ग एवोत्पादित । वस्तुत आर्याणा

भावनाऽऽसीत् त्यागपूते योगे । धनमर्जयतो नरस्य दानादिना चान्यत्र प्रयुञ्जतो न सीमातिरिक्त द्रव्य सचीयते । प्रकारान्तरेण तत् समाजस्यैव पार्श्वं मागच्छति । एवमभाव ग्रस्तानामप्यभाव-निवृत्ति सम्पद्यते । ब्रह्मचर्य-वानप्रस्थाभ्या भोगेऽपि नियन्त्रण कृतम्, तेन बहु-प्रजा-मूला निऋ तिर्नापीडयत् । सामाजिक-वैषम्यस्य मूल स्वकर्तव्य-परित्याग ।

'स्वेस्वे कर्मण्यभिरत ससिद्धि लभते नर.'

इति विस्मृत्य लोका पराजीविकामपहरन्ति । अतएव वृत्ति ह्रास्यम् । यदा ब्राह्मणा स्वाध्यायादि-कर्म परित्यज्य चर्मविक्रय रस-व्यवसाय चाचरन्त शूद्राणां वैश्याना च जीविका हरन्ति, तदा तेऽपि किमप्यन्यत्कार्यमाजीविकार्थं समाचरन्ति । वाणिज्य-प्रिया वणिजो भृति-कर्मणि (नौकरी) क्षत्रिया व्यापारे शूद्राश्चाध्यापने सज्जन्त इति स्वकर्मलोप एव वैषम्यस्यासान्तेरच मूलम् । यदा च व्यापारादे रक्षक शासन स्वयमेव वाणिज्यमाचरेत् कथ न तदा वृत्ति-ह्रास्यम् (Unemployment) उदियात् ? यदि सर्वे वर्णा स्व स्वमेव कर्म शुचितया (ईमानदारी) समाचरेयु, यथा नियमसाश्रम-व्यवस्थाया पालन च विदध्युस्तर्हि नयमुपलभ्यमाना विशृङ्खलता वैषम्य च समापतेदिति न वर्णाश्रम-व्यवस्था हानिकरी दूषिता वा । तस्या अयथा-पालना एव तद्दोषमूलम् ।

# ग्रामोन्नतिः

आसीत् कश्चित् कालो यदा ग्रामीणाना विषये केनचित्कविना लिखित-मासीत्—

तरुण सर्षपशाकं नवौदनं पिच्छिलानि च दधीनि ।
अल्पव्ययेन सुन्दरि ग्राम्यजनो मिष्टमश्नाति ॥

काममत्र समीक्षका ग्राम्यत्वदोष पश्येयु पर निराडम्बरस्य ग्राम्यजीवनस्य ध्वनिरत्र विद्यत एव । नगराणा कृत्रिमसभ्यताया प्रभावान्मुक्ता भारतीया ग्रामा अभूवन् स्पृहणीयनिवासा, स्वगुणै । कृषिसमृद्ध्या गृहोद्योगैश्चात्मावलम्बिनो ग्रामीणा श्रममय जीवन यापयन्त शान्त्या कालं नयन्ति स्म । राजानोऽपि तत्र गत्वा शान्ति-मेवाभजन्त । राजनीति-कृत कोलाहल न तानस्पृशत् । कर्मारा, रथकारा, स्वर्णकाराः, भिषज., सूचीकारा, वणिजश्च सर्वविधा व्यवसायिनो ग्रामेऽवसन्निति राष्ट्रस्य स्वतन्त्रैकिका (Unit) सोऽभवत् । राष्ट्रस्य ग्रामभाग एव जनपदसंज्ञया प्रसिद्धि-मगमत् । पुरवासिभिर्न यै सह तेषा सपर्को यदाकदैवाभूत् । उत्पादनस्य षष्ठमश कर-रूपेण प्रदाय शिष्ट ग्राम्या उपायुञ्जतेति न ते दारिद्र्यदुर्गता अवर्तन्त । प्रधानतैवात्र ग्रामाणाम्, नगराणि च कतिपयानीति न समभवत् तेषामुपेक्षा । स्वातन्त्र्यात्पूर्वं समये भारते ग्रामसङ्ख्या लक्षसप्तकमासीत् । यद्यपि यवनानामधिकारात्प्रभृत्येव तेषा स्थितौ ह्रासस्यारम्भ प्रवृत्तः परमाङ्ग्लशासने ग्रामाणा दशा शोचनीयैव जाता । कूटवणिज इमे राजनीत्या व्यापारेण चौमयथाऽपि देशमलुण्टन्निति स्वयन्त्रनिर्मित-वस्त्रशर्करादि विक्रयाय ग्रामाणा वसनोद्योग गुडव्यवसाय च नष्टप्राय चक्रुः । पूर्वं सकलोऽपि विनिमयोऽन्नेनापि समभवदिति नान्वभूवन् ग्रामीणा धनस्यावश्यकताम् । राजकरोऽपि तदाऽन्नद्वारेणार्प्यत । परमाङ्ग्ले सर्वेष्वपि कार्येषु मुद्राया एव व्यवहार कृत इति जानपदा स्ववस्तुविक्रयाय नगराणि गन्तुमबाध्यन्त । तत्र लाभजीविभि-र्वणिग्भि कूटतुलाभि कूटवर्नकै (बाट) च स्वल्पमूल्येन तेषा श्रमफलमक्रीयत भूयसा च व्यक्रीयत । एव लाभाधीन वञ्चिता कृषका घोरे दारिद्र्य-सागरेऽमज्जन् । नगराणा

सम्पर्केण तेपु कृत्रिमतापि प्रसृता। पूर्वं ग्रामेषु लोकाः शुद्ध सद्योदुग्ध स्वादीयस्तकं पुष्टिद हैयगवीन सतीन शिम्बिका-वृन्ताक-मेथिका राजिका-कूष्माण्डगोजिह्वादि-शाकान् विविधानि च फलान्युपभुज्य पौराणा स्पृहणीयस्वास्थ्या अभूवन्। दुग्धस्य घृतस्य वा विक्रय सुतस्य कन्याया वा विक्रयेण तुल्यममन्यन्त। तदवधि यक्ष्मसदृशा रोगा नामवन्कर्णगोचरा अपि। पर नागरिकाणामर्थपरता तेषामात्मनि सक्रान्ता तानपि क्षीरादिवञ्चितान् व्यधात्। तेषा स्थान दुर्व्यसनानि लम्पटता चाऽभजत्। अधुना दुग्धादि नगरेषु विक्रयार्थं गच्छति, ग्रामीणा स्वय तक्रमपि लालायन्ते। पूर्वं पञ्चायतनेषु तेषा विवादा समाधीयन्त, परमिदानी न्यायालयास्तेषामालया, मदिरालया विद्यालया, कलहा एव क्रीडा, दुर्भिक्षाणि मित्राणि, रोगा बन्धव, दौर्बल्य सखा, ईतयोऽतिथय, अकालमृत्युर्ज्ञाति, कीटाणव सहचरा, अभियोगो व्यवसाय, पैशुन्य विनोद, पराभिषग प्रमोदावसर। क्वाद्य सा ग्रामश्रीर्यस्या अवलोकनमात्रेणामोदत म्लानमपि मन ? इतोऽवकरसकर, ततो गोमयकूटम्, मध्येमार्गं विस्रगन्धा प्रणाली, रथ्यापालीषु विष्ठाऽऽविष्टा। प्रविशन्तमेव मक्षिकाणा मशकाना दशाना च सेनाऽभिषेणयतीव। गृहाणि च मृत्तिकाकुड्यानि तृणाच्छन्नपटलानि, अदत्तवातप्रकाशप्रवेशानि सकीर्णानि च यत्र प्रेयसीव महिषी पुच्छोद्धूननविकीर्ण-मलमूत्रा सतताभ्यासनिर्गन्धीकृतनासा सहैव स्वामिना स्वपिति। एवस्मिन्नेव गर्भगृहकल्पे सकीर्णे प्रकीर्णनिखिलवस्तुनि कक्षे सकलोऽपि परिवारो विश्राम्यति। अवस्था तेषा गृहाणाम्—

तस्मिन्नेव गृहोदरे रसवती तत्रैव सा कण्डनी<br>
तत्रोपस्करणानि तत्र शिशवस्तत्रैव वास. स्वयम्।<br>
सर्वं सोढवतोऽपि दु स्थगृहिण किं ब्रूमहे तां दशाम्<br>
अद्य श्वो जनयिष्यमाणगृहिणी तत्रैव यत्कुर्वति॥

इति पद्येन स्फुटतामायाति।

अशिरावसरप्रथास्वेव तेषामास्था, विवाहेषु मृत्युभोजेषु चातिसामर्थ्यं व्ययस्तान् कुसीदजीविनामृणपाशे तथाऽपातयद् यथा भूमि गृह वृषभान् हल किं बहुना, जीवितमपि दत्त्वा नाघमर्ण्यादमुच्यन्त। दूरे कोऽपि विस्मृतिवशारस्थापित-दिव्विरमालयदचेन्न तत्र चिकित्सक, सति तस्मिन् न भेषजम्, विद्यमानेषुण येषु नातुर-पक्ष उत्कोचार्थं द्रव्य यस्यार्पणेन राज्यस्य वेतनभोगिनोऽप्येते चिकित्सकगुणो यमदूता पृच्छेयुरामयकथामपि। मार्गास्त्वकुट्टिमा वर्षासु जानुदघ्नपका, ग्रीष्मे परितो धूतधूलिमयनभोमण्डला निदाघ च सतप्तरजकणा येषु गच्छन् पान्थो नरकस्येव पन्थानमनुसरति। न तेषा शिक्षा-दीक्षा यया ते स्वास्थ्यावह जीवनप्रकार

भजेयु । अत एव महिषादि-स्नानाविले पल्वले मानवा अपि स्नान्ति बहुधा पिबन्ति च तत्तोयम् । तेन दुःसाध्यरोगाक्रान्ता कीटवत् म्रियन्ते ।

तेषामुद्धाराय राष्ट्रीयसर्वकारेण प्रयतितं बहुधा । यथा ग्रामे ग्रामे पाठशाला, मौलिकशिक्षाप्रचार, यत्र तत्र चिकित्सालयानां स्थापना, कूपादिनिर्माणाय दीर्घकालिकऋणप्रदानम्, कुल्याप्रसार, गोमयादेर्गर्तेषु पूरणेनोर्वरके परिवर्तनम्, रासायनिकोर्वरकवितरणम्, रात्रि-विद्यालयानां स्थापना, विद्युत्प्रापणम्, आकाशवाणीयन्त्राणां ग्रामेषु सम्प्रसारणम्, पशुचिकित्सालयप्रतिष्ठा चेति ग्रामोन्नतये प्रमुखानि कार्याणि । मध्यकाले भूद्वारा (जमीदार) कृषकाणां सर्वकारस्य च मध्यपातिनो ऽमरवल्लरीव परोपजीविन. कृषीवलानामुत्पादनस्य महान्तं लाभांशमपाहरन् । राष्ट्रीयसर्वकारेण विधेयक (कानून) निर्माय तेषां वर्ग एवोन्मूलित । तालगुडस्य, मधुमक्षिकापालनस्य, कौशेयकृमिलालनस्य, हस्तनिर्मयवसनस्य (Handloom) चोद्योगाय साहाय्यं क्रियते । पञ्चायतनानि पुनरुज्जीवितानि । न्यायालयानामधिकारा यथोचितं तेभ्यो दीयन्ते । अन्नमूल्यस्य ह्रासो निरुध्यते । पाञ्चवर्षिक-योजनासु द्रव्यस्य महती राशिर्ग्रामोन्नतय एव निश्चिता । कुसीदजीविनां सकाशात्कृषकाणां मोक्षाय सहकारिसमितीनां तादृशनिधीनां च स्थापना क्रियते । तत्राल्पकुसीदमाश्रित्यर्णदानस्य व्यवस्था । एतां समितय उचितमूल्येन कृषकस्योत्पादनं विक्रीणन्ति, बीजादिकं च क्रीणन्ति । नाधुना लेखपालेभ्य (पटवारी) कृषकाणां तथाभयम् ।

तथापि बहु करणीयमेतद्विषये ऽद्यापि । यावत्प्रचारित न तावत्कार्यं जातं तत्र । राजकीया अधिकारिण प्रायो न संसृज्यन्ते ग्रामीणै सह । निवासादेः विकासस्य शिक्षणादेश्च न तथाविध सौविध्यं ग्रामेषु यन्नागरिका आकृष्टा भवेयु । स्वयं ग्राम्या इदानीमपि विहाय गृहाणि पुरं प्रति धावन्ति । शिक्षितेभ्यो न कृष्यादिकार्यं रोचते गृहोद्योगानां न तावान् विकासो यावान् प्रचार । सत्योन्नतिस्तदैव बुध्येत यदा न केवलं ग्रामीणानां पलायनं निरुध्येत, नागरिका अपि पुराणि विहाय ग्रामवासाय स्पृहयेयु ।तदैव मन्येत ग्रामाणामुन्नति ।

# विज्ञानस्य लाभा दुष्परिणामाश्च

हन्त ! अदम्या मानवस्य मृगतृष्णा ! दुर्दमनीया महत्त्वैषणा, अशमनीया नियतिविजयदुराशा ! अनतिक्रमणीया सकलविभवनिर्विभागाधिकारपिपासा । दुरभिभवो जगतीपरिणाह-परिच्छेदाभिलाष अनन्ता चानधिगत-विषय-विषयिणी जिज्ञासा, दुःशमा चानतिक्रान्त-प्रदेशातिचिक्रमिषा, अमुलभ्या नामादृष्टपूर्व-पदार्थ-दिदृक्षा यथाऽनुदिवसम्, प्रतिक्षणं प्रहिता साहसैक-रसिका नवनवाभियाने-ष्वभिरुचिं दधति । तन्मूल एव च मनुसन्ततेः सततमविरतोद्यमोऽननुभूतभावानुभूतौ । अद्य नासौ करितुरग-वृषभ-यान साधनस्सन् भूमि-भ्रमण-मानेन सन्तुष्यति, परं मीन इवाजस्रोन्मीलित-यन्त्र-नयन उद्वान्त-धूमराशिच्छलेन गगन-पारिता जलधिविजय-पताका भविष्यन्नभोऽभि-भव-शंसिनी व्यापयन् सायाश्रिक-सहस्राधिरोहणाकिञ्चन-भार पोतमारूढो निःशङ्कं निरातकमतल-पाथः-पथे विहरति, खेचर इव विस्तारित-पक्षसन्तति साहसैक-पाथेयो निशाकर इव द्योतिततारक, रविरिवविष्वक् प्रतिष्ठित-प्रताप यतिरिव नियतमविद्यमानानभियमनीय-स्थल-विशेषो वृन्दारक इव विष्णुपथे परिभ्रमति । वराह इव भूदारको मशक इव रन्ध्र-प्रवेश-निपुण भ्रमर इव सार-प्रतिग्रहैक-रसिक, कस्तूरिका-मृग इव गन्धाभिनिवेशी भूगर्भेषु प्रविशति, दुरवगाहमम्भ-पूरमवगाहते, सततोद्गच्छदनल शिखा-सख शिखि-शिखरि-शिखरविल साधक इव सिद्धिमार्गी गन्धकग्रहणायाभियाति । विज्ञानमेव तस्य मार्गदीप. ।

अस्यैव विज्ञानस्य बलादद्य घातका अपि दुश्चिकित्स्या व्याधय सुचिकित्स्या । उदरादि-गूढ-स्थान-स्थाना गर्भगतानामिव घटनानां वस्तूनां दर्शनं क्ष किरणादि (X-Ray) साधनै सुकरम् । एतस्यैव महिम्ना देश-काल-कृतोऽन्तरायो निरस्तो न्यूकृतो वा । तत्प्रसादादेव वर्षलङ्घनीया अप्यध्वानो द्वित्रैरेव दिनैरतिक्रम्यन्ते । यानासौवर्यायाद्य सर्पिण्य इव कुटिलगतय, कृशानुज्वाला इव धूम-रेखा वमन्त्य, योगिन्य इव लोह-पथ-गामिन्य, काल-मतय इवाहर्निशं चरन्त्यो धूम्रशकट्यो देशाद्देश स्वल्पाभिरेव होराभि शीघ्र-क्षपादघोराभि प्राणिनो महतोऽपि भार सभारांश्च

प्रापयन्ति । तयं इव महानदीषु दिवानिश धावन्त्य प्रतोनीपु तैल-शकट्य स्वर्णसारवत्ता विहार-सौकर्यमाचरन्त्येव ।

विज्ञानबलादेव दुग्धसार इव दुग्धात्, नवनीतमिव दध्न. चामीकर-कणा इवाकररजस सौदामिनी जलान्निर्गृहीता, रसायन-बलाद् वाष्पशक्त्या चोत्पादिता । साऽधुना प्राणिना प्रियतमेव जीवन-संगिनी, परिचारिकेव वचने स्थिता, वार-वनितेव सर्वभोग्या, पर वधूरिवास्पृश्या, मृत्यु घटीव कराली, व्यालीव विलीनसरणि, मित्रमेव हित साधिनी, नम-प्रकृतिरिव ध्वनि विस्तारिणी, ऋतु सम्पदिव नाना-रूप-दर्शिनी, मायिक विद्येव प्रदर्शित विविधचमत्कारा कि नाम नाचरति जनस्य। प्रकाश ताप च यच्छन्ती स्पृशत्यधिकारक्षेत्र रवे । रोगानपाकुर्वन्ती स्मारयति धन्वन्तरे । गूढ लक्षयन्ती तुलयति महिम-शालिनो योगिन, शीतमप्णे विपरीत च विदधती जयत्यृतुक्रमम्, निवाते मन्द समीरस्पर्श ददती पुनरुक्तयति सदागतिम् । भोज्य पचन्ती समाचरति सहचार वैश्वानरस्य, दूरभाष (Telephone) द्वारेण विदूरे स्थितानपि जनानालापयन्ती करोति मेलापकम्, नभोवाक्-प्रसारेण (Radio-broadcasting) लघयति सन्देश-प्रदान-व्यापारम्; यन्त्रचालनेन सहाकलयति व्यवसाय-विकासम्, कृत्रिम-वृष्टि-वर्षणेन प्रत्याचष्टेऽवग्रहम्; पाणिग्रहादिषु हर्षावसरेषु प्रदीप्त-दीप दीप्तिच्छुरित विभा-विभासनात् समाकलयति शक्र चाप शत-च्छटाम्, सूत्र-सन्तान-(Wire)-सहाया कतिपयाभिरेव होराभि प्रापयति योजन-सहस्रमपि सन्देशम् । ग्रामणीषु ऋजु-कुटिल सरणीषु क्वणद्-घटिका-रणरणायितापसारित-पादयात्रिका कोणात्कोणमनवरत कर्तव्यभाराकुला इव धावमाना विद्युच्छकट्य (Tram way) पथिकानामतिशयेन मनोमुदमातन्वन्ति महानगरीषु ।

अनया जलमाकृष्यते, व्याधिर्ध्वंस्यते, भार उह्यते, शस्यानि पच्यन्ते यन्त्राणि चाल्यन्ते, पुस्तकानि मुद्र्यन्ते, शिलासघाता निमेषपात-समकाल क्षुद्यन्ते, वस्त्राणि क्षाल्यन्ते, क्षणमुहूर्तपलातिक्रमणकलनेन कला कल्यन्ते ।

विज्ञानस्यैव चाय प्रभावो येन यन्त्र विशेषैर्भाविनो झञ्झा प्रकोपस्य दिशा कालश्च पूर्वमेव समूच्यते । ऋतवोऽनेन नियम्यन्ते, सलिलस्य निम्ना गतिरुदच्यते, विमुक्त-सूत्र-यन्त्रं (Wireless) मन्तु पूर्वमेव तस्य सम्प्राप्तिर्गन्तव्य-स्थानेषु सम्प्रेष्यते, तस्करास्तदङ्गुलिभिर्गवेष्यन्ते,दूरादपि वक्तृणा नर्तकाना च गिर सचित्रा समीक्ष्यन्ते । लघु-मुद्रकाणा (Typewriter) दूर-मुद्रकाणा (Teleprinter) च कल्पना विज्ञान-बलादेव । तस्य प्रसादादय कलियुगमित्यन्वर्थनामा काल । मानवा अद्य पूर्व-पक्षे स्थापिता । वस्त्राणां प्रक्षालनम्, भोजनस्य पचनम् रश्मि-सग्रहणम् निखात-द्रव्योद्धरणम्, रत्नाकराद् रत्नाहरणम्, भूगर्भे चाग्नेय-तैलस्थिति ज्ञानम्, उच्चारणे स्वर-तन्तु-कम्पनाङ्कनम्, विक्रेय-मूल्यादानम्, सकलनादिव्यापार, मानग्रहणादिका:

क्रियाश्च सुखं स्वचालित-यन्त्रैर्विधीयन्ते । नरैर्वर्षमात्रेणापि वेतुमशक्यं वस्त्रजातं वयनयन्त्रेण (Weaving Mills) एकस्मिन्नेव दिने वेतुं शक्यते । वृषभ-शतकर्षणीया भूमिश्च कृषियन्त्रेण होराभिरेव साधु कृष्यते । गजसहस्रेणाप्यनुत्थापनीयो दुर्वहो भार उत्तोलन-यन्त्रेण (Crane) निरायासमुत्तोल्यते । किन्नामातः परं यन्नास्ति किमपि कार्यमद्य यद् वैज्ञानिकी प्रक्रियामृते साध्येत । तस्य बलादेवाद्य प्रजननसदृशमपि कर्म परानपेक्षं सूचीवेधादिना (Injection) क्रियते । विज्ञानस्यैव शक्त्याऽद्य कन्दुका इव उपग्रहा मानवनिर्मिता नभसि प्रहीयन्ते । चन्द्रलोकं भित्वा प्रक्षेपणी (राकेट) सूर्यमण्डलमपि प्रवेष्टुं प्राभवत् । चन्द्रलोकस्य चित्राण्यपि विज्ञान-प्रभावादेवागृह्यन्त । तस्य साहाय्येनानन्तप्रालेयालये ध्रुव-प्रदेशे भूगर्भं गतानि खनिज-द्रव्याण्यादातुं प्रयतते नरः ।

न केवलं जीवनोपयिकानि परं समर-साधनान्यपि परमघातकानि तस्य शक्त्या विरचितानि । देवासुरैरिव वैज्ञानिकैः रत्नसारं इवानलाणव. सागरादिव कार्शानव-द्रव्येभ्य उद्धृत्य पाशुपतमिव जगत्संहारकमस्त्रं पुञ्जीकृतम् । उदजनास्त्रं ततोऽपि गुरुतरं वायव्यानि च प्रहरणानि (Gas) रिपु विजिगीषया महताऽपव्ययेन निर्माय भाण्डारेषु निहितानि । सङ्केतकाः (Signals) सन्देशप्रेषकाः (Transmetres) टङ्काः (Tanks) प्रक्षेपदातघ्नीनां परम्परा आधुनिकं समरं भीषणतरं विदधाति । लोकोपकारकमपि विज्ञानमिदं विनाशमूलमिव प्रतिभाति ।

न च नरः एतावतैव तुष्यति, स्वानुपमं साफल्यं द्विगुणिताभिमानश्चन्द्रमण्डलादि लोकान्तराणि जिगीषति । अस्यैव कारणादयं नाऽधुनात्यं सृष्टेः कर्तारं धातारं वा मन्यते । स्वयमसौ शम्भुः स्वयम्भूर्वा परमात्मनोऽपि निर्मातेति विकत्थमानो लोकपालाधि-कारेभ्यः स्पृहयति । तेन धर्माचरणमाडम्बरे, शास्त्राणि कपोलकल्पनायाम्, न्यायवादो मौढ्ये, सदाचारो मन्दचेष्टिते, सत्यभाषणमनैपुण्ये, दुरभिमानिता प्रतापे, गुरुवचनं वार्द्धक्यविजृम्भिते स्थापितानि ।

तस्माद् बहव एतन्निन्दन्ति, विनाशहेतुरिति गर्हयन्ति, नैतिकपतनमूलमिति वदन्ति । कार्यसौकर्यं विदधताऽनेन लोका दुर्गता व्यवसायजीविन आजीविका-रहिता विहिता ।

इत्थं विज्ञानमिदं वरदानमिव श्रेयस्करमभिशापो वेति विचिकित्सायामेताव-देवोच्यते यदभिरूपानुसारेण नाशी वह्निर्दीपो यदेन वह्निदागारे निक्षिपति । विनाशकार्यं एव प्रयोक्तारोऽस्य वचनीया । अतएव भारत लोककल्याणायैव तद् प्रयुञ्जते येन दारिद्र्य शरण्यां नामशेषमेव जायेत ।

---

# भारतस्य पाञ्चवर्षिक्यो योजनाः

चिरात् परकीय-शासनोपनतम् प्रसह्य दुर्वहं दास्यभारं वहद् भारतं लम्भयदिव सर्वस्वाहुति तप-स धन-फलं स्व-सुतान्, ख्रीष्टाब्दस्य दिवसयुगाङ्क शशाङ्क-समितस्य (१९४७) अगस्त्यमासे (August) पञ्चदशे दिनाङ्के (Date) पुनरपि स्वातन्त्र्य-रवि-विभा-रतमभवत् । विगते च तमोमये दूषणमय इव कलुषिते दास्य पाशे हताशा फणि कुटिल धूमोद्गार-धूमच्छलेन मलीमसानिव श्वासान् मुञ्चन्ती सहसा व्यलीयत जन हृदय भुवन-कुहर-सञ्चिता विषाद-काल निशा । परं सत्यपि तादृशोऽसाधारण उल्लासे परितो गृहे गृहे, जने जने व्याप्तस्य दारिद्र्यस्य गरीयान् सन्तापस्तथाऽपीज्वलन्मानसानि भारतीयानां यथा निखिलोऽप्यानन्द सन्दोहस्तत्र भस्मसाद् अभूत् । अतो निराकरिष्ण-वस्तमसामान्य प्रजासु विष्वगाचितमिव, अन्तरिव प्रविष्टं दारिद्र्यं प्रधानमन्त्रिणो जवाहरलालस्याध्यक्षतायां योजनाऽऽयोगस्य ( Planning Commission ) नियुक्तिमकुर्वन्नेतारः । फलतस्तेन महता प्रयासेन सावधानं सूक्ष्मेक्षिकया सकलामपि भारतक्षेत्रीयामवस्थाम् समीक्ष्य आयोगेन विस्तृतं विवरणं भारत-सर्वकारस्य समक्षं प्रस्तुतम् । तदेवानुसृत्य प्रथमा पाञ्चवर्षिकी योजना शशिशरग्रहभू (१९५१) संख्यकेऽब्दे प्रयोगपथीनाऽजायत ।

तदन्तरञ्च कृषेरुन्नति कृष्यभूमेः सेचनार्थं नदीषु सेतुबन्धानां (Dam) ततश्च कुल्यानाम् (Canals) निर्माणम्, भूदार (जमींदारी) प्रथाया उन्मूलनम् तत्र तत्र ग्रामेषु सहकार-समितीनां (Co-operative Societies) सहनिधि गृहाणाम् (Co-operative banks) च प्रतिष्ठाऽजनि । सामुदायिक-कल्याण-योजनाभिश्च ग्रामाणां सर्वतो-मुखा प्रगतिरलक्ष्यत । यातायातव्यवस्थायां समुन्नमनाय कुट्टिमानाम् (पक्का) अकुट्टिमानाम् च तैलादियानयोग्यानां लोक-पथानां सर्वत्र प्रसारो व्यधीयत । अधिकतमान्नोत्पादनस्य विदेशेभ्य क्रीतस्य च शाकरादे मग्रहार्यमान्दोलनमाधरितम् । देशे वाष्पयानयन्त्राणां वायुयानानां पोतानां च निर्माणशाला अस्थापिता । धूम्रयान-यन्त्राणां च कल्पना स्वदेश एव कर्तुं व्यवस्थितम्, तदीय-तृतीय-श्रेणि-यातॄणां कृते च

सौविध्यमाचरितम् । कार्पासाना (सूती) पटमयाना च (पटसन) वस्त्राणां निर्माणे वृद्धिरजायत । अस्या योजनायाः साफल्याय वसुयुगनयनयुगलकोटयः (२२४८ करोड) मुद्राणां व्ययीकृता. । ऋतुशरग्रहशशिमिते (१६५६) वर्षे द्वितीया योजना प्रथमाया. स्थानमलभत ।

अस्या उद्देश्येषु देशेऽस्मिन् महतामुद्योगानामुन्नतिं, आवश्यकाना गुरुयन्त्राणा निर्माणशालाना स्थापनम्, षष्टिलक्षोत्तर-कोटिसप्तक-टणानि अलस्य, अष्टा-पञ्चाशल्लक्षाणि भारा तूलस्य, सप्तति लक्ष टणानि लौहीयपदार्थानामुत्पादानि, सेचन-साधनाना निर्मातुं प्रक्रान्ताना पूर्ति । यन्त्रादिषु चात्मनिर्भरताऽऽपादनम्, समाजे नितरा व्याप्तस्य वृत्ति-कार्श्यस्य निराकरणम्, जनस्वास्थ्यस्य, कला-विज्ञान प्रौद्योगादि-विषयक-शिक्षाया, वाणिज्यस्य च विस्तार, वैदेशिक-मुद्रार्जनार्थं विविध-वस्तु निर्यातिषु वृद्धि', एवविधा अन्याश्च प्रसयोऽभूवन् । तदनुसृत्य देशे रूस्येन आग्लेन पश्चिमजार्मण्य-प्रदेशस्य च शासनेन सह सहयोगात्मिकामार्थिकी सन्धि विधाय तत्सहकारेण मध्य प्रदेशे भिलई नाम स्थले, बगेषु दुर्गापुरसंज्ञे स्थाने, उत्कलेषु च राउरकेलाऽभिधे ग्रामे विशाला-ना लोहसार निर्माण-शालाना स्थापन व्यधीयत । ग्रामेषु कृषिक्षेत्राणा चक्रबन्धोऽभिवत येन कृषकाणा भूमिर्न खण्डशो विकीर्णा स्यात् । यन्त्रैश्च कृषि सुकरा महता परिमाणेन च जायेत । एता योजना पूर्णतामानेतु पूर्वं षट् पञ्चाशदर्बमितो रूप्यक-राशिर्व्ययार्थं निश्चित· पर पश्चादर्थ-साधनाना लाघवात् षट्पञ्चाशत् कोट्यधिकमष्टाचत्वा-रिंशदर्बपरिमित द्रव्य स्वीकृतम् । विपुलोऽप्यमर्थ-राशि शासनकोषात्, राष्ट्रीयाहरणात् वैदेशिकात् साहाय्याच्च समगृह्यत । अस्या योजनाया साफल्य च पाकस्थानस्य भारत-विरोधि-नीत्यनुसरणेन विदेशेभ्यश्चाणु शस्त्र-समाहरणेन चीन कृत-भारतीय-क्षेत्राधिकरणेन च राष्ट्रीय सैन्य-व्यय-वृद्धेः किञ्चिद् विघ्नितमभूत् । तथाऽप्यस्मिन् कालेऽणु-शक्ति-जनित्रागारस्य (Atomic generator) स्थापना जाता तस्य चाप्सर-संज्ञिका धमनिका स्वकार्ये प्रवर्तत इति महतो हर्षस्य विषय । अस्य प्रतिष्ठानस्याध्यक्षेण भाभामहोदयेन घोषित यदधुना भारतमपि स्वल्पेनैव काले-नाणुबम-निर्माणे समर्थम ।

द्विपष्ट्युत्तरैकोनविंशे शतके तृतीया प्रयोग प्रारप्स्यति यदर्थं मुद्राणाम-र्बद्वयाधिक खर्वं एको निश्चित· । तत्र चत्वारिंशदर्बसमितोऽर्थराशि सार्वजनिके व्यवसाय-क्षेत्रे तत्प्रभुर्भिविनियोक्ष्यते, शेषस्यापि चार्धो भाग केन्द्रकोशाद् व्ययमेष्यति शिष्टश्च मण्डल-राज्य-कोशेभ्य । अस्या लक्ष्येषु च देशस्यान्नोत्पादन आत्मनिर्भरता, शर्कराया वस्त्राणाञ्च निर्यातन-सामर्थ्यम्, उर्वरकाणा लोहसारस्य चोत्पादनेऽतिशयिता वृद्धि-, शिक्षालयेषु माध्यमिकी कक्षा (High School) यावत् नि शुल्क-शिक्षा-प्रदानम्, सर्वेषा यन्त्राणा यानानामस्त्र-शस्त्राणाञ्च स्वदेशे निर्माणम्, चिकित्सालयाना

वृद्धि, विद्युतश्च अष्टादशलक्षोत्तर-कीलवाट-परिमाणमुत्पादनम् इत्यादि कार्यजातमस्ति। अणुशक्त्या च लक्षत्रयकीलवाट-परिमिता विद्युच्छक्ति सम्पाद्या। वाष्प-तैल-यानोचितानां नवमार्गाणां विस्तारः कार्यः। घटीयन्त्राणां कृष्युपकरणानाम् (Agricultural Empliments) च भारते निर्माणाय तदनुसारेण व्यवस्था विधेया। देशस्य समृद्धये खनिज-तैलस्यस्वावश्यकतामनुरुध्योत्पादनमपरिहार्यम्। खम्भात-अङ्कलेश्वरप्रभृतिषु स्थानेषु तस्योपलब्धिर्देशस्य भाविनीमृद्धि निकटवर्तिनी द्योतयति। द्वितीय-योजना-काले प्रारब्धानां कार्याणां पूर्तिनिष्पत्तिश्चास्या योजनायाः पूर्वार्धे समापनीया यथाऽऽरब्धव्यवसायेभ्योऽर्थस्योपार्जनं सुकरं स्यात्। राष्ट्रीयायस्य प्रतिशतं पञ्चमुद्रामिता वृद्धिर्यथा सम्पद्यते तथा प्रतिविधेयम्।

एवंविधानि बहूनि लक्ष्याणि देशस्य विकासायास्या योजनाया येषां सिद्धौ भारतस्य स्वरूपमेव नवं सम्पत्स्यते। परं दारिद्र्यपिशाचग्रस्ते वैषम्य-बहुले राष्ट्रे कुत एतावतोऽतिमहतोऽर्थ-राशेरुपलब्धिरिति विचिकित्साया समाधानमेतावदेव यच्चतुर्दिशत्सहस्रकोटयो मुद्राणां स्व-साधनेभ्य एवोपलप्स्यन्ते। द्वाविंशति सहस्राणि कोटयश्च वैदेशिकधनेभ्यः साहाय्यं प्राप्स्यन्ते। शिष्टानि च पञ्चाशदुत्तर-षोडश सहस्राणि कोटयोऽतिरिक्तं करलोकादेव समाहरिष्यन्ते।

वस्तुतो योजनानां स्वरूपं लक्ष्यं वा न शङ्कार्हं। चेत्सत्यम्, देशस्य सर्वतोमुखी प्रगतिरेताभिः साधु सम्पाद्येत। परमद्य राष्ट्रीयं चरित्रं तथा पतितं यथा का कथा प्रजानाम्, शासकाः, मन्त्रिणः पदाधिकारिणो ये भारतस्य भागधेयानां निर्मातृपदमधितिष्ठन्ति, सर्वेऽपि नवनीतहृदया काञ्चनकामिनीं वा दृष्ट्वैव च्यवन्ते कर्तव्यपथात्। धर्तेषु (बईमानी) जनानां प्राणेष्वपि प्रविष्टम्। सर्वेऽपि भद्रवेशा धर्मकञ्चुकिनस्तृणच्छन्नकूपोपमा उत्कोच (Bribery) सङ्कुचित-सत्याचारा यथाकथमपि द्रव्यमेवार्जयितुंपर्यन्तोऽनन्तरं प्रतीयन्ते। नैविदिकाः (Contractors) अधीक्षकाः (Overseers) अभियान्त्रिकाः (Engineers) सर्वेऽपि कुत्र गूढ-समया लेपादयन (Cement) लौहाधारस्तूपानां चौर्ये मिश्रणप्रयोगे च निरताः। सर्वतो लब्धस्य धनस्यार्धं तेषामन्येषां चाधिकृतानां च ग्रन्थिमेवोपगच्छति। जनं पूर्वमेव कौपीन-शेषं करभारेण पुनर्विशेषेण बलिषु देयेषु धर्मंशोषयेत्येव भविनष्यमित्यपरोऽपि तेषां गण्डस्योपरि विस्फोटः। व्यवसायिभिरप्रत्तस्यायकरस्य (Incom Tax) सर्वकारेण दृढनीत्या सङ्ग्रहः क्रियते चेत् तावतैव करानामुद्देश्यं सिध्येत्। अत्र शासनद्वारा एव शिथिलता भाति। अद्यावधि सर्वकारेण घोषिता साफल्याद्वारा प्रचारमात्रं भवन्तीति भविष्यदेव तद्विषये प्रभवति सूचयितुं कया दिशा देशस्य दशाया वर्तितव्यमिति।

# योगः कर्मसु कौशलम्

अस्यापारस्य दुस्तरस्य भव-सागरस्य सन्तरणाय परम-कारुणिकैः प्राक्तनैराचार्यैः प्रवृत्ति निवृत्तिश्चेति मार्ग-द्वयं निरूपितम्। तत्र प्रवृत्तिः कर्म-मार्गोऽपरश्च मुक्ति-मार्ग इत्युच्यते। यज्ञ-दानाभिरन्यजन्मनि सुखं परलोके च स्वर्गादि-कामनेत्येव प्रथमः प्रवृत्ति-मार्गं, संसारकर्मणां परित्यागेन लोक-निःस्पृहतया सर्वासङ्गविमुखीभूय प्राणायामादिकाष्टाङ्गयोगसाधनं तद्द्वारेण च ब्रह्मभूयोऽपुनरागमनं चेति निवृत्ति-मार्गं उच्यते। तत्र प्रवृत्ति-मार्गानुयायिनः शैशवादारभ्य जरावधि लोकयात्रा-साधनेषु शुभेष्वशुभेषु वा कर्मसु प्रवृत्ताः स्वस्य, परिजनस्य, ज्ञातीनाम्, समाजस्य, राष्ट्रस्य विश्वस्यापि वा कल्याणे निरता यावज्जीवं निरलसाः कर्मठाः पौरुषैकधनाः कर्मरता एव लोकमिमं जहति। परं निवृत्ति-मार्गानुयायिनः प्रायस्तान् निन्दन्ति 'मूढा एते, भोग-परा एते, आसक्ता एते, कृमिकीटपतंगवद् देह-पोषणरता इमे, भोग-कीटा इमे, भव-सुख-प्रलुब्धा इमे' इत्यहर्निशं गर्हयन्तस्तान् केवलं स्वयोगक्षेमाय सोद्यमाः क्लिष्टं शोचनीयं दुर्गतं च पार्श्वस्थमपि निरीक्ष्य 'निःसङ्गा वयम्, किमस्माकमेतेन ? स्वकर्म-फलमेव भुञ्जत एते' इत्युदासीनाः स्वं ज्ञानिनं परांश्चाज्ञानिनो मन्वते। कर्मरतान् प्रति च तेषामवज्ञैव प्रस्फुरति—

उपायाः शिक्षमाणानां बालानामुपलालनाः।
असत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहते॥ (वै. भू. सा.)

ते च केवलं लोक-कर्म-परित्यागमात्मरतिं चैव योगं मन्वते। परं संकुचित एवैष तेषां पन्थाः।

कामं पातञ्जल-योग-सूत्रे चित्त-वृत्ति-निरोधो योग इति प्रोक्तः परं न तस्यायमभिप्रायो यत्संसारस्योपेक्षा। वस्तुतश्चित्तं चेतनामयं सूक्ष्म-व्यापार-परम्परात्मकं नित्यं प्रवाहशीलम्। तदेव च सकल-जगत्कर्म-प्रपञ्च-सिद्धि-हेतुः।

न मनसः सततं नियोगाभावे जनः किमपि कर्तुं साधु वा कृत्यं सम्पादयितुं क्षमः। मनुष्ठेये कर्मणि न समाहितं चेच्चेतः, दिवसकरणीयमपि सप्ताहेन पक्षेण मासेन

क्षाऽपि न सम्पद्यते । कश्चिदधीयानो बाल प्रातरारभ्य किमपि पुस्तक साय यावद-समाहित चेता पठन्नपि घुणवन्नैकमप्यक्षर बोद्धु समर्थ । समाहितस्तु स्वल्पे नैवानहसा तथाऽवबुध्यते बोध्य न यथा कालान्तरेणापि विस्मरति । योजनमेव योग प्रवृत्तिरिति यावद् ।

पारमार्थिके लौकिके वा कस्मिन्न कर्मणि योगोऽपेक्ष्यते ? वस्त्रवयन-यन्त्र नियुक्तो जन कश्चित् प्रमत्तश्चेत् स्वाङ्ग हानिमेव विदध्यात् प्राणान् वा लुम्पेत् का कथा वस्त्राणाम् ? न स ग्रन्थिलान् तन्तूनपि वियावयितु क्षम । तैलयानस्य विमानस्यापि वा चालकोऽसयत चेता सन् यानान्तरेण सह सघट्टन कुर्यात् कमपि वाऽधो मृद्नीयात् यानमेववाऽध पातयेत् । आत्मन आरोहिणा च प्राणहानि कुर्यात् । चित्रकार, नर्तको गायक, कवि, सैनिक, चिकित्सक, वणिक्, तापस, लेखक, मृगयु कश्चिदपि नाप्यन्यमनस्क क्षम कर्म सम्पादयितुम् । सर्वत्र हि मनसो नियोग । स च नितरां योग प्रवृत्ति ।

भ्रान्ता एव ते ये कर्मणो निवृत्तिमेव योग मन्वाना । मोक्षलब्ध्यै प्रणिधानात्मकोऽपि योगश्चेन्न किं तत्र कर्मापेक्ष्यते ?

> नात्यश्नतस्तु योगोऽस्ति न चैकान्तमनश्नत ।
> न चातिस्वप्न-शीलस्य जाग्रतो नैव चार्जुन ॥ (गी ६।१६)
> युक्ताहार विहारस्य युक्त-चेष्टस्य कर्मसु ।
> युक्तस्वप्नावबोधस्य योगो भवति दु खहा ॥ (गी ६।१६)

किमेताभ्या श्लोकाभ्या प्रतिपाद्यते ? किं यथा समयम्, यथानियमम् यथोचित चाहारादिव्यापारा न कर्माणि ? लोक-सग्रहमुपेक्ष्य लोकयात्रार्थमेव कर्मणि निरतस्य तु पुन इच्छाण-परत्वैव जायेत या न लोकस्य कस्मै चिदप्युपयोगाय । तादृशा योगिनो यदि सर्वं एव जना भवेयुस्तर्हि लोकस्यैव क्षति स्यात् । क्व तावद् दृश्येत समाज ? लोक सग्रहो नाम सर्वस्यापि परमार्थ । तदर्थं कर्मणि प्रवृत्तिर्नितरामपरिहार्या । अतएव कर्तव्यमिति भावनया कर्म कुर्वाण साफल्यासाफल्यानपेक्ष सतत कृत्ये युञ्जान एव योगी । कर्मणा परित्यक्ता तु न । यथा चोक्त भगवद्गीतायाम्—

> अनाश्रित कर्मफल कार्यं कर्म करोति य ।
> स सन्यासी च योगी च न निरग्निर्न चाक्रिय ॥ (गी ६।१)

कर्मफलानां सुख-मृगतृष्णिकानां कामानां वा सन्यस्ता योगी । तस्य न स्वय कश्चित् कामो भवति पर लोक-सग्रहार्थं कर्म करोत्येव स । वस्तुत कर्म कुर्वन्नपि न स आत्मान कर्तृत्वाभिमानिन मनुते । तथा कुर्वन् लिप्येताहङ्कारेण, तेन च राग,

रागेणासक्तिः, ततः फलानुसन्धानम्, तेन च सांसारिकेषु प्रलोभनेषु सज्जते मनः। अतः-संकल्प त्याग एव योगः।

> यं संन्यासमिति प्राहुर्योगं तं विद्धि पाण्डव।
> न ह्यसन्यस्त-संकल्पो योगी भवति कश्चन॥ (गी. ६।२)

योगस्य मूलमपि कर्मैवोक्तम्—

> आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते। (गी. ६।३)

कर्मणां त्यागो नापि तु कर्मफलानां त्याग एव सन्यास इत्युदीर्यते।

> काम्यानां कर्मणां न्यासं संन्यासं कवयो विदुः। (गी. १८।२)

स सन्यास एव योगः। अनासक्त-भावेन सिद्धावसिद्धौ वा निस्पृह कर्तव्यमिति भावनया कर्म कुर्वाण एव परमार्थतो योगी।

> सिद्ध्यसिद्ध्योः समोभूत्वा समत्वं योग उच्यते। (गी. २।४८)

अज्ञानेन कर्म कुर्वतामेव तादृशी फलासक्तिर्भवति। ज्ञानवन्तस्तु न तत्रासज्जन्ते, न च तेन लिप्यन्ते। कर्म कृत्वाऽपि तत्फलायास्पृहयन् पुण्यं पापं वा ज्ञानाग्निना दहति। न तेन स कर्मफलानां भाजनम्।

> ज्ञानाग्नि-दग्ध-कर्माणं तमाहुः पण्डितं बुधाः।

कर्म अकुर्वाणोऽपि मनसि तत्कामं दधानोऽपि न योगी। स हि तत्रासक्तः।

> नह्यसंन्यस्तसंकल्पो योगी भवति कश्चन।

ज्ञानमेवाश्रित्य मानवः कर्म कृत्वाऽपि न तत्रासज्जते। तेनोत्पन्नं दुष्फलमपि स्वतो निवर्तते। ज्ञानं हि तस्य शरणम्।

> सर्वं ज्ञानप्लवेनैव वृजिनं सन्तरिष्यसि।

अयं ज्ञानप्लव एव बुद्धियोगः कर्म-मार्ग-प्रदर्शकः। न तेन पथि भ्राम्यति जनः।

> दूरेण ह्यवरं कर्म बुद्धियोगाद्धनञ्जय।
> बुद्धौ शरणमन्विच्छ कृपणाः फल-हेतवः। (गी. २। ४९)

बुद्धियुक्तो न पुण्यपापभावनां जातु हृदये धारयति। अतो न स लिप्यते फलेन। फलासक्तिरेव तादृशं कर्मबन्धं जनयति।

> बुद्धियुक्तो जहातीह उभे सुकृतदुष्कृते।
> तस्माद्योगाय युज्यस्व योगः कर्मसु कौशलम्॥ (गी. २। ५०)

कर्म च धर्मानुकूलमेवानुष्ठेयं न तु तद्विरुद्धम् । कर्म, अकर्म, विकर्म च पुरतो वर्तते । एषां परस्परं भेदोऽवश्यं ज्ञेयः ।

कि कर्म किमकर्मेति कवयोऽप्यत्र मोहिताः ।

कर्मणामभावोऽकर्म, विरुद्धं कर्म तु विकर्म । तत्यक्तवा कर्माकर्मणोः समन्वय एव साधीयान् भवति । कर्म कृत्वाऽपि न तत्कृतं मन्वानः कर्मण्यपि कृतेऽकर्मवत् पश्यति । स एव कर्मणि कुशलः ।

कर्मण्यकर्म यः पश्येदकर्मणि च कर्म यः ।
स बुद्धिमान् मनुष्येषु स युक्त कृत्स्नकर्मकृत् ।। (गी. ४ । १८)

कर्म कुर्वाणश्च कर्तव्यबुद्ध्यैव तत्र प्रसज्जेतेति बहुधोक्तम् । परं कर्तव्यस्य पालनं तदैव निष्पद्यते यदा तद् यथोचितेन यथाऽनुष्ठीयते । स्वेच्छाचारेणोपेक्षया च नानुष्ठितमपि कर्मानुष्ठितं सम्पद्यते । अतः कर्माकर्मविकर्मनिर्णये शास्त्रस्य प्रामाण्यं सर्वोपरि ।

यः शास्त्र-विधिमुत्सृज्य वर्तते कामकारतः ।
न स सिद्धिमवाप्नोति न सुख न परां गतिम् ।।
तस्माच्छास्त्रं प्रमाणं ते कार्याकार्य-व्यवस्थितौ ।
ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसि ॥ (गी. १६ । २३-२४)

स्वभावानुकूलं कर्म च धर्मः । तदेव कुर्वन् मानवः साफल्यं लभते । स्वधर्म-विरुद्धं कर्म कृत्वा न कोऽपि लाभ. ।

स्वे स्वे कर्मण्यभिरतः संसिद्धि लभते नरः ।
स्व-कर्म निरतः सिद्धिं यथा विन्दति तच्छृणु ।। (गी. १८ । ४५)

तस्मिन् स्वभावविहिते कर्मणि कृते मानवस्य स्वतः सिद्धं धर्मानुष्ठानम् ।

श्रेयान् स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात् ।
स्वभावनियतं कर्म कुर्वन्नाप्नोति किल्बिषम् ।। (गी. १८ । ४७)

कामं कर्म स्वाभाविकं दोषयुक्तं परं तदपि न त्याज्यम्, यतो नास्ति किमपीह जगति यत्सर्वथा निर्दोषं स्यात् । दीप्ततमोऽग्निरपि धूमेन भूतिना च वृतः । सर्व-कालुष्यनाशिनी गंगाऽपि नाना-नदनोत-मलकलुषतामापद्यते । धेनुरपि पुरीषादिनोति न दोषमात्रेण त्यज्यते । अतः स्वधर्मानुकूलं कर्मानुष्ठेयमेव ।

नास्ति लोके कश्चिदपि विनैव धर्मं यः सिद्धि लभेत । ब्रह्मनिष्ठो राजर्षिर्जनकोऽपि स्वकर्मणि व्यापृतोऽभवत् । पूर्णकामा ऋषयोऽपि तपोऽनुष्ठाने लोककल्याणे चाभिरता आसन् । महात्मा बुद्धः, तीर्थङ्करो महावीरश्च त्यक्तसंसार-बन्धनावपि प्राणिमात्रस्य

सेवायामपरमेताम् । सर्वे महापुरुषा यावज्जीवं कर्मनिरता भूत्वैव मृता मध्यमरता लभन्ते । न ते शय्यायां शयाना आतुरा इव मृत्युं कामयन्ते । तेषां तु जीवन-व्रतमिदम्—

कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः ।
एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे ॥ (ई. उ. २)

आरब्धं कर्म यथाशक्यं साधु भद्रं शुचित्वेन (ईमानदारी से) चानुष्ठेयम् । यतः

'Handsome is who handsome does'

इत्याङ्गलोक्त्यनुसारेण साधुकर्मकर्त्तैव सुकर्मा । न कृतेनैव कर्मणो निष्पत्तिः । जीवतो लक्षणमिदं यद् यावज्जीवं कर्मानुष्ठानम् कर्मठतानुप्राणितस्य सोत्साहस्य सौजसो जीवनस्य यापनम् । गुहामधिशयानाः केवलं स्वक्षेमाय प्रयतमानाः कुक्षिम्भरयः पशुभ्योऽपि हीनप्रायाः । अत साध्वेवोक्तम्—योगः कर्मसु कौशलमिति ।



# न ऋते श्रान्तस्य सख्याय देवाः

जगदिद निधान विविधाना सरसता-प्रसूतीना भूतीनाम्, महीयसा श्रेयसा च। अनल्प-जीवनीयोपकरण-पूरित सकल-सुख-साधनसाधित च भुवनमखिल श्रम शील-स्यैव जनस्याभावहर नाश्रान्तस्य।

यथा सत्यपि मधुरतरे पुष्टि-करे तुष्टि-करे रोग-हरे च बहुलेऽपि पुर स्थापिते चतुर्विधे खाद्य-जाते न चालयन् पाणि मुख च न लभेत कोऽपि भोक्तुम्, तथैव विद्यमाने-ष्वपि सकल-मणिगणादि-द्रव्य-राशिषु वसुधाकुक्षिभरिषु रजत-स्वर्णादि-खनिज-पदार्थेषु धनिक-जन-कोश-पूरेषु तल्लब्धयेऽयतमानो मानवो न विभुः काकिणीमप्यधि-गन्तुम्। कटु कण्टकानि विदलित-सुरभि-पाटल-पटलानि च सहैव वर्तन्ते जीवने भुवने वने च, यथोद्योग यथाकौशल च कल्पन्ते मनुजा सचयाय तदेकतरस्य। केवल विधि-हतक-विलसित भणन्त स्वदौर्गत्य प्रतिकूल काल-कीलित वा वदन्त स्व-साफल्य गोमय-विनायका इव मोदक-दूषणा अजगरा इवाङ्कागत-सत्त्व वृत्तय, मत्कुणा इव पररक्त-जीविन तूलोपबर्हा इव शय्यामात्र विभूषणा मृत्पिण्डा इव भुवो भारभूता गोवृन्दारका इव रथ्यास्वाहिण्डमाना गेहेनर्दिन. पात्रेसमिता उदर-भरणैक-प्रयोजना. कृमि-कीटवद् दारिद्र्य एवोत्पद्यन्ते विलीयन्ते च। पर कमलिनीषण्डा इव पङ्केरुहा अपि विमल-सलिल-तलादुपरि स्फुरन्तः सोद्योगा. ससाहसा मनस्विनोऽकिञ्चना अपि जन्मत स्व-पौरुष-बलात् कुल-तिलकतामुपसीदन्ति नातिचिरेण। नास्ति किमपीहा-साध्य सश्रमाणाम्। निदाघ-प्रखर-खर-कर निकर-विकिरण-दह्यमानवालुके मरु-प्रदेशेऽपि निरन्तराविरलवारिराशि-परिपूर्ण-मह्वर सागर सम्पादयितु क्षमन्ते ते, मषी-मलीमस-गहनतम-स्तोम-मेचका बहुलतमिस्रामपि दिनकर-विभा-विभासुरामिव विद्यु-द्दीप-दीप्ति-दीपिता वासरायिता विदधति। त एव प्रभव. करतलेऽपि सर्षपाणि रोपयितुम्।

भगवानपि भूतभावनो जगदिद सिसृक्षुस्तप एवाश्रयति। नातपस्का श्रम-रहितो वा किमपि लघु कर्तुं वा समर्थ.। देवा अपि श्रम-शीलस्यैव साहाय्यमा-

चरन्ति । ऐतरेय ब्राह्मणे रोहितं प्रति शक्रेण गीता गाथाऽपीदमेव गायति—

नानाश्रान्ताय श्रीरस्ति इति रोहित शुश्रुम ।
पापो नृषद्वरो जन इन्द्र इच्चरतः सखा ॥
चरैवेति चरैवेति ॥
पुष्पिण्यौ चरतो जंघे भूष्णुरात्मा फलेग्रहिः ।
शेरेऽस्य सर्वे पाप्मानः श्रमेण प्रपथे हताः ॥
चरन् वै मधु विन्दति चरन् स्वादुमुदुम्बरम् ।
सूर्यस्य पश्य श्रेमाणं यो न तन्द्रयते चिरम् ॥
चरैवेति चरैवेति ॥ (ऐ. ब्रा. ३३।३)

अन्यत्रापि च देवेभ्य आशास्तेऽन्य ऋषि —

'कृधी न ऊर्ध्वं चरथाय जीवसे ।'

दीर्घ-जीवनस्य प्रयोजनं सततं श्रम एवोन्नतये । को नामार्थस्तन्द्रिलस्य चिरायुषा । श्रमाश्रित जीवनमिद न किमपि सम्पद्यते तमन्तरा ।

कृषन्नित्फाल आशितं कृणोति यन्नध्वानमपवृङ्क्ते चरित्रैः ।
वदन् ब्रह्माऽवदतो वनीयान् पृणन्नापिरपृणन्तमभिष्यात् ॥
(ऋ १०, ११७, ७)

सश्रमाणामेव कृते धरणी विविध-विभव-धारिणी नाना-विलासलास्य-लासिनी च । सुवर्ण-पुष्पितेयं श्रम-शीलैरेव चीयते, भुज्यते, अभिलषित-बहु-विहारवनी च विधीयते । "उद्योगिनमेव पुरुष-सिंहं लक्ष्मीरुपैति।" भीरुमलसं कापुरुषोपहसन-व्यसनिनी वनितेव लब्धाऽपि सा दूरतः परिहरति । नाश्रमशीलो देवानामपि साहाय्यस्य अनुग्रहस्य वा पात्रम् । तेऽपि तस्यैव सहाय-कृतो य उद्यमी साहसी धीरो गुणवान् विद्वांश्च । पुरुषार्थः केवलो लोकस्य देवानां चानुकम्पयिता प्रभावयिता समर्धयिता समर्थयिता च । जीवितमपि न श्रमं विना चिरं भवितुमुत्सहते । इन्द्रियाणि हि तस्यैव सक्षमाणि यः सदा श्रमेण नित्यं व्यायच्छति । श्रमेण जीविकामुपार्जयतः नाति प्रचुरोऽप्यर्थः क्षेमावह. । अश्रमोपनतस्तु विभवो व्यसनेषु विलासेषु च व्येति चौरैर्वा ह्रियते चिकित्सकैरपि वा भुज्यते दायादैर्वण्ट्यते वा । अपावनं तादृशं द्रव्यं न सुकृते भुज्यते श्रम एव विश्वस्य समाजस्य सर्गस्य च प्रतिष्ठा । भारभूता एव प्रजाना विनैव श्रमं द्रव्याण्युपहरन्तोऽकर्मण्या दुश्चरितान्येव स्वानि लोके प्रख्यापयन्ति । न ते श्रमस्य महत्त्वं वेतुं क्षमाः । अद्य तु श्रमस्य सर्वत्रादरः । शासनेऽपि स महिमानमनुभवति ।

'कृतं मे दक्षिणे हस्ते जयो मे सव्य आहितः ।'

इति येषामुद्योगिना सङ्कल्पस्त एव सकल-विभूति विभूषित जगदिद दुहन्ति । किमत्र श्रमं विना ? न विद्या, न यश , न सुखम्, न प्रभाव., न श्रेय , न वा प्रेय: । आलस्यालयास्तु पृथ्वी-भार-भूता भाग्यमेवाक्रोशन्तो यथागतास्तथैव व्रजन्ति लोकादस्मात् ।

देवास्तपोऽपेक्षन्ते प्रसादाय । कष्ट तु तप , महांस्तत्र ताप । सृष्टेर्विकास-स्तपसैव । तत्तपोऽपि किं न श्रम: ? श्रमेणैव भाग्यस्य जागरण भवति अश्रमशीलस्य तु भाग्यमपि स्वपिति । यथोक्तं रोहित प्रति शक्रेण—

आस्ते भग आसीनस्योर्ध्वस्तिष्ठति तिष्ठत ।
शेते निपद्यमानस्य चराति चरतो भग । चरैवेति । (ऐ ब्रा ३३।३)

श्रमशीलस्य श्रमेण जगत सर्वे व्यापारा , प्रवर्तन्ते सर्वा क्रिया , विकास , प्रगति , अभ्युदय सर्वमेतत् किं श्रम विना सम्भवति ?

कलि• शयानो भवति संजिहानस्तु द्वापर: ।
उत्तिष्ठस्त्रेता भवति कृत सम्पद्यते चरश्चरैवेति । (ऐ• ब्रा• ३३।३)

श्रमेण कृषकोऽन्नमुत्पादयति, श्रमेणैव श्रमिको वस्त्र वयते, श्रमेणैव शिल्पी चित्राणि शिल्पकार्याणि करोति निर्मिमीते चोपयोग्यानि वस्तूनि । गृहे बद्धा पयस्विनी धेनुरपि श्रममन्तरा बिन्दुमात्र पयोऽपि न प्रच्छति । वैज्ञानिकाना श्रमेणानेके सुख-प्रदा आविष्कारा अस्माक सौविध्याय जाता । परेषामपि श्रमेण चेद् वय सुखिन स्म न स्वयमपि श्राम्यन्त सुखिन स्याम । श्रश्रान्तस्य तु भोजनमपि न साधु परिणमति । कुतस्तस्य निद्रा यस्या आनन्द दिवा-श्रान्त शर्करा-कर्कशाया, नग्नायामेव भुवि पाषाणमेकमुपधाय शयानोऽपि कर्मकरोऽनुभवति । दुराशामात्रमेतद्यदि पाणौ पाणि निधाय 'धाता कृपालुश्चेद् गृहपटलमप्युत्पाट्य स्वयमपि प्रदास्यति' इत्युक्त्वा स्थीयते तूष्णीम् । परश्रमार्जित धनमुपभुञ्जानास्तु मत्कुणायन्ते परोपजीविन ।

'नाय लोकोऽस्त्ययज्ञस्य कुतोऽन्य कुरु-सत्तम ।'

अतो देवाना कृपाकाङ्क्षिभिरपि श्रम एव विधेयो येन ते प्रसीदेयुरिति विविच्योक्तम्—

'न ऋते श्रान्तस्य सख्याय देवा ।'

# मौनं सर्वार्थ साधनम्

नाना-कर्म-प्रपञ्च-चञ्चुरे जगत्यस्मिन् समापतितेषु प्रयोजन-जातेषु किं-कर्तव्यता-विमूढा जनाः प्रायशो विविधानि साधनान्यनुधावन्ति । सफलतामधिगच्छन्तु मानवा न वाऽङ्गीकृतैस्तैस्तैरुपायैः स्वार्थेषु परं सर्वेष्वमोघतममव्यय-साध्यमकष्टमय-मनपायमपरिहार्यं सकलार्थसाधनं साधनं मौनं नाम यस्मिन् प्रयोग-नियोजितेऽकुशलोऽपि कुशलः, अपण्डितोऽपि पण्डितः, नोरीकृतमपि चोरीकृतं सम्पद्यते ।

कस्यामपि विबुधगणमण्डितायां परिषदि समाकलितभद्रवेशो देवानां प्रियोऽपि शृण्वन् यावदूकानां वचांसि स्मयमान इव केवलं शिरः कम्पयन् जोषमास्ते चेत् सकलै-रपि वशीकृत-वाग्रहस्यैः 'अधिगत-सकलागमः सर्व-विद्यासु कृत-भूरि-परिश्रमोऽयम् किमपि स्खलितं विभावयन् वदताममीषां दाक्षिण्यानुरोधान्न प्रकटीकरोति' इत्येव गृह्यते । उक्तवति तु किमपि तस्मिन्, विज्ञाय दोषपूर्णं वचनं 'मूर्ख एवायं कलित-विद्वदाडम्बरो वञ्चयितुमस्मानागतः, इत्यभिज्ञायतेऽवमान्यते च । इत्थं साधीयानयं स्वाज्ञता-प्रच्छादनोपायो यन्मौनम् ।

कृतापराधोऽपि जनोऽभाषमाणोऽन्यैः समीपवर्तिभिः सह किमपि पठन्निव शयान इव वाभिनयन् क्षमः स्वाकार-संवरणे । वृथैव कृतालापस्तु वार्तारसावेश-वशात् प्रसङ्गे कस्मिन्नपि रहस्यं प्रकाशयेन्निगृह्येत च ।

अर्थी च स्वार्थवशात् कमपि वदान्यं विशेषाधिकारसम्पन्नं पदाधिकारिणं वोपगतः प्रार्थयमानः प्रयोजन-सिद्धिं तूष्णीं तिष्ठति तस्मिन् साफल्यमेवाऽऽशास्ते । 'मौनं स्वीकारलक्षणम्' इति हि प्रतिपादितमभियुक्तैः । न यावत्स प्रत्याचष्टे, प्रयतनीय-मेव तत्र । अन्ते च स प्रसीदत्येव ।

प्रतिवादिनाऽभियुज्यमानोऽभियुक्तो न्यायाधिकरणे वाक्कील-पटुना वच-स्खलितेषु सविशेषमवदधता वाक्कीलेन बहुधा पृच्छ्यमानोऽपि यदा न किमप्युत्तरयति तदा स्व-पक्ष्येण प्राड्विवाकेन समाधीयते 'विकलधीऽयमुन्मत्तो न वेत्ति करणीयम-

करणीय वेति वृथैवास्मिन् प्रश्ना । जड एतद्विध किन्नानुतिष्ठति किमस्य दोषानुसन्धानेन' इति । अगत्या च बहुधाऽभियोगमुक्त स जायते, पर वारमेकमप्युत्तरयन् 'वञ्चकोऽयम्,' 'धूर्तोऽयम्' 'दण्ड्योऽयम्' कृतदम्भोऽयम्' इति क्रुद्धे धर्माधिकृतै सुतरा दण्ड्येत ।

नैतावदेव । कोऽपि सप्रयोजनो जन उत्कोचदानेनापि स्व-कार्यं सिषाधयीषु कमपि नियोगानुकूलमधिकारिण निभृतमुपसरति निवेदयति च स्वार्थम् । कालेऽस्मिन् लुब्धोऽधिकृतो यदल्पप्रसक्त प्रकृते कर्मण्युदास्त एव, न त प्रत्याचष्टे, न चाऽङ्गीकुरुते । तस्य मौनाकलन सम्मति-लक्षण लक्षयित्वा चार्थी स्वय तस्मै यावच्छक्यमर्थ जातमुपहरति । असावपि मौनमाकलयन्नधिकमेव लभते ।

अन्यच्च । बहुभिर्बलवद्भिरनपराधमेवाक्रान्तो दुरात्मभिर्दुर्बलोऽप्रतिकुर्वन् मौनमास्ते चेत् त्वरित तैर्मुच्यते । प्रतिरोधे तु कृतेऽसितरा क्षति लभेत ।

कामपि प्रणयिनी काममयमान कामुकस्तस्या नाङ्गीकुर्वत्यामपि न प्रत्याचक्षणाया पोषितासो दान मानादिना ता तोषयति । तस्या मौनमेवामुष्य मनोरथ पूर्ति-हेतु । बहुधा मौनमाकलयन्ती सा बलादपि क्रियते विटै । अकामयमाना तु पाद-पुष्पिका-प्रहारैरेव तस्य तथा प्रसाद कुरुते यथा न भूयोऽभिकामयते ताम् ।

यत्र चानेकैर्या कमपि प्रसङ्गमधिकृत्य विवाद तत्रापि मौनमेव श्रेयस्करम् । तथाहि कतरस्यापि पक्षस्य समर्थनेऽन्यस्य विरोध ध्रुव स्यात् । प्रक्षालनाच्च पङ्कस्य दूरादस्पर्शन वरम् ।

बहुधा कलहाना मूलमप्रिया वागेव । विवाद शतापक्षया मौनाश्रयणमेव वरम् । न च तस्मिन् साधिते वाचो विलापन जायेत । मित-भाषण हि वाक्सयम । असयम तस्या मिथ्यावादिता तस्या च निरनुभावता सम्पद्यते । यतवादिना हि वागमोघा निग्रहानुग्रहयो प्रभु । तेषामेव वाणीमर्थोऽनुधावति ।

इत्थ मौनमतिशया गुणावह दोष-हर च । पर प्रायिकमेवैतत् । कदाचिद्धि मौनमनर्थमन्त्रकमपि सिध्येत् । यथा सभाया विद्वानपि वाचयम । सन् सर्वैरज्ञ इत्येव मन्येत । वृथाऽऽक्षिप्तो लोकेन निर्दोषोऽप्यप्रत्याचक्षाण सत्य दोषेणाभियुज्यत । शीलवती योषाऽधिक्षिप्ता दुर्जनै शालीना जोषमासाना बलात्क्रियेत कलङ्किता वा स्यात् । निर्वाचनावसरे वाचाटा एव वय लभन्ते न तूष्णीमासुका । आत्मप्रख्यापनस्य युगेऽस्मिन् मौन-व्रतिना नैव निर्वाह । उदर-भरणेऽपि तेऽक्षमा स्यु । अतो नाय सार्वत्रिको राद्धान्त —

मौन सर्वार्थ-साधनमिति ।

# धर्मार्थकाममोक्षाणामारोग्यं मूलमुत्तमम्

अस्मिन् सकल-सुख-साधन-साधिते बहुविध-वैभव-विभाविते जगति जीव-निकायस्य निखिलस्यापि पार्थिव-सौख्य-भाजनताऽऽकारः कामो विद्यत एव। तत्र शिरोमणेर्मानवस्य कृते तु धर्मार्थकाममोक्षात्मकाः पुरुषार्थाः प्रतिपादिता आचार्यैः; परं तेषां सिद्धिरपेक्षतेऽखिल-कृत्य-सम्पादन-क्षमं नीरुजं शरीरम्। विकलकरणा अविकल-करणा अपि चाहर्निशं रोग-ग्रस्ता न कस्मै चिदप्यर्थाय कल्पन्ते। तथाहि-धर्म एव प्रथमं विभावनीयः। संयमः, आहाराचार-नियम-पालनम्, स्वाध्यायः, पित्राचार्यादि-पूजा, यज्ञानुष्ठानम्, आश्रितानां पालनम्, शरणागतस्य भयाद् रक्षणम्, वर्णाश्रम-कृत्याऽऽचरणम्, एतानि विशिष्टानि चान्यानि कर्माणि धर्म एवान्तर्भूतानि। नैतेषु कतमदपि साध्वसाधु वा सम्पाद्यं गद-परिक्लिष्ट-वपुषा। रोगेषु हि न मनः समाधीयतेऽनुष्ठेये कृत्ये, न निगृह्यते तदपथ्यात्, न स्थिरतामेति विधेये, न प्रस्फुरन्त्यङ्गानि, न भुक्तमपि परिणमतीति कुतो बलम्। न चाबलः क्षमते व्रत-कृतमायासं सोढुम्, भयङ्करं च न प्रभवेद् बलीयसो रक्षितुं शरणागतम्, पालयितुमाश्रितान्, अर्जयितुं निखिल-साधन-साधनं धनम्, स्थिरयितुं च प्रभु-पद-समधित-प्रभावं राज्यम्। महद् खलु कष्टं तपसि। एवं प्रथमः पुरुषार्थः सतत स्वस्थस्य सबलस्यैव च साध्यः।

द्वितीयस्तावदर्थः द्रव्यार्जनमिति यावत्। सर्वेषामपि लोकव्यवहाराणां मूलं द्रव्यम्। उपभोग्यानि वस्तूनि हि तेनैव क्रीयन्ते। दासा अर्थमयं वेतनं लिप्सन्ते। धामलोचनाश्च नव-नवसज्जा-विशेषान् चित्राणि चाभरणानि निखिल-विलास-राशींश्च कामयमाना धनिनमेवोपतिष्ठन्ते, परं स्वस्थो नीरोगश्चैव निरपायमर्थ-मर्जयितुं क्षमो न तु रुग्णः। रोगी तु पैतृकमन्येन वा प्रत्तं राज्यं धनं च न रक्षितुमपि शक्तः किमिति स्वयमुपार्जयितुम्।

धर्माचरणस्य द्रव्य-संग्रहस्य चोद्देश्यमेतावदेव यत् सांसारिकाणां विषयाणा-मुपभोगः। विविध-रस-सरसं चतुर्विधं भोज्यम्, मधनुं-सौम्या विहाराः, चित्रा वेष-भूराः मधुरा विलासाः, मनोरमा उपहसित-गुरावृतवाग्मनोयरा: कामिन्य सर्वेऽप्येते

विषया आरोग्य-कृपा-भाजनानामेव कृते सुखावहाः । रोगी तु तान्न भोक्तुं नापि हातुं कल्पते, केवलं दर्शं दर्शं धुनोति शिरः, भोगाय प्रयतमानस्तु जीवितेनाऽपि वञ्च्यते । एवं जीवनस्य तृतीयः पुरुषार्थः कामोऽपि रोगहीनस्यैव सुखाय ।

चतुर्थस्तु चरमः परम-कृच्छ्र-साध्यो मोक्षो नाम न यः स्वस्थेनाऽपि सुकरोऽधिगन्तुं का कथाऽस्वस्थस्य ? 'अनेक-जन्म-संसिद्धस्ततो याति परां गतिम्' इत्युक्त्या नैक-जन्म-कृत-साधना-सापेक्षोऽयं निराकांक्षैः, निस्पृहैः, निर्विकारैः, निर्लिप्तैः, यदृच्छालाभ-सन्तुष्टैः, यथोपसन्न-जीवनयात्रैः, परमहंसैरेवाधिगन्तव्यः । रोगी तु प्रत्यक्षेऽपि जीवने घुणैरिव रोगैरन्तरा भक्षितः केवलं पथ्यम्, भेषजम्, पौष्टिकं खाद्यम्, मपरुषा शय्याम्, प्रोत्साहनानि समाश्वनानि च वचनान्यपेक्षते । क्व स प्राणायामादि-साधना साध्नुयात् ?

एवंविधे व्यतिकरे जीवनस्य साफल्यमपि नीरोगतापेक्षम् । महाभारते जीवलोकस्य सुखेषु सदाऽऽरोग्यमपि परिगणितम् । तथाहि—

अर्थागमो नित्यमरोगिता च
प्रिया च भार्या प्रियवादिनी च ।
वश्यश्च पुत्रोऽर्थकरी च विद्या
षड् जीवलोकस्य सुखानि राजन् ॥ (म.भा.उ.)

संसारत्यागिना योगिनामपि कृते शरीरस्य रोगेभ्यो रक्षणाय सदोपमनार्याणि वर्णितान्याचार्यैः । तेषामपि स्वास्थ्य-साधनं युक्ताहार-विहारता नितरामनुपेक्षणीया । यथा चोक्तं भगवद्गीतायाम्—

नात्यश्नतस्तु योगोऽस्ति न चैकान्तमनश्नतः ।
न चातिस्वप्न-शीलस्य जाग्रतो नैव चार्जुन ॥ (गी ६।१६)
युक्ताहार-विहारस्य युक्त-चेष्टस्य कर्मसु ।
युक्तस्वप्नावबोधस्य योगो भवति दुःखहा ॥ (गी.६।१७)

सर्वेषामपि भोगानामेकायतनमिदं हि शरीरम् । तस्मिन्नारोग्यभाजि भोगा भोगा अन्यथा तु ते रोगा एव । अतो धर्माचरणार्थं शरीरं स्वास्थ्यं वोदेक्षमाणा जना बोध्यन्ते धर्माचार्यैः —

शरीरमाद्यं खलु धर्म-साधनम् ।

आरोग्य-शालिनि काय एव स्थिरं मनः, विवेक-स्फुरणा-मयी बुद्धिरपि अव्याहतं प्रस्फुरति । न रोगिणो मस्तिष्कमपि कृत्ये प्रभवति । इयमुक्तिरत्र प्रभवति—

'स्वस्थे चित्ते बुद्धयः प्रस्फुरन्ति ।'

तथा च—

'Sound mind in a sound body.'

अतः प्राक्तनैराचार्यैः सर्वेषामपि नराणां कृते नियम-परिग्रहस्य विधानं कृतम्। अनियत-जीवना हि कदर्थ्यन्ते विविधैं रोगैः। आरोग्य-शालिनां स्वर्गायतेऽयमेव लोकः। स्वस्थो जनो यथा परुष-परुषायामपि पाषाण-निचितायामपि भुवि निर्द्वन्द्वं निद्रा-रसमनुभवति, रूक्षानपि चणकान् सरुचि भुञ्जानः सुधा-सारमिव स्वदते न तथा रोग-ग्रस्तो मसृण-मसृणाया तूलिका ऽऽ स्तरण-सुस्तराया शय्याया शयानः पीयूष-मयानीव मधुरतराणि फलानि भक्षयन् निद्रासुखमाहार-निर्वृतिं वा भजते। इत्थं सकल-जीवनानन्द-प्रदमारोग्यमेव जगतीह कमनीयतममभिलषणीयतममास्वादनीय-तममिति सुतरामुक्तमभियुक्तैः:—

धर्मार्थकाममोक्षाणामारोग्य मूलमुत्तमम्।

# कामी स्वतां पश्यति

अस्मिञ्जगति विविध-भाव-बन्धुरे स्वाभीप्सित-सिद्धि-मधुरे नित्यं घटन्ते नैका घटनाः फलन्ति विविधा अवस्थाः उत्पद्यन्ते नाना-रूपाणि वस्तूनि, लभ्यन्ते सुरूपाः कुरूपाश्च जनाः, स्पृश्यते तुषार-गिरि-शिखर- हिमराशि-शीतलो नन्दन-वन-विकसित-नवल-प्रसून-परिमल-ललित-सुरभि दहन-शिखा-परिप्लुष्ट इव निदाघ-दिवस-दिवसकर-किरण-कृत-ताप-तपनायितश्च समीरणः, भुज्यन्ते सुधा-माधुरी-मधरयन्तो मधुरतर-मधुरसेन कटु-तिक्त-क्षार-कषायाश्च पदार्थाः। तेषां साधुताऽसाधुता वा केवलमात्मनो रुचेरनुबन्धिनी। यत्र खलु प्राणिनां कामो भवति तदेव वस्तु साधु नान्यत्। यदुक्तं बृहदारण्यकोपनिषदि—'न वा अरे पत्युः कामाय पतिः प्रियो भवति, आत्मनः कामाय पतिः प्रियो भवति; न जायायाः कामाय जाया प्रिया भवति, आत्मनस्तु कामाय जाया प्रिया भवति, न वा अरे पुत्राणां कामाय पुत्राः प्रिया भवन्त्यात्मनस्तु कामाय पुत्राः प्रिया भवन्ति न वा अरे वित्तस्य कामाय वित्तं प्रियं भवत्यात्मनस्तु कामाय वित्तं प्रियं भवति न वा अरे ब्रह्मणः कामाय ब्रह्म प्रियं भवत्यात्मनस्तु कामाय ब्रह्म प्रियं भवति न वा अरे क्षत्रस्य कामाय क्षत्रं प्रियं भवत्यात्मनस्तु कामाय क्षत्रं प्रियं भवति न वा अरे लोकानां कामाय लोकाः प्रिया भवन्त्यात्मनस्तु कामाय लोकाः प्रिया भवन्ति न वा अरे देवानां कामाय देवाः प्रिया भवन्ति आत्मनस्तु कामाय देवाः प्रिया भवन्ति न वा अरे भूतानां कामाय भूतानि प्रियाणि भवन्त्यात्मनस्तु कामाय भूतानि प्रियाणि भवन्ति, न वा अरे सर्वस्य कामाय सर्वं प्रियं भवत्यात्मनस्तु कामाय सर्वं प्रियं भवति।"

(बृ उ.२।४।५)

एवंमात्मपरता विविध-प्रवृत्ति-निवृत्ति-मूलं जनानाम्। यत्र यत्र उद्यते जनस्य, तत्सर्वमात्मनीनमिव भासयति। यथा कस्मिंश्चिदपि पञ्जर-गते शुके रटति यथेच्छं स्वाभि-प्रेतमेव तदर्थं परिचिनोति समर्थयते च जनः। कान्दविकः (हलवाई) पूर्वमिष्टाऽन्नमोदक-खण्डिकादिमधुरान्न-प्रेरणामेव तस्याशयं भावयति, शाक-विक्रयी च स निविध्य तारस्वरं वदति, 'नहि नहि शुकोऽयं वदति वास्तुकम्, सार्षपम्, शतोभान् गृञ्जनानि, तमस्तरांसि,

गोजिह्वाम्, पटोलकानि क्रीणीत' इति । साधुः कश्चित् प्रत्याचक्षाणस्तम् बोधयति, 'रे भोगपरायणाः ! शुकोऽप्ययं प्रबोधयति वो राम रामेति जपितुम्' इति, लुण्टाकाश्च 'अरे, बध्नीत, मारयत लुण्टतेमम्' इत्येवं भावं तस्य स्वीकुर्वन्ति । कोऽपि पलायित-स्तस्करः स्वभावादप्यात्म-मुखे पश्यन्तं रक्षिणं (Policeman) दृष्ट्वा भयात् 'अभिज्ञातोऽहमनेन, अत एव बद्धैकतानया दृष्ट्या मां पश्यति' इति बुद्ध्वा स्विन्नगात्रो जायते । रथ्या-गतं पान्थं वस्तु-कौतुकादपि विपणि-निहित-दृष्टिं पणिक्क्रीपुमेव कलयति । स्वभावादपि वातायनोपहितमुखी बहिर्दृश्यानि निभालयन्ती तरुणीं विलोक्य विटः 'ध्रुवं मामियं कामयते, तत एव मयि बद्ध-चक्षु' रिति चिन्तयन् प्रसीदति । सदोषश्चेत् परेण कथितां स्वाभाविकीमपि निर्दोषामप्यन्य-परामपि वाचं स्वाधिक्षेपपरामेव प्रत्येति । काणो यथा ममदर्शितायास्तात्पर्यं काणत्वमेव जानाति । अभिलाषुकः सर्वमपि स्वाभिप्रायानुसारमेव बुध्यते । एतदेव मनोवैज्ञानिकं सत्यं समुद्घाटयता कालिदासेनोक्तम्—

स्निग्धं वीक्षितमन्यतोऽपि नयने यत् प्रेरयन्त्या तया
यातं यच्च नितम्बयोर्गुरुतया मन्दं विलासादिव ।
मा गा इत्युपरुद्धया यदपि सा सासूयमुक्ता सखी
सर्वं तत् किल मत्परायणमहो कामी स्वतां पश्यति ।। (शा. २।२)

इयं कामवृत्तिः सर्वत्र प्रत्यक्षमेति । तयाऽनुरुद्धो जनो बहुधाऽचेतनेष्वपि स्वाभिप्रेत-भावनां करोति । तदेवोर्वशी-विरह-पर्युत्सुकः पुरूरवा नदीमपि स्वप्रिया-मेवाकलयति—

तरङ्ग-भ्रू-भङ्गा क्षुभित-विहग-श्रेणि-रशना
विकर्षन्ती फेनं वसनमिव संरम्भ-शिथिलम् ।
यथाविद्धं यान्ती स्खलितमभि सन्धाय बहुशो
नदीभावेनेयं ध्रुवमसहना सा परिणता ।। (विक्र.४।५२)

श्रावणमासे लुप्तदृष्टिर्निखिलमपि जगत् शष्प-श्यामलं पश्यति । काम-परवशः सकलमपि वृत्तमात्मपरमेव निभालयति, स्वकीया भावनाऽन्यत्राऽप्यनुभूयते तेन । स्वराग-रक्तमिव भुवनं प्रतीयते । विक्रमोर्वश्यां प्रिया-विरहितो राजा मयूरं सौन्दर्य-प्रतिद्वन्द्विन्याः कलाप-प्रतिभट-केशकलाप-धारिण्या उर्वश्या विनाशेन मुदितं विभावयति वदति च—

मृदु-पवन-विभिन्नो मत्प्रियाया विनाशाद्
घन-रुचिर-कलापो निःसपत्नोऽद्य जातः ।
रति-विगलित-बन्धे केशपाशे सुकेश्या
सति कुसुम-सनाथे किं करोत्येष बर्ही ।। (विक्र० ४।२२)

अन्यत्र च स एव गगन-निचुल-नीलकण्ठ-जलधर-सहज-चेष्टितेषु स्व-सत्कारमिवानुभवति—

विद्युल्लेखाकनकरुचिरं श्रीवितानं ममाभ्रं
व्याधूयन्ते निचुल-तरुभिर्मञ्जरीचामराणि।
घर्मच्छेदात्पटुतरगिरो बन्दिनो नीलकण्ठाः
धारासारोपनयन-परा नैगमाश्चाम्बुवाहाः ॥ (विक्र. ४।१३)

कामेन तथा स्वपरायणो मानवो भवति यथा जीविताधिकां प्रियामात्मविरह-कर्कशां ज्ञात्वा न खिद्यतेऽपि तु प्रसन्न एव भवति। उत्कण्ठा-कृशामपि मदनलुप्त-शक्तिकामपि सुन्दरतरां जानन् सत्यवसरे तथावस्थामेव रमयितुं प्रयतते। तत एव सुरतमृदिताया बालवनितायास्तनिमा तं सुखयति—

मणिः शाणोल्लीढः समर-विजयी हेति निहतो
मदक्षीणो नागः शरदि सरितः श्याम-पुलिनाः।
कलाशेषश्चन्द्रः सुरतमृदिता बालवनिता
तनिम्ना शोभन्ते गलित-विभवाश्चार्थिषु नृपाः ॥

दमयन्ती-वियोग-कदर्थितो नलो लता राग-विह्वला विलासिनीमिव पश्यति। चम्पक-कोरकावली. कामस्य बलिदीपिका मन्यते, दाडिम-लता च विरहिणीमाकलयति, नागकेसरं च मदन-शर-फल-तीक्ष्णीकरणोपयुक्तं शाणं स्वीकुरुते।

नवा लता गन्धवहेन चुम्बिता करम्बिताङ्गी मकरन्द-शीकरैः।
दृशा नृपेण स्मित-शोभिकुड्मला दरादराभ्यां दरकम्पिनी पपे ॥ (नै.च १।८५)

शकुन्तला-मुख-कमल-मुग्धी-कृतमिव तामभिचञ्चूर्यमाणं भृङ्गं विलोक्य दुष्यन्तस्य—

चलापाङ्गां दृष्टिं स्पृशसि बहुशो वेपथुमतीम्
रहस्याख्यायीव स्वनसि मृदु कर्णान्तिक-चरः।
करौ व्याधुन्वत्याः पिबसि रति-सर्वस्वमधरम्
वयं तत्त्वान्वेषान्मधुकर हतास्त्वं खलु कृती ॥ (शा.१।२३)

इयमुक्तिस्तस्य कामवृत्तिमेव स्फुटी-करोति।

यत्र स्वात्म-विषयेऽनुरागस्य वृत्तौ सन्देहस्तत्रैतादृशीनां चेष्टा स्वविषया साधु प्रतीयते। केनाऽप्यंशेन तादृशेषु लक्षणेषु स्फुटीभवत्सु भूयसा सा प्रतिपत्तिः। मालविकायामियं प्रवृत्तिः स्पष्टं पुष्टिमुपैति यदा मालविकाया गीतं नृत्यं च श्रुत्वा दृष्ट्वा च राजा मनसि मन्त्रयते—

जनमिममनुरक्तं विद्धि नाथेति गेये
वचनमभि नयन्त्या स्वाङ्ग-निर्देशपूर्वम् ।
प्रणयगतिमदृष्ट्वा धारिणी-संनिकर्षा—
दहमिव सुकुमार-प्रार्थना-व्याजमुक्तः ॥ (मा.अ.२।५)

परीक्षागताया अपि मालविकाया गानादिकमात्मपरतया चिन्तयन् राजा कामिनामात्म-परायणता साधु समर्थयते । विरह-वेदनायां च स वसन्तस्यात्मानं प्रति समवेदनामिवानुभवति ।

आमत्तानां श्रवण-सुभगैः कूजितैः कोकिलानां
सानुक्रोश मनसि रुजः सह्यतां पृच्छतेव ।
अङ्गे चूत-प्रसव-सुरभिर्दक्षिणो मारुतो मे
सान्द्रस्पर्शः करतल इव व्यापृतो माधवेन ॥ (मा.अ.३।४)

दमयन्ती-वियोग-दूनो नलः केतकं दृष्ट्वा दीपितमन्मथस्तत् स्व-पराग-दानेः शरान् क्षिपतः कामस्य साहाय्यमिवाचरत् लक्षयति—

धनुर्मधुस्विन्नकरोऽपि भीमजा-परं परागैस्तव धूलि-हस्तयन् ।
प्रसून-धन्वा शरसात्करोति मामिति क्रुधाक्रुश्यत तेन केतकम् ॥
((नै.च.१।८१)

दोहद-धूपितेषु दाडिमी-द्रुमेषु निलम्बितान् दाडिमानपि विदर्भ-सुता-स्तन-पीनताप्राप्त्यये धूमपायिनोऽधोमुखीभूय लम्बमानान् तपस्विन इवालोकयति

विदर्भसुभ्रू-स्तनतुङ्गताप्तये घटानिवापश्यदलं तपस्यतः ।
फलानि धूमस्य धयानधोमुखान् स दाडिमे दोहद-धूपिनि द्रुमे ॥
(नैष. १।८२)

नल-विरह-विधुरिता दमयन्ती च चन्द्रोदयादुद्दीप्तमन्मथा 'मनश्चन्द्रे निलीयते' इति श्रुतिवाक्यं स्वाभिप्रायानुकूलं बुध्यते—

हिमसुभिर्लपितैर्जगद मन्यते मयि निमज्जतु भीम-सुता-मनः ।
मम किल श्रुतिमाह तदर्थिकां नल मुखेन्दु-परां विबुधः स्मरः ॥
(नैष.४।५२)

निसर्गोऽयं कामिनां ये स्व-हृदयेव विश्वं निभासयन्ति, चेतनमचेतनं वा न पश्यन्तः स्वोपकरणतयोपयुज्जते ते ।

'कामार्ता हि प्रकृति-कृपणाश्चेतना ऽचेतनेषु ॥' (पू.मे.)

प्रेष्ठा भावनया रागानुरक्तमिव, प्रियमयमिव, क्रीडामयमिवात्म-प्रतिबिम्बमयमिव चेतनग्राममयमिव मत्सममिव सौन्दर्यमयमिव भुवनं जायते । एतत्समीक्ष्य धावुरुक्तम्-

'कामी स्वतां पश्यति' इति ।

# मति-दर्पणे कवीनां विश्वं प्रतिफलति

वेदेष्वात्मनो विषये निगदितम् 'कविर्मनीषी परिभूः स्वयम्भू' इति । मनन-शक्ति-सम्पन्नः, भ्रमण-परिशीलनादिना सर्वस्य जगतः परितो भवन् नव-नवोन्मेष-शालिन्या प्रतिभया प्रतिभात-वस्तु-वर्णन-वैचित्र्येण नव-कल्पना-परिकल्पन-सामर्थ्येन च स्वयं नव सृष्ट्यै-प्रभवन् देश-कालादि-सीमातिक्रान्तमपि वस्तु गोचरीकुर्वन्नस्तद्दृश क्रान्तद्रष्टा कविर्भवति । अतएवाघटित-घटना-पटुविधाता कविः सृष्टिरचेव चकित-चकितं विदधती जनमन स्ववैविध्येन तस्य काव्यमुच्यते—

पश्य देवस्य काव्यं न ममार न जीर्यति ।

तस्यैव परमात्मनः प्रतिरूपोऽस्य मानव कविरपि स्वप्रतिभया नित्य-नव-रसाला भावोर्वरा परमाह्लादनीं सृष्टिं सृजति, नहि नहि, विधातुरपि कृतेर्गुणमयीं कृतिं कर्तुं स कृती । एतदेव विभाव्योक्तं मम्मटभट्टैः—

नियतिकृतनियमरहिता ह्लादैकमयीमनन्य-परतन्त्राम् ।
नव-रस-रुचिरां निर्मितिमादधती भारती कवेर्जयति ॥ (का. प्र. १)

न तस्य रचना धातु कृतिरिव देशकाल-सीम-सीमिता सुखदुःखादि-मिश्रितानुभूतिमयी, प्राकृतनियमाधीना केवल षड्रसमयी च । तस्य सृष्टिः काव्यमेव यत्र सोऽस्मुत प्रजापतिः । तस्य लेखन्येव तूलिकायाश्लेखन्यादच (शैली) सर्वं व्यापारमनुतिष्ठति, शब्दमयान्यपि, भावमयान्यपि, कल्पना-प्रसूतान्यपि, अमूर्तान्यपि द्रव्याणि धर्मास्थिमयानि, घनानि यथार्थानि मूर्तानि च सा प्रसौति । न तस्य सृष्टेः साक्षात्करणं शोक-घृणा-भयादिकोद्वेग-जननाय कल्पते । अत एवोक्तं केनाऽप्यभियुक्तेन—

अपारे काव्य-संसारे कविरेकः प्रजापतिः ।
यथास्मै रोचते विश्वं तथेदं परिवर्तते ॥
शृङ्गारी चेत्कविः काव्ये जातं रसमयं जगत् ।
स एव वीतरागश्चेन्नीरसं सर्वमेव तत् ॥ (ध्वन्या. ३)

जनमिममनुरक्तं विद्धि नाथेति गेये
वचनमभि नयन्त्या स्वाङ्ग-निर्देशपूर्वम् ।
प्रणयगतिमदृष्ट्वा धारिणी-संनिकर्षा—
'दहमिव सुकुमार-प्रार्थना-व्याजमुक्तः ॥ (मा.प्र.२।५)

परोक्षागताया अपि मालविकाया गानादिकमात्मपरतया चिन्तयन् राजा कामिनामात्म-परायणतां साधु समर्थयते । विरह-वेदनायां च स वसन्तस्यात्मानं प्रति ममवेदनामिवानुभवति ।

आमत्तानां श्रवण-सुभगैः कूजितैः कोकिलानां
सानुक्रोशं मनसि रुजः सह्यतां पृच्छतेव ।
अङ्गे चूत-प्रसव-सुरभिर्दक्षिणो मारुतो मे
सान्द्रस्पर्शः करतल इव व्यापृतो माधवेन ॥ (मा.प्र.३।४)

दमयन्ती-वियोग-दूनो नलः केतकं दृष्ट्वा दीपितव्यथस्तत् स्व-पराग-दानैः शरान् क्षिपतः कामस्य साहाय्यमिवाचरन् लक्षयति—

धनुर्मधुस्विन्नकरोऽपि भीमजा-परं परागैस्तव धूलि-हस्तयन् ।
प्रसून-धन्वा शरसात्करोति मामिति क्रुधाक्रुश्यत तेन केतकम् ॥

((नै.च.१।८१)

दोहद-धूपितेषु दाडिमी-द्रुमेषु निलम्बितान् दाडिमानपि विदर्भ-सुता-स्तन-पीनतामभ्यये धूमपायिनोऽधोमुखीभूय लम्बमानान् तपस्विन इवालोकयति

विदर्भसुभ्रू-स्तनतुङ्गताप्तये घटानिवापश्यदलं तपस्यतः ।
फलानि धूमस्य धयानधोमुखान् स दाडिमे दोहद-धूपिनि द्रुमे ॥

(नैच. १।८२)

नल-विरह-विधुरिता दमयन्ती च चन्द्रोदयादुद्दीप्तमन्मथा 'मनश्चन्द्रे निलीयते' इति श्रुतिवाक्यं स्वाभिप्रायानुकूलं बुध्यते—

किमसुभिर्ग्लपितैर्जड मन्यसे मयि निमज्जतु भीम-सुता-मनः ।
मम किल श्रुतिमाह तदर्थिकां नल मुखेन्दु-परां विबुधः स्मरः ॥

(नैच.४।५२)

*निसर्गोऽयं कामिनां ये स्व-वृत्त्या विश्वं निर्भासयन्ति, चेतनमचेतनं वा न पश्यन्तः* स्वोपकरणतयोपयुञ्जते ते ।

'कामार्ता हि प्रकृति-कृपणाश्चेतना ऽ चेतनेषु ॥' (पू.मे.)

तेषां भावनया रागानुरक्तमिव, प्रियमयमिव, क्रीडामयमिवात्म-प्रतिबिम्बमयमिव चेतनतामयमिव कलामयमिव सौन्दर्यमयमिव भुवनं जायते । एतदनुमोदन्ध साधूक्तम्-'कामी स्वतां पश्यति' इति ।

# मति-दर्पणे कवीनां विश्वं प्रतिफलति

वेदेष्वात्मनो विषये निगदितम् 'कविर्मनीषी परिभूः स्वयम्भूः' इति। मनन-शक्ति-सम्पन्नः, भ्रमण-परिशीलनादिना सर्वस्य जगतः परितो भवन् नव-नवोन्मेष-शालिन्या प्रतिभया प्रतिभात-वस्तु-वर्णन-वैचित्र्येण नव-कल्पना-परिकल्पन-सामर्थ्येन च स्वयं नव सृष्ट्यै-प्रभवन् देश-कालादि-सीमातिक्रान्तमपि वस्तु गोचरीकुर्वन्नस्माकं यः क्रान्तद्रष्टा कविर्भवति। अतएवाघटित-घटना-पटुर्विधाता कविः सृष्टिदर्पेयं भणित-चरितं विदधती जनमनः स्ववैचित्र्येन तस्य काव्यमुच्यते—

पश्य देवस्य काव्यं न ममार न जीर्यति।

तस्यैव परमात्मनः प्रतिरूपोऽयं मानवः कविरपि स्वप्रतिभया नित्य-नव-रसाप्लावितां परमाह्लादनी सृष्टिं सृजति, नहि नहि, विधातुरपि कृतेर्गुणमयीं कृतिं कर्तुं स कृती। एतदेव विभाव्योक्तं मम्मटभट्टैः—

नियतिकृतनियमरहितां ह्लादैकमयीमनन्य-परतन्त्राम्।
नव-रस-रुचिरां निर्मितिमादधती भारती कवेर्जयति॥ (का. प्र. १)

न तस्य रचना धातुः कृतिरिव देशकाल-सीम-सीमिता सुखदुःखादि-मिश्रितानुभूतिमयी, प्राकृतनियमाधीना केवलं षड्रसमयी च। तस्य सृष्टिः काव्यमेव यत्र सोऽद्भुतः प्रजापतिः। तस्य लेखन्येव तूलिकायाश्छेदन्याश्च (छेनी) सर्वं व्यापारमनुतिष्ठति, शब्दमयान्यपि, भावमयान्यपि, कल्पना-प्रसूतान्यपि, अमूर्तान्यपि द्रव्याणि चर्मास्थिमयानि, घनानि यथार्थानि मूर्तानि च सा प्रस्तौति। न तस्य सृष्टेः साक्षात्करणं शोक-घृणा-भयादिकोद्वेग-जननाय कल्पते। अत एवोक्तं केनाऽप्यभियुक्तेन—

अपारे काव्य-संसारे कविरेकः प्रजापतिः।
यथास्मै रोचते विश्वं तथैतत्परिवर्तते॥
शृङ्गारी चेत्कविः काव्ये जातं रसमयं जगत्।
स एव वीतरागश्चेन्नीरसं सर्वमेव तत्॥ (ध्वन्या. ३)

कवेरन्तर्दृष्टिर्न क्वापि प्रतिहन्यते । सूक्ष्मतमाः स्थूलतमाश्चापि पदार्थाः प्रत्यक्षाः परोक्षाश्च योगिन इव प्रणिधानेन प्रतिभानवशात् पुरत एव प्रस्फुरन्ति । नास्ति किमपि तत्त्वं यत्कवेरगोचरम् । तथाहि—

न तच्छास्त्रं न सा विद्या न तच्छिल्पं न सा कला ।
जायते यन्न काव्याङ्गमहो भारो महान् कवेः ॥

अतः सकलमपि न न तस्यान्तर्दृशः पुरो भवति । दिवाऽपि गहनतमस्तोम-वशाद् बहुल-पक्ष-तमी-मयेष्विव कान्तारपर्येषु, अविरलाऽनलोद्वमन-ज्वाला-जटाल-शिखर-कुहरेषु ज्वालामुख-शिखरिषु, अमितनक्र-चक्रमकरनिकर-करालितेषु प्रबल-वीचि-माला-दोला-प्रेङ्खोल-जलराशिषु वारिराशिषु च भुवो गर्भेऽपि, ख-गह्वरेऽपि ध्रु-चत्वरेऽपि कवेर्दृष्टिरबाधं प्रतिपद्यते विमर्शनीयं वस्तु ।

न केवलं जगति विद्यमानं सम्भावितं च स वर्णयितुं क्षमः; नवामपि सौन्दर्य-प्रवणां निखिल-जन-विस्मय-करीमभूतपूर्वामश्रुत-पूर्वामदृष्ट-पूर्वामवाङ्मनसगोचरामतीन्द्रियां सृष्टिमपि रचयितुं समर्थः । तस्य हि कल्पना-शक्ति-द्विविधा ग्राहिका निर्मायिका च । एकयाऽनुभूतमपि पदार्थं भावातिरेकात् स्मृति विषयमपि स्व-प्रतिभया पुरोवर्तिनमिव यथायथं वर्णयति । एषैव तस्य प्रतिभा पाश्चात्य-काव्य-विद्भिः इमेजिनेशन (Imagination) अथवा कल्पनाशक्तिः Imaginative Power इत्युच्यते । परया तु स स्वानुभवं कल्पनां चाश्रित्यासंभाविनीमपि विस्मयावहां चारिमातिशय-शालिनीं नवामेव सृष्टिं निरूपयति । इयमुत्प्रेक्षणशक्तिः फेन्सी ( Fancy ) इति संज्ञयाऽऽख्यायते । इमे द्वे अपि शक्ती कविं योगिनमिव त्रिकालदर्शिनम्, विज्ञानिनमिव वस्तु-तत्त्व-विदम्, चित्रकारमिव चित्रकर्मपटुम्, विलासिनमिव प्रबुद्धरागम्, ऐन्द्रजालिकमिवाश्चर्यानीतवस्तु-प्रस्तावकम् सकल-शास्त्र-विशारदमिव बहुश्रुतम्, भूचक्रमिव भ्रुव-भ्रमणशीलम्, तार्किकमिव न्यायवृत्तिम्, बहुमतम्, बहुश्रुतम्, बहुदर्शिनम्, बहुपरिशीलिनम्, बहुचिन्तनं विधत्तः ।

किं न स प्रस्तौति स्वकृतिषु ? आजीवनमदर्शनीया अपि सुरलोकगोचराः कमनीयतमा रमण्यस्तासां च त्रिलोकापायकं सौन्दर्यम्, शत-शत-दुर्लभाः सम्पदः, विचित्राणि वृत्तं निबध्नन्ति दर्शकाणां हृदयानि कल्पनाया अप्यगोचरतां गतं देवलोक-दुर्लभं वस्तु, अनुभवैकवेद्यः सुमनसां ललितमसृणः परिमलः सर्वमपि कवेः प्रतिभाया विषयः । तिरश्चां विविधान् व्यापारान्, बालानां सहज-मधुराः क्रीडादय मानव-चेष्टा-सामान्येनैव स हेलयैव वर्णयति । भूतिकलायाः परमं कौशलं शिशुपालवधस्य निम्ने पद्ये साधु विभाव्यते—

विप्रं सया कृत्रिम-पत्रि-पङ्क्तेः कपोत-पालीषु निकेतनानाम् ।
मार्जारमप्यायत-निश्चलाङ्गं यस्यां जनः कृत्रिममेव मेने ॥ (शिशु-३।५१)

अत्र विवेकवता मानवानामपि भ्रमनिरूपणात्सजीवतैव शिल्पि-विरचित-विटङ्क-गत-खगकुलस्य सुतरां प्रतिभाति । अन्यत्र चादृष्टनगरवैभवस्य वन्यवारणस्य पलायित-नृप-सदन-गतस्य विस्मयोऽपि द्रष्टव्य :—

वन्यो हस्ती स्फटिक-घटिते भित्तिभागे स्वबिम्बं
दृष्ट्वा दूरात् प्रति-गज इति त्वद्द्विषां मन्दिरेषु ।
हत्वा कोपाकुलितरदनस्तत्पुनर्वीक्षमाणो
मन्दं मन्दं स्पृशति करिणीशङ्कया साहसाङ्क ॥ (का. कल्प. ४।४)

कवे काव्य-जगति न तरुलता अपि स्वसमय सीमान पालयन्ति, कालिदासस्याल-कायाम् तु पर्यायलभ्यान्यपि कुसुमानि नित्यसुलभानि ।

हस्ते लीला कमलमलके बालकुन्दानुविद्धं
नीता लोध्र-प्रसव-रजसा पाण्डुतामानने श्री. ।
चूडा पाशे नवकुरबक चारु कर्णे शिरीष
सीमन्ते च त्वदुपगमज यत्र नीप वधूनाम् ॥ (उ. मे. २)

अपि च

मत्तोन्मत्त-भ्रमर-मुखरा पादपा नित्य पुष्पा
हस-श्रेणी-रचित रशना नित्य पद्मा नलिन्य ।
केकोत्कण्ठा भवन शिखिनो नित्य भास्वत्कलापा
नित्य ज्योत्स्ना प्रति-हत-तमो वृत्ति रम्या प्रदोषा ॥ (उ मे ३)

विस्मय-लोकस्य सृष्टिस्तस्य मन्ये विस्मयमपि विस्मापयते । अभिज्ञान-शाकुन्तले मारीचस्याश्रमे—

प्राणानामनिलेन वृत्तिरुचिता सत्कल्पवृक्षे वने
तोये काञ्चन पद्म रेणु कपिशे पुण्याभिषेक क्रिया ।
ध्यान रत्न-शिला गृहेषु विबुध-स्त्री-सन्निधौ सयमः
यद्वाञ्छन्ति तपोभिरन्य मुनयस्तस्मिस्तपस्यन्त्यमी ॥ (शा ७।१२)

इतोऽपि विस्मयकर हृदयहर बुद्धि-वैभव-प्रभाकर वाङ्मनसागोचर सौन्दर्य-स्वर्गचित्र-व्यापारवन्धुर च जगत् कवि-पञ्चाननस्य बाणस्य काव्यबन्धे । तत्र वैभव दारिद्र्यम् च, उल्लासातिशय शोकस्य च चरम परिपाक, उपहसित-सकल-लोक-मर्याद सविलास-राशि-द्विगुणितानुरागो राग कृत-बन्धु-हृदय मविभागो विरागश्च, पार्थिव कुतूहलकर दिव्य च मर्त्यरित-मति-भ्रमर सौन्दर्यम्, अविज्ञान-खेदानुभवो नर्म-परिहास, विधुरित-सुख-प्रलापश्च विलाप, सुरूप कुरूप च नगर-सुषमा वनश्रीश्च, पावन

तपोवनं सबल-कुत्सानामङ्कणं पक्वणं च मानवानां तिरश्चां च निसर्ग-विभ्रमश्चेष्टाः, नियति-रमणीयानि धिक्कृत-सुर-वन-रामणीयकानि रोमाञ्चोदञ्चनानि च विकट-गिरि-कटक-कुटिल-कूट-गह्वर-कटु-कान्तार-भीषणानि प्रकृतेः स्वरूपाणि नय-प्रपञ्च-वक्राः स्वभाव-सरसाश्च व्यापाराः सर्वमपि प्राचुर्येण सुलभम्। उदयमानस्यास्तं यतश्च प्रभाकरस्य निशा-वसन-चटुल-करस्य दिग्वधू दुकूलायिताच्छाच्छातपस्य प्राचीमुख चुम्बतः वार्धक्य-पलितस्य इव पाण्डरिमाणं वहतश्च रजनी-पतेरतिशयशोभनीया छटा भूयो भूयः प्रस्तूयते। शिञ्जद्वारवाणानां सैनिकानां पुरस्कृत-गर्जित-यान प्रयाणम्, आखेटक-व्यसनिनां शबराणां क्रूरकर्माणि, विभवानुरूपवन्यका-परिणय-संभारा म्रियमाणस्य प्रभाकरवर्धनस्य आतुरजनोचिता, पितृ-व्यसन-विषण्णस्य भ्रातृवध-वृत्तान्तश्रवण-क्रुद्धस्य च हर्षवर्धनस्यावस्थे, विजय-मद-मत्त-भट-दल-विलुण्ठ्यमानानां ग्रामीणानां चीत्काराश्च समानकौशलेन तत्रोपवर्णिताः।

न केवलं चक्षुषोर्गोचर एव मानसेऽपि चानुभूतिमात्रवेद्ये कवीनामप्रतिहता प्रतिभा। तेषामुक्तिषु जीवनस्य सनातन सत्यमालक्ष्यते शब्दमयम्। 'अविवेकः परमापदां पदम्' 'क्षणे क्षणे यन्नवतामुपैति तदेव रूपं रमणीयतायाः'। 'आशाबन्धः कुसुम-सदृशं प्रायशो ह्यङ्गनानां, सद्यःपाति प्रणयि हृदयं विप्रयोगे रुणद्धि,' 'कामी स्वतां पश्यति,' *'सर्वःकान्तमात्मीयं पश्यति,' 'भवितव्यानां द्वाराणि भवन्ति सर्वत्र' 'शुश्रूषस्व गुरून् कुरु प्रियसखीवृत्तिं सपत्नीजने'* 'सुखमुपदिश्यते परस्य' एतासूक्तिषु न तथाऽनुभूयते मानसी वृत्ति यथा निम्नाङ्कितेपूद्धरणेषु—

रम्याणि वीक्ष्य मधुरांश्च निशम्य शब्दान्
पर्युत्सुकीभवति यत्सुखितोऽपि जन्तुः।
तच्चेतसा स्मरति नूनमबोधपूर्वं
भावस्थिराणि जननान्तर-सौहृदानि ॥ (शा. ५।२)

"दृष्ट्वा च प्रथमं रोमोद्गमः सतो भूषणरवः, तदनु कादम्बरी समुत्तस्थौ। अथ तस्याः कुसुमायुध एव स्वेदमजनयत्, ससंभ्रमोत्थानो व्यपदेशोऽभवत्। उरुकम्प एव गतिं रुरोध, नूपुररवाकृष्टहंसमण्डलमपयशो लेभे। निःश्वासप्रवृत्तिरेवांशुकं चलं चकार, चामरानिलो निमित्ततां ययौ। अन्तः प्रविष्टचन्द्रापीडस्पर्शलोभेनेव निपपात हृदये हस्तः, स एव करः स्तनावरणव्याजो बभूव। आनन्द एवाश्रुजलमपातयत् घनित-वर्णविसंभ-कुसुमरजो व्याजमासीत्।"

अत्र चन्द्रापीडदर्शनेनोद्भूतरागोद्गमायाः कादम्बर्या हृदय-दशा अनुभावगुणेन वर्णिता। अन्यत्र च तस्या अन्तर्द्वन्द्वः—

'स्वप्ने, किमिदमारब्धम्' इति निगृहीतेव लज्जया, 'गन्धर्वराज-पुत्रि, कथमेत-द्युक्तम्' इत्युपालब्धेव विनयेन, 'प्रथममायत्तुरागो बालभाव' क्व गतः' इत्युपहसितेव

मुग्धतया, 'स्वैरिणि, मा कुरु यथेष्टमेमाकिन्यविनयम्' इत्यामन्त्रितेव कुमारभावेन, 'भीरु नाय कुल-कन्यकाना क्रम' इति गर्वितेव महत्त्वेन, 'दुर्विनीते, रक्षाविनयम्' इति तार्जितेवाचारेण, 'मूढे मदनेनानेन लघुता नीतासि इत्यनुशासितेवाभिजात्येन···' इत्यादौ। कौशलमेवेद कवेर्दुर्विज्ञेयाकूते लज्जा कवाट-घटिते कुमारी हृदये प्रविश्य तद्व्यापार-समीक्षण यत्।

"यत्र च कन्यकाजनस्य कपोल तलालोक एव मुखप्रक्षालनम्, लोचनान्येव कर्णोत्पलानि, हसितच्छवय एवाङ्गरागा, निश्वासा एवाधिवासगन्धयुक्तय अधरद्युतिरेव कुङ्कुमनुलेपनम्, आलापा एव तन्त्रीनिनादा, भुजलता एव चम्पकवैकक्ष्यमाला, करतलान्येव लीलाकमलानि, स्तना एव दर्पणा निजदेहप्रभैवांशुकावगुण्ठनम् जघनस्थलान्येव विलासमणिशिलातलानि कोमलाङ्गनिराग एव चरणालक्तकरस, नखमणिमरीचय एव कुट्टिमोपहार-कुसुमप्रकरा।

'यत्र चालक्तकरसोऽपि चरणातिभार, बकुलमालिकामेखला स्खलनमपि गमनविघ्नकरम्, अङ्गरागगौरवमप्यधिकश्वासनिमित्तम्, मधुकभारोऽपि ग्लानिकारणम्।

(काद पू)

एवविधानि सौन्दर्यातिशयस्य विस्तृतानि वर्णनानि कवे प्रतिभाया दूरगामिता व्यञ्जयन्ति। अपरत्र तु स सहृदयान् विस्मय सागरे निक्षिपन् व्यञ्जनयैव तादृशी विस्मयावहा सृष्टि द्योतयति—

चित्ते निवेश्य परिकल्पितसत्त्वयोगाद्
रूपोच्चयेन विधिना रचिता कृशाङ्गी।
स्त्री-रत्न-सृष्टिरपरा प्रतिभाति सा मे
धातुर्विभुत्वमनुचिन्त्य वपुश्च तस्या ॥ (शा २।९)

प्रावृतेषु वर्णनेषु रवीना दृष्टिरतितरा सूक्ष्मा।

कर्तुं यच्च प्रभवति महीमुच्छिलीन्ध्रामवन्ध्या
तच्छ्रुत्वा ते श्रवण-सुभग गर्जित मानसोत्का।
आ कैलासाद् बिसकिसलयच्छेदपाथेयवन्त
सम्पत्स्यन्ते नभसि भवतो राजहसा सहाया ॥ (पू मे)

अत्र पृथ्व्या धनागमरक्षितश्रवणाकृतमुद्गतशिलीन्ध्रत्वमुर्वरत्वस्थापन च राजहसाना बिसकिसलय-सनाथ चञ्चुना मेघेन सह यान खग हृदय परिचय पात्राना च सहयात्रि-स्नानमत्व मवेरन्तवृत्ति-परिचितत्व च बोधयति।

उदयति विततोर्ध्वरश्मिरज्जावहिमरुचौ हिमधाम्नि याति चास्तम्।
वहति गिरिरयं विलम्बिघण्टाद्वयपरिवारितवारणेन्द्रलीलाम्

अत्रोदयमानस्य रवेरस्तमनोन्मुखस्य चन्द्रमसश्च सहैव क्षितिजोभयकोण-स्पर्शित्वं कवि घण्टाद्वयपरिवारितस्य शक्रगजस्य शोभायाः स्मारयति ।

क्वचिच्च दुर्गमा वनकरिवप्रकेलिदन्तुराः पाषाणशिला उल्लिखन् वृद्धवेश्या अपि काव्यविषयतामानयति ।

अयमतिजरठाः प्रकाम-गुर्वीरलघुविलम्बि-पयोधरोपरुद्धाः ।
सततमसुमतामगम्यरूपाः परिणत-दिक्करिकास्तटीर्बिभर्ति ॥ (शिशु.४।२९)

अन्यत्र विमानदृश्यं जाह्नवी-कालिन्दी-सरस्वतीनां मेलनं रत्नमालामिवानेक-रागां पुरतः प्रस्तौति ।

क्वचित्प्रभालेपिभिरिन्द्रनीलैर्मुक्तामयी यष्टिरिवानुविद्धा ।
अन्यत्र माला सित-पङ्कजानामिन्दीवरैरुत्खचितान्तरेव ॥
क्वचित्खगानां प्रियमानसानां कादम्बसंसर्गवतीव पङ्क्तिः ।
अन्यत्र कालागुरु-दत्तपत्रा भक्तिर्भुवश्चन्दन-कल्पितेव ॥
क्वचित्प्रभा चान्द्रमसी तमोभिश्छायाविलीनैः शबलीकृतेव ।
अन्यत्र शुभ्रा शरदभ्रलेखा रन्ध्रेष्विवालक्ष्यनभःप्रदेशा ॥
क्वचिच्च कृष्णोरग-भूषणेव भस्माङ्गरागा तनुरीश्वरस्य ।
पश्यानवद्याङ्गि ! विभाति गङ्गा भिन्न-प्रवाहा यमुना-तरङ्गैः ॥ (र.वं. १३।५४-५७)

भीषणेषु संगरेषु, प्रकृते रोमहर्षकेषु च दृश्येषु न कवीनां दृष्टिः प्रतिहता । तान्यपि ते तेनैव नैपुण्येन यथायथं वर्णयन्ति यथा शोभनानि ।

शिलीमुखोत्कृत्त-शिरः-फलाढ्या च्युतैः शिरस्त्रैश्चषकोत्तरेव ।
रणक्षितिः शोणितमद्यकुल्या रराज मृत्योरिव पानभूमिः ॥ (र.वं. ७।४९)

प्रकृतेश्च भीषणं दृश्यं यथा—

निष्कूजस्तिमिताः क्वचित्क्वचिदपि प्रोच्चण्ड-सत्त्वस्वनाः
स्वेच्छासुप्तगभीरभोगभुजगश्वासप्रदीप्ताग्नयः ।
सीमानः प्रदरोदरेषु विलसत्स्वल्पाम्भसो यास्वयं
तृष्यद्भिः प्रतिसूर्यकैरजगरस्वेदद्रवः पीयते ॥ (उ. च., २।१६)

स एव भवभूतिरन्यत्र पिशाचाङ्गनानां प्रमोदाकुला सज्जां वर्णयति—

अन्त्रैः कल्पित-मङ्गल-प्रतिसराः स्त्री-हस्त-रक्तोत्पल-
व्यक्तोत्तंसभृतः पिनह्य सहसा हृत्पुण्डरीक-स्रजः ।
एताः शोणित-पङ्क-कुङ्कुमजुषः संभूय कान्तैः पिब-
न्त्यस्थि-स्नेह-सुराः कपाल-चषकैः प्रीताः पिशाचाङ्गनाः ॥ (मा. मा. ५।१८)

एतत्सर्वं कवेः प्रत्यक्षदृश्यमिव प्रतिभाति।

एतावता सिद्धमेव यन्नास्ति जगति तत्सूक्ष्मं स्थूलं वा दिव्यं पार्थिवं वा लौकिकमलौकिकं संभवमसंभवं वा किमपि वस्तु यन्न कवेः प्रतिभागोचरतां व्रजति तस्यान्तर्दृष्टिः प्रत्यक्षे परोक्षे वा सर्वत्र विषये तुल्यं प्रस्फुरति। तदैवानन्दनिष्यन्दनानि काव्यानि ते निर्मातुं प्रभवन्ति कृतयश्च तेषां सामाजिकानां मनांसि बलादात्मसाद् विदधति। ततो नातिरञ्जनेयं यदुक्तम्—

मति-दर्पणे कवीनां विश्वं प्रतिफलति।



# यत्र नार्यस्तु पूज्यन्ते रमन्ते तत्र देवताः

सृष्टिरियं सकलाऽपि प्राणिना पुंस्त्वे स्त्रीत्वे चेति लिङ्गद्वये (Two Sexes) विभक्ता। पुरुषो नारी चोभे अपि जगदिदं पल्लवयतः। यथा न केवला भूमिर्नापि केवलं बीजं वृक्षोद्गमाय प्रभवति, तथैव न केवलः पुरुषो न वैकाकिनी नारी सन्तते प्रजननाय। काममद्य सूचीवेधादिना (Injection) रेतसि सञ्चारिते स्त्री कल्पते प्रसवाय, परं बीजं तत्त्वं रेतः पुरुषस्यैव न तु स्त्रियाः। वस्तुतः स्त्रियः पुंसः च योऽयं संयोगः, ब्रह्मणो मायायाश्च, पुरुषस्य प्रकृतेश्च सृष्टुस्तस्य शक्तेर्वा भवति। उभयोर्मिथुनीभावः एवार्धनारीश्वरत्वं नरो गच्छति। इत्थं नारी नरश्च मिथोऽन्यस्य पूरकौ। नैकं विनेतरस्य सामर्थ्यम्। अतः समाजे पुरुषः स्त्री चोभे अपि समानमेव महत्त्वं भजतः। ना भर्ता गृहपतिश्चेत् नारी सदनस्य लक्ष्मीः शोभा वा। नित्यं कर्ममयं पौरुषमयं व्यवसायमयं संघर्षमयं च क्लेशबहुलं नरस्य जीवनं रमाभिरामा रामैव तारुण्यसहजं विभ्रम-विलास रामणीयकं जनयन्ती रसं (प्रेमाणम्) सरसयति।

एतादृशी महिममयी जननी भगिनी पुत्री प्रेयसीति नैकरूपता बिभ्रतीयं योषा बहुधा लोकैरनाद्रियते। केचन तां विलासैकप्रयोजनामपरे च सन्तत्युत्पादनैकार्थां स्वीकुर्वन्तो निराद्रियन्ते। न तस्या मनोभावानामादरं, न सम्मानस्य चिन्ता, न शीलस्यापेक्षा, न सुखदुःखसंभावना, न विकासस्यावसरं, न जीविते सौविध्यम्, न स्वावलम्बिता। सर्वैरपि वर्वरैरिव सोपेक्ष्यते सर्वेषु कार्येषु पुरुषैरिति महान् खेदः। विस्मरन्ति ते तस्या एव सविध्या कुक्षेः प्रसूता यामसहायां सावहेलं बलात् कुर्वन्ति। न जातु ध्यायन्ति, यामनादरेण संभावयाम सैव शिशून् न पितामही सती कार्पण्यप्राया जनन्या बहुधा लालितवती। कुत्सितया दृष्ट्या वीक्षितैव रमणी सोदरारूपेण पावनं स्नेहमस्माकं मनःसु सञ्चारयति। युगेभ्यो निराकृता निन्दिता च योषिदात्मजा भवन्ती वात्सल्य-स्रोतांसि प्रवाहयति मानसेषु। तस्या बहुरूपतामेवाकलय्य प्रतिपादितं कविकुलगुरुणा कालिदासेन—

गृहिणी सचिवः सखी मिथः प्रियशिष्या ललिते कलाविधौ ।
करुणा-विमुखेन मृत्युना हरता त्वां वद किं न मे हृतम् ॥ (रघु.८।६७)

परमादर्श वचनमिदम् । नवैतादृशी दृष्टि पुरुषस्य स्त्रीषु । आसीत्कश्चित्कालो यदा पुरुषस्यार्धाङ्गत्वेन स्वीकृता नारी यज्ञादिषु कर्मसु दक्षिणं भाग भूषयन्ती तस्य मूर्तिमती दीक्षेवाभवत् । यदा सदेहा सत्क्रियेव सा पत्यु प्राणायिता तस्य गृहस्वामित्वमगात् । नैकला सा पातिव्रत-धर्म बद्धा बभूव निरङ्कुश्च पुरुप कृत्वा । सोऽपि पत्नीव्रत-बद्धोऽपेक्ष्यत । नासीत्तदा व्यवस्था न यद भर्ता तस्या परामर्श विना किमपि कर्तुमचेष्टत । साक्षात् भारतीव सा स्वज्ञान प्रकाशेनादीप्यत प्राबोधयच्च शिशूनामन्तरम् । तदा वधूरासीत् सुमङ्गली याऽऽशास्यत विवाहावसरे—

सम्राज्ञी श्वशुरे भव, सम्राज्ञी श्वश्र्वां भव ।
ननान्दरि सम्राज्ञी भव सम्राज्ञी अधिदेवृषु ॥ (ऋ.१०।८५।४६)

इति । इत्थं गृह-राज्यस्य सम्राज्ञी सा सर्वेषा पालकतया समभाव्यत । तदधीन कुलस्य योग-क्षेम इति कृत्वा सोपादिश्यत—

अघोर-चक्षुरपतिघ्न्येधि शिवा पशुभ्य सुमना सुवर्चा ।
वीरसूर्देवकामा स्योना शं नो भव द्विपदे शं चतुष्पदे ॥ (ऋ१०।८५।४४)

तया सुमङ्गल्या सहाभिन्नतनुत्वेन विहरत पत्युरभूत् स्वर्गायित गृहम । तस्येयमासीदाशीर्ह्य तदा—

इहैव स्त मा वियौष्टं विश्वमायुर्व्यश्नुतम् ।
क्रीडन्तौ पुत्रैर्नप्तृभिर्मोदमानौ स्वे गृहे ॥ (ऋ१०।८५।४०)

'देवि, सुभगे, शुभे, भद्रे, प्रिये, आर्ये' इत्यादिभि सम्मानमयै सम्बोधनै सम्बोधिता सा प्रतिष्ठामन्वभवत् । न केवल नारी परेते भर्तरि तमन्वगात्, पतिरपि तस्या मृताया स्वजीवितांशस्यापि प्रदानेन यमालयादपि ता न्यवर्तयत् । प्रमतिपुत्रो रुरुस्तस्य निदर्शन य स्वप्रिया प्रमद्वरा सर्पदष्ट-मृता स्वायुषोऽर्ध प्रतिपाद्याजीवयत् । (तु. म.भा. आ. ९।१२५)

पर कालान्तरे दैवस्य प्रातिकूल्येन, पुरुषस्याभिमानेन वा, तस्यैव निरङ्कुशत्वेन वा, स्वदैन्येन वा मोहेन, त्रपया, जाड्येन शीलेन वा क्रौर्येण वाऽऽचारव्यवस्थापकानाम् शोचनीयतमा दीन-दीना दशा साऽभजत् । अहो, महद्वैषम्यं योषित । किं न तया सोढम् ? उपानदिव सदा चरणस्थाना, शुनीव कटुशब्दभर्त्सिता, अनार्येवोपेक्षिता, मार्ग धूलिरिव पादमृदिता, पतितेव सर्वाधिकारवञ्चिता, गर्भदासीव गृहकर्मसम्पादनयापितकाला, दुःशीलेव पश्चात्तापपानी, रासभीव निर्दयं ताडिता, शून्य-गृह वलभीव दीन-दर्शना,

कौशिकीव असूर्यंम्पश्या, वन्दिनीव विहिताभ्यन्तरनिवासा शिक्षया, दीक्षया, सम्मानेन, मर्यादया, प्रेम्णा च वञ्चिता परिजनस्य, घृणायाः, गालीनाम्, ईर्ष्याया, असूयायाः, उपहासस्य, कुविचाराणाम्, अत्याचाराणाम्, बलात्काराणाम् पात्री जाता ।

आहारो द्विगुणः स्त्रीणां बुद्धिस्तासां चतुर्गुणा ।
षड्गुणो व्यवसायश्च कामश्चाष्टगुणः स्मृतः ॥

'परं साहसिकाः स्त्रियः' 'क्रूर-हृदया अविश्वसनीया नारी', इत्येतादृशी संकीर्णतमा भावना तासां कृते समाजे बलीयसी जाता ।

स्वयं परनारीलम्पटोऽपि वार-वनिता-कटाक्ष-विक्षेप दर्शन-समकालमेव भ्रकुंस इव नृत्यन्नपि दासी-चरण-रजो-धूसरललाटोऽपि कुमारी-व्रात-शील-भञ्जनोऽपि स्व-कर्माणि जातु निरीक्षते परं दोषैकदृक् सतीमपि सुशीलामपि, सुगुणामपि सुदाक्षिण्यामपि सदा दुःशीलामेव शङ्कते । तस्याः प्रत्येकं कृत्यमन्यथैव संभावयति । गवाक्ष-जालेन बहिः पश्यन्तीमपि पर-पुरुषमिव प्रतीक्षमाणां जानाति । सरलमपि तस्या व्यवहारं वञ्चननाटकमेव मनुते । मौग्ध्यमपि मौढ्यपक्षे करोति । लज्जा-विनय-शालीनता-शालिनीमपि वशीकरण-प्रयोगनिपुणामाकलयति । विद्यावतीमपि मिथ्याभिमानपरपोर्ऽकविज्ञामेव ख्यापयति । सुमार्गं बोधयन्तीमपि स्वाभिषङ्गरता वध्यते । स्वल्पेऽपि तस्याः स्खलितेऽभव्यानाख्येयाशाश्लगालीप्रदानेन समं यथोपलब्ध-साधनैस्तां ताडयति । सततात्याचार-दूनायामसाध्य-रोगग्रस्तायां च तस्यां नोचितां परिचर्यामाचरति ।

बहुधैतादृशामत्याचाराणां मूलं धनमेव भवति । दैवाद् यदि निर्धनसुता धनिकेनोह्यते, मध्यवित्तगृहे वा धनिनः पुत्री परिणीयते, तदा यौतुकलुब्धाः श्वशुरादयस्तामधिकाधिकं पीडयन्ति निभृतं घ्नन्ति च । कुलवधूनां विपदः कारणं प्रायः स्त्रिय एव । श्वश्रूः यातरो ननान्दारो वा ताः सततं भर्त्सयन्ति । मिथ्याभियोगैर्जननी सुतं पत्न्या विरञ्जयति ।

अर्थपारवश्येनापि स्त्रीणां दुर्दशा । यावतः कालात् पति-पत्न्यो भर्तृभार्याभावः समपद्यत तदवधि पुमान् स्त्रियं स्वाश्रितां क्रीतामिवान्नवस्त्रैः शीलयति यथेच्छं च पीडयति । इत्थमनेकेऽर्थे स्त्रीणां पुरुषाणां च मध्ये दौर्मनस्यस्य महान् खातो निखातः । क्व तावदेकात्मता क्व चाद्यतनी विषमता भर्तृभार्यात्वभ्रष्टभेदमूला । इयमेव दशा पद्येऽस्मिन् येनापि कविना नायिकामुखेन वर्णिता—

पुराऽभूदस्माकं प्रथममविभिन्ना तनुरियम्
ततोऽनु त्वं प्रेयान्, वयमपि हताशाः प्रियतमाः ।
इदानीं नाथस्त्वं वयमपि कलत्रं किमपरं
हतानां प्राणानां कुलिशकठिनानां फलमिदम् ॥

क्रमशः प्रवृत्ते ईदृशे भेदभावे नारीणां दशा दिने दिने दीनतरा ऽजायत। यदोपानहीव पत्न्यां पत्युः सर्वाधिकारः सजातस्तत एव समाजस्य दौर्भाग्येनाऽपि साधु व्यलासि। अन्यथा कथं कालिदासोऽपि ब्रूयात्—

'उपपन्ना हि दारेषु प्रभुता सर्वतोमुखी।' (शा० ५।२६)

नार्या भोगैकप्रयोजनत्वमपि तदवध्येव जातम्। तेनाऽपि तस्या गौरवमवाहीयत। एतस्य प्रतिध्वनिः कालिदासस्य शब्देषु—

अपि स्वदेहात् किमुतेन्द्रियार्थात् यशोधनानां हि यशो गरीयः। (रघु० १४।३५)

किं सीतेन्द्रियार्थमात्रम्? एतावदेव मूल्यं भारत-महिष्याः? धिग् धिग् एतादृशीं भावनां तत्रैव यत्रोदीरितमासीत्—

विद्याः समस्तास्तव देवि भेदाः स्त्रियः समस्ताः सकला जगत्सु। (मार्क० पु०)

अनया भावनया प्रेरितैरेवाच येर्घोषितम्—

'स्त्रीशूद्रौ नाधीयाताम्' इति। असूर्यम्पश्या, अज्ञातजगद्गतय, यावज्जीवनं चुल्लीधमनेन शिशूत्पादनेन वा कृतार्थीकृतदेहाः पशुवत्कालं यापयेयुः। विवाहे, गृहकर्मसु, समाज-कल्याणे न क्वापि नारीणां मूल्यम्, न भावानामादरः, न सुखदुःखादिजिज्ञासा, न सम्मानम् न मर्यादा।

न केवलमेतादृशी स्थितिरार्येष्वेव, यवनेषु ततोऽपि हीनतरा यत्र तस्याः प्रयोजनं सत्यमेव कामतृप्तिर्नान्यत्। केवलं विवाहे तद्विच्छेदे च तस्याः सम्मतेर्महत्त्वं नान्यत्र। अतएव ते यथावसरं स्वजातीया परकीया वा कन्याः पत्नीर्बलाद् दूषयन्ति विक्रीणन्ति बहुधाऽवमानयन्ति च।

अद्य पाश्चात्यः समाज एव नारीं साधु सम्मन्यते। तत्र पुरुषैस्तुल्या एव तस्या अधिकाराः। सर्वेष्वपि क्षेत्रेषु तस्या अवसरः। न तत्र तासां विषयं—

'परं साहसिका स्त्रियः,' 'आहारो द्विगुणः स्त्रीणां बुद्धिस्तासां चतुर्गुणा। षड्गुणो व्यवसायश्च कामश्चाष्टगुणः स्मृतः।' 'न स्त्री स्वातन्त्र्यमर्हति' इत्यादयो ऽयामपरा व्यवस्थाः। सर्वोच्चमपि पदं साऽर्हति। न तत्र विषमं परिवार-जीवनम्।

*अद्य भारते यत्र तत्र श्रूयते, अहो विषमा दशा अस्माकं स्त्र, एतादृशो पत्नीं* लब्ध्वा किं सुखं मया ऽनुभूतम्। नित्यं कलहायते सा, अतस्तु बंधुर्यमेव सुखाय, इत्यादि। अन्यतरश्च विषण्णवदना पाण्डु-कपोलितेवास्थिमयीव दीना नारी करुणं विलपति। जीवनं दुर्वहभारायितम्, अकाल-पलिता केशाः, यौवन एव वार्धक्यं स्वागतम्। प्रातरारभ्य कलहः, अशान्तिः, विनष्टा, भर्त्सना, अवमादः। किं नानुभूयते कटुतरम्। सर्वमिदं स्त्रीणामुपेक्षामूलम्। सुशिक्षिता, सुसंस्कृता, सुपोषिता रमणी रमयति मनः

पुरुषस्य । गृहं तया स्वर्गायते । यदि कर्तव्यपरायणा वधू पतिं प्राणानिव, तस्य पितरौ चात्मनः पितरौ, बन्धून् स्वबन्धूनिव, गृहं च स्वगृहमनुभवति पतिरपि तस्याः सुखे दुःखे च सहचरः, तस्याः कष्ट-प्रदानि कारणानि यावच्छक्यमपास्यन्, तदर्हं सम्मानं प्रदर्शयन्, तद्विरक्तिहेतून् परिहरन्, तस्या गुरुभ्योऽप्यात्मगुरुजनेभ्य इव पूर्णं विनयं दर्शयन् प्रेम्णा लालयति ताम्, श्वशुरः श्वश्रूश्च स्वसुतायामिव तस्यां निर्व्याजं स्निह्यतः, न परगृहादागतां विभावयतः, न पार्थक्यं दर्शयतः, तस्याः परिचरितानि सवात्सल्यमभिनन्दतः, न कदाऽपि तस्या अवमाननां विधत्तः, ननान्दा च न तस्याः लालनमीर्ष्याकलुषाक्षी गर्हयति, भ्रातृजायोचितं सम्मानं तस्यै प्रयच्छति, निश्छलस्य स्नेहस्यादानप्रदानं च करोति चेत् को विशेषः स्वर्गस्य तस्माद् गृहात् ?

अथ पाश्चात्यं गार्हस्थ्यजीवनं, तत्रत्यस्य नारीसमाजस्य सम्मानपूर्णां दशां समीक्ष्य स्वदुरवस्थां चानुभूय भारतीया स्त्री स्वदास्यमूलां सामाजिकीं रूढीं सावहेलं धिक्करोति, शास्त्रीयेभ्यः सामाजिकाचारेभ्यः सा सतिरस्कारं द्रुह्यति । अथ प्रतिशोधभावनया—

'manu is fit to be hanged on the altar of progress'

एष तस्या घोषः । भारते ऽपि सा शनैः शनैरधिकरोति सर्वमपि क्षेत्रम् । लभमाना प्रगतयेऽवसरं सुविधाश्च सर्वत्राऽपि स्व-प्रतिभायाश्चमत्कारं स्फुटीकरोति । परं नाद्यापि सा सर्वथा सुखमनुभवति । नैदानीमपि भारतीयैरवगतं जीवनदर्शनम् । ते क्रोशन्ति निन्दन्तः स्वगार्हस्थ्यमनारतम् । यतो भूयसेदानीमपि दुर्दशैव नारीणां प्रायः समाजे । नाहम्भावः सम्प्रत्यपि यतो विलयं पुरुषस्य । स स्पृहयति पाश्चात्यकौटुम्बिकसुखाय परं न जानाति तस्य मार्गम् । सत्यश्चेत्तस्य कामोऽचिरेण सोऽनुभवतु यथार्थस्थितिम् । सम्मानयतु नारीम्, प्रयच्छतु तस्या अधिकारान्, अपाकरोतु तस्याः कष्टकारणानि । अर्पयतु यथार्थं स्नेहम्, दर्शयतु तदर्हम् सम्मानम्, आचरतु तस्याः प्रतिष्ठाम्, अनुपालयतु मर्यादाम्, धुनोतु चिरसञ्चितं स्वश्रेष्ठतानुभावुकं मिथ्यामदम्, परिचिनोतु तस्या गुणान्, परिशीलयतु तस्या ऋणानि, नचिराद् भूयः सोऽधिगमिष्यति पृथ्वीस्थ एव स्वर्यं सुखम् । पाशबन्धं मारणीयतया घोषितस्य मनोरेव वचनं तेन विभावनीयं पालनीयं परीक्षणीयं च—

यत्र नार्यस्तु पूज्यन्ते रमन्ते तत्र देवताः ।
यत्रैतास्तु न पूज्यन्ते सर्वास्तत्राऽफलाः क्रियाः ॥ (मनु०)

# प्रायः सर्वो भवति करुणा वृत्तिरार्द्रान्तरात्मा

प्राणिनामखिलानामिह जगति सर्वेऽपि व्यापारा आश्रयन्ति विविधान् मनोभावान्। ते च चेतसो वृत्तिमनुहरन्ति। जडानामपि हि पदार्थानां वृत्तिः स्वसत्त्वानुरोधिनी। अन्तर्निहित जलमय सारा हि प्रयुक्ता सलिलकणान् श्च्योतयन्ति। ज्वलनाणुनिर्मितानि च द्रव्याणि दहनकणानेव मुञ्चन्ति। प्रमाणं चात्र प्रकृतिः। तत्र हि सिकतिलानि, पाषाणमयानि च वस्तूनि सततजल-सेक पिच्छिला अपि नान्तःक्लेदनमनुभवन्ति खण्डिता अपि नीरसतामेव प्रदर्शयन्ति। परं वनस्पतयः सलिल तत्त्व प्रधाना निष्पीडिताः खण्डिताश्चूर्णिता अनलसात्कृता वा रसकणान् प्रस्नुवन्ति। अम्मयो निशाकरोऽपि स्व रश्मिभिर्हिम कणानेव वर्षति। धातवोऽपि दहन-तत्त्व प्रधाना घृष्टास्ताडितास्तापिताश्च स्फुलिङ्गानुद्भावयन्ति तरलतां वा व्रजन्ति। सूर्यः परं वह्निमयो दाहकमेव तेजो वमति। एवमेव प्रवृत्तिर्मानवानाम्। ये केचन रूक्ष प्रकृतयः निस्नेहाः स्वयं तुष्टाः, आत्मरताः, आशु कोपनाः, अमर्षणाः, विनोदे क्रीडासु काव्येषु चागृहीत-रुचयः, प्रायः एव ते प्रेम करुणादि कोमल भावानुबन्धेन। न कदापि द्रवति तेषां हृदयं परेषां करुणं करुण क्रन्दितमाकर्ण्यं शोकोद्भावनं वा दृश्यं वीक्ष्यापि। कोमल वृत्तयोऽतितरां भावुकाः सहसैव प्रस्नुता भवन्ति कञ्चिद् दुर्गतं कष्टायमानं पीडितमातुरं वा विलोक्य। तरल प्रकृतिर्हि स्वल्पमपि समीपे भजन्नूष्माणं व्रजति द्रुतताम्। वाष्पसारो हि मेघोऽधिगतोष्मा स्पृष्टः सहसा शीतल समीरेण स्रवति सलिलम्। उष्णजलेन जाड्यातिशयेन च घनतां गता हिमानी लब्ध्वा स्तोकमपि तापं पुनः सलिलतां भजते। सरस-प्रकृतिर्हि शोक-तापमधिगत्य विद्रुत हृदयश्चक्षुर्द्वारेणाश्रुकणान् मुञ्चति।

प्रेमा, हर्षः, शोकः, शमः, लज्जा, दया च कोमला इमे भावा न रूक्षे मनसि—स्थितिमनुरुन्धते। अन्यस्य कष्टं समीक्ष्य यदि कश्चिद् व्यथामनुभवति सैव करुणा। न च रोषणो रूक्षो वा भावैराकुलितो जायते। भावुका एव सरस प्रकृतयः। यथावसरं येषां हृदयं भावान्दोलितं सम्पद्यते ते भावुकाः। न ते जातु न आर्द्रीभवन्ति मनः-

प्रमाणिभिर्दृष्टम् । तिर्यक्षु दृश्यत एतादृशी वृत्तिः । नादानुरोधी मृग परिचयवशाद् विजातीयानामपि मानवाना स्नेहेनाकुलो जायते । मद-विह्वलोऽपि वारणो वीणा-ध्वनि-परवशो जायते, सोऽपि नितरा प्रभु-भक्त । बहुधा स्वामिनि मृते स्वयमपि विजहतोऽसून् श्रूयन्ते गजा । एवंव वृत्तिर्नागाना ये क्रूरा अपि जाङ्गलिकैर्वीणा ध्वनि परिगृहीता निगृह्यन्ते । अश्वाना तु स्वामिप्रियता सगीत-रतिश्च विश्रुतचरैव । एवं भावुकताया प्रेमादिपरवशतायाश्च परस्परानुबन्धिता सुतरा सिध्यति । एवंव वृत्ते. सरसता मानवाना कलासु राग जनयति, प्रतिभा च नव परि-कर्मणोऽलभावुकीमुद्-भावयति । अनयैव भावुकतया वशीकृतो भगवान् वल्मीकजन्मा-निहत सहचरी विरह-विधुर-क्रौञ्च क्रन्दन-श्रवण-समुपजात कारुण्योऽनुकम्पोपनतप्रतिभ. सहसैव त व्याध शशाप—

मा निषाद । प्रतिष्ठा त्वमगम शाश्वती: समा ।
यत्क्रौञ्च-मिथुनादेकमवधी. काममोहितम् ॥ (रा.बा)

एतामेव गाथा कवे कारुण्यस्यापि हरा महाकविः कालिदासो रघुवश एव गीतवान्—

तामभ्यगच्छद् रुदितानुसारी मुनि कुशेध्माहरणाय यात ।
निषाद विद्धाण्डज दर्शनोत्थ श्लोकत्वमापद्यत यस्य शोक ॥
(र.व १४।७०)

प्रायो गुणिन उदाराभिजना विलासानुरागिणो भवन्तीति तेषु भावुकता सुतरा जायते । कारणान्तरे काम पारुष्य ते मनस्यादध्यु पर कृत्रिममेव तद् भवति । अतो विगलति प्रयत्नाहित काठिन्य तेषा हृदयात् समुपस्थिते कस्मिश्चिदपि कारणे । क्रूरकर्माप्यशोक. कालिङ्ग-समरे वृत्त घोर नरवंशस समीक्ष्य तथा विद्रुतहृदयोऽभवद् यथा जीवमात्रस्य हिंसन युद्ध च सर्वथा वर्जितवान् । पुरातनी मानसी सरसतैव तस्य पुन प्राबल्यमयाद् या त सर्वथा सग्राम-वर्जनाय प्रेरितवती ।

वस्तुतश्चेतनाया एव धर्म. सरसता । अत एव पशुपक्षिश्वापदाना सर्वथा यदा कदा कारुण्य-परवशत्वं श्रूयते । कालिदासस्य सरसतमाया शाकुन्तलाख्याया सृष्टौ पतिगृह-गमनोद्यताया शकुन्तलाया विरहेण तपोवनस्य न केवल तिर्यञ्च , लता अपि कातरता व्रजन्तीति चित्रम्—

उद्गीर्ण दर्भ-कवला मृगी, परित्यक्तनर्तना मयूरी ।
अपसृत-पाण्डु-पत्रा मुञ्चन्त्यश्रूणीव लता ॥ (शा-४।१२)

रघुवशेऽपि वाल्मीकि-तपोवने परित्यक्ताया सीताया करुण-क्रन्दनेन पार्श्व-वर्तिन्याः प्रकृतेरपि सशोकत्वं वर्णितम्—

नृत्य मयूरा:, कुसुमानि वृक्षा दर्भानुपात्तान् विजहुर्हरिण्य ।
तस्या: प्रपन्ने समदु:खभावमत्यन्तमासीद् रुदितं वनेऽपि ॥

(रघु १४।६९)

एवमेव सरसता हृदयान्तर्वर्तिनी मानवत्वेन सभावयन् दूतीकृत मेघं कवि: करुणामयं मनुते । कथ न स्यात्स करुणामय ? पुष्करावर्तकाना महता मेघाना विश्वविश्रुतेऽभिजने जात इत्युच्च-कुलज, त्रिलोकनाथस्य वृष्ट्यधिपतेर्महेन्द्रस्य वरिष्ठ कर्मचारीति गुरु-कर्तव्य-भार पुन सारवत्त्वेन सभावितः सुहृत्कार्यं करिष्यामीति प्रतिपद्यमान, आश्रयीभूतस्य सानुमत आम्रकूटस्य दावाकारमुपप्लव सतत-वृष्ट्या शमयन्, यत्र तत्र विश्रामनिशासु प्रियतमया विद्युद् विलासिन्या रममाणः कृषक-वधूना भ्रूविलासानभिज्ञदृष्टिप्रसादाना भाजनम्, नगर-वार योषाणा रति-नखाङ्केषु शिशिर-शीकर सेकं विदधत् तासा कर्ण-शिरीष चुम्बि-कटाक्षैः क्रीडन्, भक्ति नम्र धूलिन परिचरन् कुसुमावचयखिन्न-कुसुमलावीना छाया-प्रदानेन परिचय जनयन् अलका प्रयाति । एव सरसप्रकृतिः स कथ न यक्ष-दशा तत्पत्न्याश्च विरहदूनता निरीक्ष्य विद्रुतान्तर सम्पद्येत ? सरसता हि प्रकृति-सुकुमारा न जातु सन्निकर्षे ताप सहते । परमाणव एव ते तादृशा ये रसमया सन्त तापाधिक्येऽधिक रस स्यजन्ति । तत्किमिति न दूयता दयालुर्दयनीया दशा दीनाना दर्शं दर्शम् ? न हि करुणा वज्रसारे क्रूराणा मनसि सन्तिष्ठते । तत्र तु दव-दहन-प्लुष्टा लतेव सद्यैव लोप व्रजेत् । कमलिन्या इवागाधसलिल-पूर-पूरित सर प्रेमादि-सुकुमारवृत्तिसमाश्रयीभूतमन्त:करणमेव करुणाया आस्पदम् । न सा दयनीयमेव, दयालुमपि नितरामुपकरोति । तया सुतरा शोभते देही । जीवनस्य स्वारस्यमेव तया सम्पद्यते । अत एव भावुका श्रुत्वैव कस्यापि शोचनीया दशा विक्लवा भवन्ति । करुणरसप्रधानानि रूपकाणि विलोकयन्तापि दृश्यन्तेऽश्रुधारा मुञ्चन्त सहृदया । केवलं चित्रमिदमिति विभावयन्तोऽपि न शक्नुवन्ति विद्रवणात् चेतो निरोद्धुम्, न पारयन्ते कण्ठ-गद्गदत्व नियन्तुम्, न प्रभवन्ति वाञ्छन्तोऽप्यात्मान समतीकर्तुम् । सर्वमिद सरसवृत्ते फलम् । तत एव क्रोधपरवशोऽपि दीने, स्त्रीषु, आतुरे, बाले शस्त्र न प्रहरत् । अत: साधूक्तं महाकविना कालिदासेन—

'प्राय: सर्वो भवति करुणा-वृत्तिरार्द्रान्तरात्मा,' (उ मे )

# हेम्नः संलक्ष्यते ह्यग्नौ विशुद्धिः श्यामिकाऽपि वा ।

अस्मिन्ननन्तेऽपारे पारावारकल्पे संसारे साध्वसाधु वा गुणा दोषा वा सदसच्च, विद्याऽविद्या च, सुकृतं दुष्कृतं च, क्लेशकफलानि श्रेयोऽतिशयकराणि च कर्माणि ह्रासो विकासश्च, उत्थानं पतनं च स्वर्गो नरकं च धर्मोऽधर्मश्च, अमृतं गरलं च, प्रकाशस्तिमिरं च किं बहुना सर्वमपि शुभमशुभं च विद्यते। मसृण-सान्द्र परिमल-लालित पाटला—कुसुमं मर्मभिन्ति च कण्टकानि सहैवैकस्मिन्नेव वृन्ते दृश्यन्ते। गन्धसारतरोरेव तले गरलकरालितं फणी निरन्तरं निवसति। न च प्रत्येकं वस्तु निखिलस्यापि कृते। मतिमांस्तु सारग्राही ततो ग्राह्यं चिनोति हेयं चोपेक्षते।

परं नास्ति शक्तिरखिलस्य प्राणिजातस्यासतः सदुद्धर्तुम्। सन्नेव सद् ग्रहीतु-मसच्च हातुं क्षमः। येषां करतलामलकायितं विश्वम्, ये केचनागाधादपि सागरात्सूक्ष्ममपि मुक्ताफलं चेतुं प्रभवन्ति न ये कुवैकटिका इवासारैरपि वर्णमात्रमुदर्शं द्रव्यैः प्रतार्यन्ते, न येषामाडम्बर एव श्लथते दृष्टिं, समीक्षण-विचक्षणानां येषां पुरतो दोषा दोषा गुणाश्च गुणा भवन्ति त एव स्फटिकमिव (फिटकरी) जलात् पङ्कम् अवद्यादनवद्यं पृथक्कर्तुं समर्थाः। कथं खलु पाण्डु-कर्दमितं पाण्डुरं पाण्डु च विभेदयितुं कल्पेत? स तु प्रत्युत दुष्टमेव निर्दुष्टत्वेन स्वीकुर्यात्। यथा उच्यते—

गुणा गुणज्ञेषु गुणा भवन्ति
ते निर्गुणं प्राप्य भवन्ति दोषाः।
यथा किराती करि-कुम्भ-जातां
मुक्तां परित्यज्य बिभर्ति गुञ्जाम्॥

न च स्व कृतिमपि मनुजो याथार्थ्येन विभावयति। निजं काव्यम्, आत्मनः कर्म, स्वजनस्य रूपं वा न कोऽपि निन्दति। अरमणीयामपि रमणीं कामयमानो

जनो न रम्भाया अपि स्पृहयति । 'सर्वः कान्तं ह्यात्मीयं पश्यति ।' तत्र निर्णयाय परीक्षका एव प्रभवः । तं शिवं सुन्दरं सत्यं वा निर्णीतं चेत् तथैव ज्ञेयं तत् । अत एव परीक्षकाः सर्वत्र पूजिताः—

> परीक्षका यत्र न सन्ति देशे नार्घन्ति रत्नानि समुद्रजानि ।
> आभीर-देशे किल चन्द्रकान्तं त्रिभिर्वराटैः विपणन्ति गोपाः ॥

दृष्टे विवेकस्य चोपयोगो हेय-वर्जने ग्राह्य-ग्रहणे च । पश्नवपि सारावेन गृह एव को नाम मतिमानिति समर्थ्येत ? विवेकी—चेत् तादृशोऽपि तर्हि को विशेषोऽविवेकिनस्तस्मात् ? प्रकाश एव तिमिर-निराकरिष्णुः, दहन एव च मलुप दाह-प्रभुः । एवमेव सदसद्विवेकी समो दोषगुणनिर्णये ।

काक-कोकिलयोर्न कश्चिद् भेदः स्वरूपतः । परं यदा तयोर्वाचो भेद एव कटुर्मधुरो वा कर्णगोचरः, स्फुटं काकः काकत्वेन कोकिलश्च तत्त्वेन स्वयं निश्चीयते । अत एवोक्तम्—

> कोकिलोऽहं भवान् काकः समानः कालिमाऽवयोः ।
> अन्तरं कथयिष्यन्ति काकली-कोविदाः पुनः ॥

न कश्चिच्चेत् प्रभवति तयोर्भेदज्ञाने, न स तर्हि समर्थो रसालमपि निम्ब-फलात् मधुयष्टिं च (मुलहठी) गुडूच्याः (गिलोय) पृथगवगन्तुम् । किं स स्वदेत वैधेयः सरसं सङ्गीतम् ? तस्मै तु गर्दभी-रेङ्कारोऽपि तन्त्री-झङ्कार एव । किं पुरोभागी तादृशो निर्णेतुं प्रभवेत् गुणदोषयोरेकतरम् ? विपरीतमपि विपरिणमयितुं यतपरे सः । अतो न तादृशोऽर्थ्यते जातु दोष-गुण-विभागाय ।

परं सत्यवसरे गुणदोष-परीक्षायाः, न विदुषा करणीयमालस्यं, न दर्शनीयमौदासीन्यम्, नाश्रयणीयोपेक्षा । तथा कुर्वन् हि स गुणानां गुणवतो वा तिरस्कारं कृत्वाऽपयश एवाश्नुवीत अकर्तव्याकरण-कृतं च दोषं समाश्रयेत् । उभयथाऽपि हानिः । यदि गुणवान् विद्वान् वाऽगुर्णैरगुणैश्च स्व-तुल्यो मन्यते, तर्हि पार्थं तस्यान्तः-सपात् । दौर्भाग्यमेवैतरसम्पद्येत गुणानाम् । गुणाश्च दोषा मन्यन्ते चेत् स्वतो दोषाणां गुणत्वमापतति, लोकश्च तानेव गुणान् मन्यमानो मनसि निधातुं प्रयतमानो वञ्च्यते, सर्वमपि तन्त्रं चाकुलीभवति, विपरीतं च गतिः परिणमेत् । अतो न सन्नुदासीत गुण-दोष-निर्णये, नावसरं दद्यात् दोषाणां प्रभवितुम्, हंसो यथा नीरात् क्षीरमाददाति, तथैव विद्वानपि सहसा दोषेभ्यो गुणान् पृथक्कुरुते ।

> नीरक्षीरविवेके हंसालस्यं त्वमेव कुरुषे चेत् ।
> विश्वस्मिन्नधुनाऽन्यः कुल-व्रतं पालयिष्यति कः ॥ (भा. वि.)

नहि तस्मादन्य तादृश दुष्कर कर्म कर्तुं प्रभु, तस्य कर्म को ऽन्यो विदधीत ।

जगति सभवति कलुषस्यापाकृति क्षारद्वारा। यस्य मलीमस भस्मसात्कर्तुं वर्तते शक्ति, स एव तद् दूरीकरोति । किं न मिश्रयन्ति पश्यतोहरा स्वर्णे लोहम्, ताम्रम्, सीसम्, त्रपुश्च ? अन्यदपि यत्किञ्चिदन्तर्भातु तत्र सभवति, सर्वं तत्र निक्षिप्यते चोरित सुवर्ण-भार पूर्त्यै । न च तन्निर्मितानि भूषणानि निभाल्य कश्चिदपि प्रत्येति तत्र मिश्रित धातुम् । निकषेऽपि बहु बार घृष्ट सत् मिश्रणमेव प्रत्याययति न तु मिश्रित वस्तु । पर प्रज्वलिते वह्नौ निक्षिप्यते चेत् सर्वं कलुष पार्थक्य व्रजति काञ्चन च दग्ध श्यामिक द्विगुण भासते । एवमेव विदुषा पुरत कृतीना गुणा दोषाश्च, विशुद्धि छल च प्रस्फुटति । अतएव धीमन्त स्वयमेव न किमपि साध्व साधु वा निर्णयन्तो विदुषा समक्ष प्रस्तुवन्ति । तं साधु निर्णीत चेद् गुणवद् तद् कार्यं नान्यथा । एतदेव समीक्ष्योक्त शाकुन्तले कालिदासेन—

आपरितोषाद् विदुषां न साधु मन्ये प्रयोग विज्ञानम् ।
बलवदपि शिक्षितानामात्मन्यप्रत्यय चेत ।। (शा प्र )

बहवो मिथ्याभिमानिन स्वरचिते कथिते पठिते वा लेशमात्रमपि दूषणानां न स्वीकुर्वते सर्वोत्कृष्ट च तत्ख्यापयन्ति । लोके न तद् बहु मन्यते । यथा मुरारिरनर्घ राघवे—

देवीं वाचमुपासते हि बहव सार तु सारस्वत
जानीते नितरामसौ गुरुकुल क्लिष्टो मुरारि कवि ।
अब्धिर्लङ्घित एव वानर भटै किन्त्वस्य गम्भीरता-
मापाताल निमग्न-पीवर तनु र्जानाति मन्थाचल ।। (प्रन प्र )

न लोके भवति किमपि स्वतो गुणवद् विगुण वा। आत्मान श्लाघमानो न जातु जनोऽन्यैरपि प्रशस्यते । पर साधुभि प्रशस्यते चेत्स सत्य प्रशस्य श्रेष्ठश्च । विद्वास एव निकषोपला सारवत्ताया असारताया वा। एतदेव समर्थ्यते कविकुलगुरुणा रघुवंशे—

त सन्त श्रोतुमर्हन्ति सदसद्व्यक्तिहेतव ।
हेम्न सलक्ष्यते ह्यग्नौ विशुद्धि श्यामिकाऽपि वा ।। (र व १।१०)

---

# एकं सद्विप्रा बहुधा वदन्ति

जगतीह सकलानामपि विधेयाना भूताना भव्याना च नियन्ता कश्चिदगोचरो शक्ति-विशेष इति प्राय सर्वेषामास्तिकाना मतम्। सा च शक्तिरीश-देव-खुदा-गॉड ब्रह्मादि पदव्यपदेश्या यथामत स्वीक्रियते। केचिच्च सर्वशक्ति-मतस्ताद्दशस्य परमात्मन स्थानेऽनेकान् देवानर्धदेवान् वा कामदातृत्वेनोपासते। प्रायेषु च बहुदेववाद, एकेश्वर वाद, अनीश्वरवाद एवविधानि अन्यानि च मतानि विद्यन्ते। वैचित्र्यमिदमार्यसस्कृतेर्यस्यामेकस्माद् देवादारभ्य त्रयस्त्रिशत्कोटिं यावद् स्वीक्रियन्ते यथाविधि पूज्यन्ते च येन रहस्यमजानन्तो वैदेशिका आधुनिक हिन्दू-धर्मं बहूनामुपासनाना सम्प्रदायानामसगतिमग्रमाडम्बर कथयन्तो निन्दन्ति। वेदेष्वपि हि अग्निरिन्द्र, विष्णु, सविता, पूषा, भग, मित्र, वरुण, अर्यमा, सूर्य, उषा, द्यौ, पृथिवी, बृहस्पति, ब्रह्मणस्पति, एवविधा अन्येऽपि च देवा ऋक्षु स्तूयमाना उपलभ्यन्ते। उपनिषत्सु तु एकस्यैवात्मन प्रतिपाद्यत्वेऽपि विष्णु-शिव नृसिंहादि-देवेष्वन्यतमस्य सर्वनियन्तृत्व निरूपितम्। पुराणेषु तु देवाना सख्या त्रयस्त्रि-शत्कोटि-समिताऽन्यतश्चब्रह्मविष्णुमहेशाना यथावसरमुपास्यत्व साधितम्। एतमेव प्रपञ्च समीक्ष्य विचारकैरार्यधर्मे बहु-देववादस्य ( Polytheism ) एकेश्वरवादस्य ( Monotheism ) चास्तित्व वर्णितम्। शर्मण्यदेशोद्भवेन मोक्षमूलर महोदयेन ( Max Mullar) इच्छादेववादस्य च (Henotheism) सत्त्व निरूपितम्। देवाना पृथ्व्यादिरूप प्राकृतत्व प्रतिपाद्य तैर्जडत्वमेव तेषा साध्यते।

अत्रेद तत्त्वम्। यदा देवाना महती सख्या निरूप्यते तत्र ते प्रकृति शक्तीना-मेवाकार-विशेषा ( Different aspects of Natural Powers ) सिद्ध्यन्ति। यथा बृहदारण्यकोपनिषदि—'अष्टौ वसव, एकादश रुद्रा, द्वादशादित्यास्त एकत्रिंशदिन्द्रश्चैव प्रजापतिश्च त्रयस्त्रिशौ,' इति निरूपितम्। अष्टौ वसवश्च अग्नि, पृथिवी, वायु, अन्तरिक्षम्, आदित्य, द्यौ, चन्द्रमा, नक्षत्राणि। एतेषु

हीदं सर्वं वसु हितमेते हीदं सर्वं वासयन्ते । एवं रुद्राः खलु दश प्राणाः, आत्मैकादशः । संवत्सरस्य द्वादश मासा एव द्वादशादित्याः । मेघ एव इन्द्रो यज्ञश्च प्रजापतिः । एतेन यद्यपि प्रकृतिशक्त्यभिन्नत्वं सिद्ध्यत्येव परं नार्या जडोपासकाः । तेषां हि सिद्धान्तोऽयम्—

'अन्धं तमः प्रविशन्ति येऽसंभूतिमुपासते ।'

सर्वस्य जगत एवच्छक्ति चालितत्वाज्ज्ञेयत्वं भवति तेषाम् । परं यस्तु सर्वेषां साक्षी द्रष्टा श्रोताऽभिमन्ता च स एक एव ब्रह्मेति । अध्यात्मभावनया ( Metaphysical Conception ) तेषु सर्वेषु देवेषु तस्यैव ब्रह्मणः सत्त्वं स्वीक्रियते । नह्यग्नीन्द्रादीनां तत्त्वेनोपासनोच्यते अपि तु ब्रह्मण एव विभूति-स्वीकारेण । इन्द्रो ह्यात्मा 'तस्मादिदन्द्रो नामेदन्द्रो हवै नाम तमिदन्द्रं सन्तमिन्द्र इत्याचक्षते परोक्षेण, परोक्ष-प्रिया हि देवाः ।' इत्यैतरेयोपनिषदि दर्शितत्वादात्मैवेन्द्रः । प्रकाशकत्वाच्च स एवाग्निः । व्यापकत्वात्स एव विष्णुः, बृंहणाच्च ब्रह्मा, द्योतनाच्च स एव सूर्यादीनां पुरुषाकारत्वं ( Anthropomorphism ) दृश्यते ।

वस्तुत आर्याणां दर्शनमेकस्मिन्ननेकेषामनेकेषु चैकस्यैव तत्त्वस्य प्रतिपत्तिः । 'एकस्यैव पुरुषस्य माहाभाग्यादेक एवात्मा बहुधा स्तूयते । यदाऽसौ सर्वात्मा देवो ऽनेकासु शक्तिषु विविधाकारो दृश्यते, तदा पार्थक्येनानेकशः एव तस्य स्तुतिः । यदा तु तत्त्वतः सर्वेषां देवानां तदभिन्नत्वं प्रतिपाद्यते तदा तस्यैवैकाकिनः प्रशंसा । इति बुध्यस्व न ना मुह्यसि तत्र । इदमबुद्ध्यैव पाश्चात्यैरार्याणां बहुदेवोपासकत्वं काम-देवत्वं च प्रतिपादितम् । परं बहुदेवोपासनया सह ब्रह्ममयत्वस्यापि प्रतिपादनं विद्यत एव । अतएव—

अग्निं मित्रं वरुणमिन्द्रमाहुरथो दिव्यः स सुपर्णो गरुत्मान् ।
एकं सद् विप्रा बहुधा वदन्ति अग्निं यमं मातरिश्वानमाहुः ॥

एवं च यजुष्षु स्वयंभुवो ब्रह्मण एवानेक देवात्मत्वं निरूपितम्—

तदेवाग्निस्तदादित्यस्तद् वायुस्तदु चन्द्रमा ।
तदेव शुक्रं तद् ब्रह्म ता आपः स प्रजापतिः ॥ ( य. वे. ३२।१ )

न च तस्मादन्यत् किञ्चिदिहास्ति । सर्वमपि चेतनाचेतनात्मकं विश्वं स एव ।

एषो हि देवः प्रदिशोनु सर्वाः पूर्वो ह जातः स उ गर्भे अन्तः ।
स एव जातः स जनिष्यमाणः प्रत्यङ् जनास्तिष्ठति सर्वतोमुखः ॥ (यवे. ३२।४ )

स एकएव परमात्मा ज्ञेयः स्तुत्यश्च । न तस्मादन्यत् किंचनेह विद्यते ।

वेनस्तत्पश्यन्निहितं गुहा सद्यत्र विश्वं भवत्येकनीडम् ।
तस्मिन्निदं सं च वि चैति सर्वं स ओतः प्रोतश्च विभुः प्रजासु ।।
( य. वे. ३२।८ )

निखिलेयं सृष्टिर्मृत्युश्च तस्यैवाश्रय इति को नामापरो देवस्तमतिशयीत ।

यस्य ब्रह्म च क्षत्रं च उभे भवत ओदनः ।
मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः ।। ( क. उ. २।२५ )

एवं संहितासु सर्वत्रैकस्या एव देवतायाः स्तुत्यत्वं लभ्यते ।

उपनिषत्सु च स एवोपास्यत्वेन वर्णितः ।

एको वशी सर्वभूतान्तरात्मा एकं रूपं बहुधा यः करोति ।
तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषाम् ।। (कठ. ५, १२)

तस्यैवात्मनो विज्ञानमेवोपनिषदामुपासना ।

न संदृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम् ।
हृदा मनीषा मनसाऽभिक्लृप्तो य एतद्विदुरमृतास्ते भवन्ति ।। (कठ ५, १२)

तस्मिन्ज्ञाते सति तेन सहाभेदेनात्मनो भावनमेव चरमः पुरुषार्थ उपासना-फलम् । आत्मैव तत्र लीयते । न यथा लवणमुदके विलीनं पुनरुद्ध्रियते सायुज्यं तु गच्छति, तथैव परमात्मनि तस्मिन् लीनं आत्मा न पुनः पार्थक्यं याति ।

'स यथा सैन्धव-खिल्य उदके प्रास्त उदकमेवानु विलीयेत । नाहास्योद्-ग्रहणायेव स्याद्यतो यतस्त्वाददीत लवणमेवैवं वा अरे इदम्महद् भूतमनन्तमपारं विज्ञान-घन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति ।'

पुराणेषु यद्यपि देवतावादस्य विकासो ब्रह्म-विष्णु-महेशानां चोपाख्यि-प्रस्तावो लभ्यते यत्र तत्र तेषामेकतमस्य श्रेष्ठत्वं चोपलभ्यते तथापि सर्ग-स्थिति-संहार-रूप-व्यापार-कर्तृतया एकस्यैव परमात्मनो भेदत्रय स्वीकारेण अर्थापत्त्या एकस्यैव देवस्योपासना सा फलति । ब्रह्मणः प्रशंसया विष्णोः प्रत्याख्यानं शिवस्य प्रशस्त्या च ब्रह्म-विष्णवपकरणं साध्यते । एतेन मिथोऽभेदात् न कतमोऽपि तेषां गरिष्ठो लघिष्ठो वेत्यर्थापत्त्याऽऽपतति । अयमेवार्थं कविकुलमुकुटमणिना कालिदासेन प्रतिपादितः कुमारसम्भवे—

एकैव मूर्तिर्बिभिदे त्रिधा सा सामान्यमेषां प्रथमावरत्वम् ।
विष्णोर्हरस्तस्य हरिः कदाचिद् वेधास्तयोस्तावपि धातुराद्यौ ।। ( ७।४४ )

कथमनेन बहूनामुपासनं सिध्येत् ? न खलु नाना-रूप-नाम-धारण-मात्रेणैक एव वास्तविकं भूयस्त्वमधिगच्छति ।

नामान्यपि चैकस्यैव बहूनि । तथाहि—स एव एकः परमात्मा रमणाद् रामः, रमन्ते हि योगिनोऽस्मिन्निति, कर्षणात् कृष्णः, कर्षति हि परेषां हृदयमात्माभिमुखमयस्कान्तः ( Magnet ) इव लौहम् । शयनाच्छिवः, अन्तरात्मतया सर्वस्मिन्नपि चराचरे ह्यसौ शेते । बृंहणादेव स ब्रह्मेति विराड्ह्यसौ जगदात्मा । रोदनाद् रुद्रः, रोदयति हि कालात्मना प्राणिनः । ईशनादीश्वरः, कर्तुमकर्तुमन्यथा च स प्रभुः । इन्दनात् स इन्द्रः, ऐश्वर्यवान् इदं सर्वं द्रष्टा हि सः । अञ्जनात् प्रकाशनात् स एवाग्निः । प्रसौति प्रेरयति सर्वान् प्राणिन इति सविता । स्वरणाद् प्रकाशनात्-सूर्यः, वेवेष्टि व्याप्नोति सर्वं जगदिति स विष्णुः । पुष्णाति सर्वमपि चराचरमिति पूषा । बृंहणशीलानां वाचां स्वामी । यथोक्तम् बृहदारण्यके—'तस्यैव रे महतो भूतस्य निःश्वसितमेतद् यद् ऋग्वेदो यजुर्वेदः सामवेद.' इत्यादि ।

सर्वभूतानात्मनि वासयत इति स वासुदेवः । वसन्त्यस्मिन्सर्वाणि भूतानीति वासुः स चासौ देव इति वासुदेवः । एवं स एवैको देवो विविधैर्नामभिरुच्यते पूज्यते च ।

ये केचनान्यदेवानपि भजन्ति वस्तुतः प्रकारान्तरेण तस्यैव परमात्मनः सा भक्तिः । एतच्चान्यत्रोक्तं केनापि—

आकाशात्पतितं तोयं यथा गच्छति सागरम् ।
सर्वदेवनमस्कारः केशवं प्रति गच्छति ॥ ( वि. स. ना. )

एवं बहु-विध-विमर्शनेनैतावदेव सिद्ध्यति यदेकमेव सन्तं परमात्मानं विद्वांसो महिम-व्यापकैरनेकैर्नामभिः स्तुवन्ति । न तेन वस्तुतः स स्वरूपात् भिद्यते ।

अग्निर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव ।
एकस्तथा सर्वभूतान्तरात्मा रूपं रूपं प्रतिरूपो बहिश्च ॥

एतदेवाभिप्रेत्य साधूक्तम्—

इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान् ।
एकं सद्विप्रा बहुधा वदन्ति अग्निं यमं मातरिश्वानमाहुः ॥

# स्वधर्मे निधनं श्रेयः पर-धर्मो भयावहः

नाना-प्रकृति-विचित्र-चरित्र-शालिना प्राणिनामालयेऽस्मिन् जगति परिवर्तन-शीलतया सकलानामपि सूक्ष्माणां स्थूलानां वा पदार्थानां धारणा अपि जनानां नित्यं नैक-विधा। तदेव ह्यो प्रजत्युपेक्षणीयतां यदद्य प्राणेभ्योऽपि प्रियतरं लोकस्य। ह्यस्तनं हेयमपि समाश्रयत्युपादेयतामद्य। सैव स्थितिः साम्प्रतिके युगे धर्मस्यापि जाता। आसीत्कदाचन मानवस्य जीवने तस्याक्षुण्णं प्रभुत्वमसाधारणं वर्चस्वमसविभक्तं प्राधान्यम्। विश्व-साम्राज्यान्यपि सुरलोक-वैभवान्यपि सर्वोच्च-पदान्यपि सुरासुर-दुर्लभानि सुखान्यपि तदर्थमुपेक्ष्यन्त। जीवनस्य सर्व-प्रथमः पुरुषार्थः, त्रयाणामप्युत्तर-परमार्थानां मूलम्, राजनीतेः, दर्शनस्य, कलानाम्, साहित्यस्य, आचाराणाम्, विचाराणाम्, आहाराणाम्, विहाराणाम् लोक-सव्यवहाराणां च नियामको धर्म एवाभूत्, परमद्य स्त्रीणाम् निष्कर्मण्यानाम् च स विषयः। राजनीतौ, साहित्ये, शिल्पे, कलासु, वाणिज्ये, न्याय-कर्मणि शिक्षायाञ्च सर्वत्र तस्य बहिष्कारः। नेदृशी कस्याप्युपेक्षाऽद्य यादृशी धर्मस्य। सहस्रेष्वेको याथार्थ्येन धर्माचरणं करोति सोऽप्युपहस्यते भोग-परायणैर्जनैः। ततोऽपि विषमा स्थितिरस्य धर्म-ध्वजैः कृता येऽस्य नाम्ना सकलानपि भोगान् भुञ्जते। नास्ति कतमदपि कुत्सितं कर्माधिभूमि यन्न तैर्दम्भकैरनुष्ठीयते। लोकस्याक्ष्णोर्धूलिं प्रक्षिप्य धर्मात्मानमात्मानं प्रख्याप्य दम्भैः पाखण्डैश्च स्वाना-चारान् प्रच्छादयन्ति। तेषामाचरितानि दर्शं दर्शं च धर्मे श्रद्दधाना अपि जहति तत्र श्रद्धां निष्ठां च।

कैश्चित्तु धर्मो व्यवसाय-साधनीकृतः। सुखानां प्रलोभनेन, पदाकाङ्क्षया, रमण्यापत्त्या राज्य-लाभ-प्रत्याशया वा परम्परागतं धर्मं तेऽरुचिकरं वसनमिव परि-त्यज्यापरं स्वीकुर्वते। इतरे च दम्भिनः स्वमेव धर्मं सर्वोपरि मन्यमानाः परेषां च सगुणमपि धर्मं विविधदोषप्रख्यापनैः कुत्सयन्तः पद-धन-कान्ता-प्रदानादिभिः प्रलोभ्य स्वेषु धर्मेषु दीक्षयन्ति। परं धर्मोऽन्यथैव तैर्गृहीतोऽजुष्यमानैरस्य यथार्थतत्त्वम्।

अथ धर्मस्यान्य-भाषानु रिलीजन (Religion) मजहब-पन्थ-प्रभृतय. पर्याया प्रचलिता न ये वस्तुतस्तदर्थं बोधयन्ति। एते शब्दा समयापेक्षया परिवर्तमानान् सम्प्रदायान् सूचयन्ति ये आचार विचार-भेदेन देश-कालादि भेद व्यपेक्षया यत्रतत्र प्रचलिता। न ते शाश्वता सनातनाश्च, प्रत्युत राजनयिकान् धार्मिकाश्च स्वार्थान् लक्ष्यीकृत्य प्रवर्तिता। न खलु धर्म कृकलास इव क्षणे २ परिवर्तनीयमप्य स्वेच्छाचारमय.। न वा महत्त्वाभावाणा पूर्वं परीक्षाप्रमाणप्रमित प्रचार-साधन स। बुद्धौ, मनस्याचारे च निर्विरोध स आधीयते सनिष्ठं।

धर्मस्य लक्षणानि बहुधा प्रतिपादितान्याचार्यै। 'चोदनालक्षणो धर्म,' 'यतोऽभ्युदय नि श्रेयस सिद्धि स धर्म' 'धारणाद् धर्म इत्याहुधर्मो धारयते प्रजा,' 'स्वरूप रक्षणो धर्म' इत्यादीनि। प्रथमेन लक्षणेन प्रवृत्तियोग्य-धर्मणामनुष्ठानस्य, निवृत्ति योग्याना च कर्मणा परित्यागस्य येन प्रेरणा क्रियते स धर्म। 'सत्य वद, अहरह सन्ध्यामुपासीत, स्तेय मा कार्षी 'मृत्युरेष यो वै काम, स जहि' एतादृशै कृत्याकृत्यप्रवृत्ति-निवृत्ति प्रतिपादकैर्वाक्यैर्यस्य विधान विधीयते स धर्म, यस्य च निषेध सोऽधर्म इति प्रतिपादित भवति।

अन्येन च लक्षणेन लोकेऽस्मिन् कायिक वाचिक मानसिकात्मिकसत्कारेण सहाधिकीं समृद्धि सम्पादयता मृत्योरुत्तर चामुष्मिल्लोके कल्याण साधयता कर्मणामाचरण धर्म इति प्रतिपाद्यते। दुष्कर्मभिरधर्माचरणेन वा काममैश्वर्यस्य पराकाष्ठा क्षुम्येज्जन, सर्वातिशायी बलवान् मनीषी वा काम जायेत परम् आत्मा तस्य नित्य पतयालुता भजति। ऊर्ध्व-पथिकत्वमात्मनो धर्म प्रकृति, पर दुराचारेण धर्म प्रतिकूल-कर्मानुष्ठानेन स देहिनामात्मा मुच्यति। मूलत स दिनादृदिन हीयते। अपरस्मिश्च लक्षणे प्राणिना 'धारको धर्म' इत्युक्त। एतच्च स्वभावोपनतस्य धर्मणोऽनुष्ठानेन साध्यते। स एवाद्य शिष्टाया परिभाषाया।

वस्तुतो यस्य पदार्थस्य यत्स्वभावोपनत चेष्टित तदेव तस्य धर्म। तस्या धरणेन न प्राणी स्वरूपतोऽवहीयते। अग्नेर्यथा दाहकत्व धर्म, यावद् दहति, तावदेव सोऽस्ति, दहनसामर्थ्येऽपहतेऽस्यास्तित्वमपि न स्वीक्रियते। शीतस्पर्शवत्त्वमपा लक्षणम्। शैत्य हि तासा धर्म। वह्नि सन्निकर्षात् दिनकरतापसम्पर्काद् वा शैत्य विहायोष्मा ताभिरङ्गीक्रियते चेदस्वाभाविक तदाचरितम। पुनस्तापकारणेऽपाकृते जाड्य नैसर्गिक ता भजन्ति। सर्पाणा क्रौर्यम्, सूर्यस्य प्रकाशन तापदान च तेजोमयत्व वा धर्म। निस्तेजस्कस्य तु भाक्तमेव सूर्यत्वम। एव मानवस्य दीनेषु दयनम्, दु खिना रक्षणम्, अशरणानाम, अनाथानाम असहायानाम् च वाञ्छितपूरणम्, भीताना भयवारणम्, सर्व भूत मैत्री स ऋजुत्वम् प्रबुद्धत्वम्, अपारुष्यम्, शुचित्व चान्यानि च

कर्माणि यैस्तस्य मानवत्वं न विडम्बनामावहति। तान्येव कर्माणि तस्य धर्माः। विरहितस्तैरन्य सामान्यं भजन् न मनुजतापदार्हः सः।

यतः स्वरूप-रक्षको धर्मः, ततः सहज एव स आचरणीयो न तु कृत्रिमोऽन्य-स्माद् वा गृहीतः। यतः—

स्वे स्वे कर्मण्यभिरतः संसिद्धि लभते नरः। (गी.१८।४५)

प्रकृति-समंजसः स्वाभाविक-कर्म-सम्पदा सम्पन्न एव धर्मः प्राणिनां कल्याण-कृत्। अन्येन तु नेह न चामुत्र कश्चिल्लाभ.।

यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम्।
स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानव.॥ (गी.१८।४६)

यदैकमिन्द्रियं नेतरस्य कर्मानुतिष्ठति तदा कथं मानवः स्व-धर्मं विहायान्यं पालयेत्।

अद्य जनानां कृते स्वधर्मं परित्यज्यान्यधर्मस्य ग्रहणं सामान्यं कर्म जातम्। परं धर्मः खलु प्रकृतिमनुसरति। एको निरामिष-भोजी वैष्णवो यावनं ख्रीष्टं वा सम्प्रदायं स्वीकरोति चेत्, कथं तस्य परम्परागतानां संस्काराणां परित्यागः संभवेत् कथं वा स सर्वभक्षिभिः सहैकात्म्यं स्थापयेत्। दृश्यतेऽद्यापि यथा बहवो हिन्दवो मृत्यु-भयादर्थ-लोभाद् वा यवनाः ख्रीष्टमतवादिनो वा संवृत्ताः परं न सर्वथा तेषां प्राक्तनाः संस्कारा अद्यापि लोपं गच्छन्ति। अन्ये च यवनाः स्वीकृत-हिन्दू-धर्मा अपि हृदयाद् यथापूर्वमेवानार्य-भाव-वन्तः। स्व-संस्कारानुकूल एव धर्मे मानवः सिद्धिं विन्दति। अत एवोक्तम्—

सहजं कर्म कौन्तेय सदोषमपि न त्यजेत्।
सर्वारम्भा हि दोषेण धूमेनाग्निरिवावृताः॥ (गी.१८।४८)

यदि निर्दोष एव धर्मोऽन्विष्येत, निष्फल एव सकलोऽप्यारम्भः सिध्येत्। यतः क्वचिज्जातिभेदोऽपरत्र संकीर्णताऽन्यत्र मिथ्याविश्वासा इति क्व निर्दोषत्वम्?

वस्तुतस्तु न धर्मा अनेकाः। एक एव धर्मोऽङ्गभेदेन बहुत्वं गतः। यतो वैदिकस्यैव धर्मस्याहिंसा-तत्त्वं मुख्यत आदाय बौद्धो जैन-धर्मश्च प्रवृत्तः। सर्वेषां देवानामेकदेवत्वं निराकारत्वं च परमेश्वरस्यादाय शिष्यधर्मस्य (सिख) प्रवृत्तिः। सत्यम्, शुचित्वं चोपादायैकस्य परमात्मन. मत्वमुररीकृत्येस्लाम-धर्मस्य प्रचलनम्, सर्व-भूत-मैत्रीम्, दीनेषु करुणाम्, ईश्वरस्य सर्वोपरित्वं आनावारामुपासनामार्तसेवां चादाय ख्रीष्ट-धर्मस्य जन्म। एवं नाम्ना भेदेऽपि मूलतः किं नैषामेकत्वम्? दोषाणां मार्गणे च न कस्मिंस्तावद् दोषाः? निर्महिंसावादिभिरपि बौद्धैर्न कारितानि

विश्वस्मिन्नकाण्डे मृत्युताण्डवानि ? किं न तत्रापि वामाचारा मिथ्याविश्वासा वा ? त्याग-वृत्तिमयेऽनीश्वरवादिन्यपि जिन धर्मे न किं बहुदेवदेवीनामन्धश्रद्धायाश्च विद्यमानता ? जाति-साम्यवति सिखधर्मेऽपि न किं कर्गल निर्मित एव लिपिप्राये पुस्तके गुरोरीश्वरस्य च भावना ? किं न तत्रापि विचाराणां सकीर्णता ? सुधार-(सुधार) परिणतया प्रसिद्धे इस्लाम धर्मेऽपि किं न विद्यते पीर-पैगम्बरादि पूजा ? किं न ते समाधि स्थलेषु (कब्र) प्रार्थना विदधति ? किं न तत्र शिया सुन्नी कादिया-अहमदिया प्रभृतयो भेदा ? किं न तेषु सकीर्णताया अन्यधर्मान् प्रति घृणाया वा पराकाष्ठा ? तद्धर्मानुयायिना चगेज-तैमूर नादिरशाहप्रभृतीना सधर्मसु विधर्मसु च कृता भीषणा अत्याचारा अद्यापि विश्वेतिहासस्य पृष्ठानि रक्त-रक्तानि दर्शयन्ति । भूतमैत्री करुणा बुद्धिवाद च गृहीत्वा प्रचलिते खीष्ट धर्मे न किं दोषा ? न किं तस्य धर्मगुरुभि (पोप) स्वानुयायिना कृते स्वर्गस्यैकाधिकार सुरक्षितीकृत ? न किं तैरात्मने धनदातृणा कृते देवलोकस्य प्रवेशपत्राणि दत्तानि । न किं तै सधर्मसु रोमहर्षणा क्रूराचारा अनुष्ठिता । सम्यमन्यैरेतैर्दर्शित पाशव तु सर्वाण्यपि प्रायश-मानि वृत्तानि प्रत्यायययुपेक्ष्याणि । अद्यापि ते न केवले स्वर्गे, विश्वस्मिन्नपि ब्रह्माण्डेऽपि खीष्ट-धर्मेऽश्रद्दधानान् निवासानर्हानिव स्वीकुर्वते । तेऽपि कामामेकेश्वरवादिन पर देवान्तरेष्वपि विश्वासभाज । कुत्र धन-कृतस्तेषामपि समाजे परस्परमुच्च-नीचाकारो भेद. ।

एवविधे व्यतिकरेऽविद्यमाने वास्तविके भेदेऽपि सामान्येन च दोषाणामस्तित्वे सर्वेषु धर्मेषु, कस्तावल्लाभ एकतमस्य त्यागेऽन्यतमस्य च ग्रहणे ? स्वस्यैव धर्मस्य पालन तदा श्रेयस्कर सिध्यति ।

आर्याणामैतिह्य धर्मस्य कृते सर्वस्वमप्युपहरता दुर्लभानपि प्राणान् त्यजता महाप्राणाना महामानवाना चरितै सनाथितम् । सकलेष्वपि राजमण्डलेषु मुगल-सम्राजोऽश्वरस्य गतेषु सामन्तभावम्, राजपुत्रेष्वपि स्वभगिनीं सुता वा प्रदाय राज्य पराधिकार वा क्रीणत्सु, स्वभ्रातु सगर सिंहस्य सुते च यवनधर्मं स्वीकृत्य मोहब्बतखाँ सञ्जातमिन मृत्यरणीपि स्व धर्म-पुरस्सरो मेद पाट वसुन्धरा परिवृढो प्रत्यर्थि-हृदय-कुटिलया खड्ग-धारया कवच-कलुष यवनोर पटेषु विस्तृता सधारामपीलेपेन स्व-प्रतापमुद्रा लिखन्नेकलोऽपि प्रतापो न विधर्मभि सह सन्धिमियेष । नव-वर्ष देशीयोऽपि बालो हकीकतो बहुधा बाध्यमानोऽपि मूटमल्लै (मठमुल्ले) यंवनधर्ममल्लै प्रेर्यमाणोऽपि पितृभ्यां मृत्युमेवाचकाक्ष न तु धर्म-धुलका नवाम (नवाब) कन्याम् । विपक्ष-पक्ष-क्षपण-पटु पराक्रमस्य, मदमत्तावरङ्गजीब-गजपति कलहिनो—पोषर सिंहस्य शिष्याणां दशम-गुरो शौर्य-शौण्डस्य गोविन्दसिंहस्य प्रवया अपि पिता तेगबहादुर

बालावपि बालारुण-कराल तेजसौ कुसुम-मृदुल-कलेवरौ सुतौ च प्राणव्ययेनापि स्वधर्मं ररक्षुः। आर्य-धर्म-धौरेयस्य, महाराष्ट्र-मेदिनी-दास्य-कलुष-भार-लुण्टाकस्य शिववीरस्य (शिवाजी) तनयः स्त्रैणोऽपि वारविलासिनी-भ्रू-भंग-कम्प्र-हृदयोऽपि प्रणयिनी-मान-दुर्ग-भञ्जन-मात्र-पौरुषोऽपि शम्भुवीरो (सम्भाजी) विजयदर्पात् पित्रा दत्तपूर्वाणामिव पराजयाना निष्क्रयमिव राज्योपहारमवरंगजीवेन क्रियमाण धर्ममूल्यं सावज्ञं धिक्कुर्वन् प्रतिफले घातकैः कृतं शिरश्छेदमेव बहु मेने। धर्मव्ययेन जातोऽपि स्वर्गलाभो न सुखाय। न जानन्ति ते वराका नियतापायिना प्राणाना वैभवाना च कृते परधर्मदीक्षा स्वीकुर्वाणा धर्मस्य गरिमाणम्।

'धर्म एव हतो हन्ति धर्मो रक्षति रक्षितः।'

'यतो धर्मस्ततो जयः' 'धर्मो विश्वस्य जगतः प्रतिष्ठा' इत्यादीनि वचनानि च तत्र प्रभवन्ति। स्व-सहज-धर्म-परित्यागेऽपरस्य च धर्मे गृहीते सर्वत्र व्यवस्थाया व्याकुलीभाव-प्रसङ्गः। अतएव विविच्योक्तं भगवता श्रीकृष्णेन—

श्रेयान् स्व-धर्मो विगुणः पर-धर्मात्स्वनुष्ठितात्।
स्वधर्मे निधनं श्रेयः पर-धर्मो भयावहः॥ (गी.३।३५)



# रूपरेखा:

## गतानुगतिको लोको न लोकः पारमार्थिकः

मानवो बुद्ध्या, शरीर-बलेन, साधनैर्विद्यया च युक्तः श्रेष्ठः प्राणी । बुद्धेरुपयोगो विवेके भवति । नात्र कोऽपि पूर्णः । सदसद्विवेकेन वस्तुनो ग्रहणं प्रज्ञायाः फलम् । लोकानामनुकरणे प्रवृत्तिः । मूढः परप्रत्ययनेय-बुद्धिः । तातस्य कूपोऽयमिति ब्रुवाणाः क्षारं जलं कापुरुषाः पिबन्ति । तथ्यानुसन्धाने, सत्यान्वेषणे च विधाया विवेकस्य सदुपयोगः, रूढिग्रस्ता नरा न याथार्थ्य-स्पृशः । मूर्खाणामन्धपरम्परानुयायिनां प्रथा-पालन आग्रहः । प्रथाना पालनं च नापि तत्त्वेन कार्यं नापि त्याज्यम् । निदानमनुसन्धेयं कथमस्या आरम्भ इति । आप्त-वाक्यस्यापि रहस्यं जिज्ञासितव्यम् । गड्डरिका-प्रवाहेणैव तदनुसरता न भवति तलस्पर्शी बोधः । अतो बहुधा प्रतारणमपि तेषां भवति । न निष्प्रयोजना लोक-संव्यवहाराः । कस्यापि कार्यस्य करणात्पूर्वं प्रयोजनमन्वेष्यम् । तेन रहस्यमुद्भिद्यते । कूट-नीतिज्ञा दार्शनिका वैज्ञानिकाश्च न विना विश्लेषणं किमपि स्वीकुर्वन्ति । अतीन्द्रिये विषये सत्यप्यनुकरणे आवश्यके तत्त्वज्ञानायावश्यं प्रयतितव्यम् । अन्यथा 'अन्धेनैव नीयमाना यथान्धाः ।' क्वचिच्छ्रद्धा तर्कविरहिता ग्राह्या मन्यते परं जिज्ञासा तत्रापि न हेया । यद्यपि संशयालुता न सर्वत्रोचिता परं सर्वथा तदभावोऽपि हानिकर एव ।

---

**२—नीर-क्षीर-विवेके हंसालस्यं त्वमेव तनुषे चेत् ।**
**विश्वस्मिन्नधुनान्यः कुलव्रतं पालयिष्यति कः ॥**

जगदिद दोषैर्गुणैरमृतेन विषेण पथ्येनापथ्येन च पूर्णम् । शीतमुष्ण, सुख दुःख, पाप पुण्य चेति यथा द्वन्द्वास्तथैवान्येऽपि क्वचिद् दोषा गुणाश्च परस्पर मिश्रिता न लक्ष्यन्ते । तदा विवेकिना सदसद्विश्लेषण शक्तिमता कार्यमिद यत्तत्र विचार्य सतोऽसतश्च विवेक कुर्यु । विद्वास एव तत्र समर्था । त एव निकषोपला शुभस्य अशुभस्य च । हेम्न सलक्ष्यते ह्यग्नौ विशुद्धि श्यामिकाऽपिवा । मूर्खेषु गुणा अपि दोषा जायन्ते । परीक्षका यत्र न सन्ति देशे नार्घन्ति रत्नानि समुद्रजानि । आभीर देशे किल चन्द्रकान्त त्रिभिर्वराटैर्विपणन्ति गोपा ॥

अज्ञेषु यदि तिष्ठन् विद्वान्न सत्यासत्यस्य कृत्याकृत्यस्य सतोऽसतो वा विभाग कुर्यात् कस्त जानीयादय बुध इति । विदुष एवेद कार्यम्, 'पाप-पुण्य गुण दोष मय विश्व कीन्ह करतार । सन्त हस गुण गहहि पय परि हरि वारिविकार (तुलसी) ॥ काक कृष्ण पिक कृष्ण. को भेद पिक काकयो । प्राप्ते वसन्तसमये काक काक पिक पिक ॥ रे रे कोकिल मा भज मौन किञ्चिदुदञ्चय पञ्चम रागम् । नो चेत्त्वामिह को जानीते काक कदम्बक-पिहिते चूते ॥ (भा वि)

## ३—सहसा विदधीत न क्रियामविवेकः परमापदां पदम्।
## वृणते हि विमृश्य-कारिणं गुण-लुब्धाः स्वयमेव सम्पदः ॥

मानवो बहुधा भावावेशेन किमपि कार्यं करोति, पश्चात्तपति च फलेन तस्य। क्षिप्रकारिता बहुधा हानि-करी सम्पद्यते। करणात्पूर्वं फलस्य विमर्शो विधेयः। अविचार्य किमपि विदधतो लोका न जातु मोदन्ते। सहसा कथनेऽपि मुखादवाच्य वचनं निस्सरति यस्य परिणतिः कलहे युद्धे विनाशे च जायते। अतो विज्ञा शान्त हृदयेन विविच्यैव करिष्यमाणं कर्म तत्फलं च पूर्वं निश्चिन्वन्ति पश्चाच्चानुतिष्ठन्ति। तस्य फलमपि सुप्तबीजस्येव भवति।

"उचितमनुचितं वा कुर्वता कार्य-जातं परिणतिरवधार्या यत्नतः पण्डितेन।
अति-रभस-कृतानां कर्मणामाविपत्तेर्भवति हृदय-दाही शल्य-तुल्यो विपाकः ॥"

आवेश-वशान्मानवः पूर्वं किमप्याचरत्यनुचितं कर्म। विवेके तु जागृते तप्यते। हानिकरं फलं स प्रत्यक्षं पश्यति। न तु लज्जया कस्मैचिद् वक्तुमुत्सहते। योजनाबद्धस्य कार्यस्य विपरीते परिणामेऽपि भवति प्रतीकारः। परं नाविचारितस्य। चतुरंगक्रीडायामिव (शतरंज) चिरकारी न केनापि जीयते। रभस-कारिणो नृपाः शत्रुभिरभिभूयन्ते। विमृश्यानुष्ठातॄणां तु कार्यं सत्फले नैवानुमीयते। अतो न सहसा किमपि कार्यम्।

## ४—भिन्न-रुचिर्हि लोकः

संसारे-विविध-वस्तु सारे प्राणिनामपि प्रवृत्तयो नैक-विधा । एकमेव द्रव्य न सर्वेषा कृते शोभनम् । यद् दृष्ट्वैको जनोऽनुरज्यते तदेवाभिवीक्ष्यापरो विरज्यते। कश्चिन्मधुरान्ने कृताभिनिवेश., इतरस्य रसना अम्ले रसे विशेषेण स्वदते। कोऽप्याडम्बर-प्रियस्तद्वन्योऽकृत्रिमवेषमेव बहु मनुते। चित्त-वृत्तेर्वैविध्यमिदमेव मानवाना चारित्र-भेद तनुते। काका निम्ब-फलानि सविशेषमदन्ति, कोकिलास्तु रसालमञ्जरीरास्वादयन्ति पर क्रमेलकः पारियात्र-फलानि कण्टकाश्च जिघत्सति। तदुक्तम्—

'क्रमेलकं निन्दति कोमलेच्छुः क्रमेलक. कण्टकसम्पटस्तम्।'

अत एवैको गुणवान् न खलाना रुच्यनुकूल.। दुष्प्रवृत्तयो जना सद्वृत्तीना नादर विदधति। पङ्कज रविं दृष्ट्वा विकसति शशिनि समुदिते तु मुद्रा भजति। चकोरस्य चन्द्रमसा, मयूरस्य जलदेनैव सह स्नेहः। नहि कोऽपि रूपगुणवयोऽभिजनवानपि विकरिष्यतु शक्तः सर्वासा कामिनीना प्रियोऽहम् इति। अभिनवरसानुभूतिसरसं नाटक पश्यन्तोऽपि श्रोत्रिया न तत्र रसमनुभवन्ति। रुचेरेव भेदादेकस्या एव शक्तेर्ब्रह्मणो रूपे देव-विशेषे लोकाना भक्ति। रुचीना वैचित्र्याहजुकुटिल नाना-पथ-जुषा नृणामेको गम्यस्त्वमसि पयसामर्णव इव। 'मुण्डे मुण्डे मतिर्भिन्ना,' 'न काम-वृत्तिर्वचनीयमीक्षते।'

---

## ५—वरमद्य कपोतः श्वोमयूरात्

लोकानां प्रवृत्तिरुज्ज्वल-भविष्यदाशया वस्तुषु जायते। नीतिरपि समृद्धायति कर्म समर्थयते। परं भाविनः सुखस्याशया वर्तमानस्य त्यागो नोचितः। श्वो ऽहं भूयसीं सम्पदं लब्धास्मीति कृत्वाऽद्यतनं सुखं कोऽप्युपेक्षते चेन्न स मतिमान् मन्येत। अनिश्चिता हि नियतिः प्राणिनाम्। 'करतलगतमपि नश्यति यस्य पुनर्भवितव्यता नास्ति।' को जानाति किमनुभविष्यत्यागामिनि कालेऽद्यतनो धनिकः। द्यूतकारा यथा विजयाशयाऽर्जितमपि विभवनाशयन्ति, तथैव भविष्यदाशया लब्धमपि सुखं त्यजन्ति मूर्खाः। विदुषां च वचनानि—उपस्थितं परित्यज्यानुपस्थितस्य कल्पने मानाभावः। 'उपस्थितस्य वर्तितव्यानीया।' 'ध्रुवाणि तु परित्यज्य यो ऽध्रुवाणि निषेवते। ध्रुवाणि तस्य नश्यन्ति अध्रुवं नष्टमेव तत्।' अत एव 'वर्तमानेन कालेन वर्तयन्ति विचक्षणाः।' भूरि-लाभस्य संभावनायां वर्तमान उपलब्धो ऽल्पोऽपि नोपेक्षणीयः। आगामिनो नास्ति निश्चयः। लोक-भाषायामपि वदन्ति—'नौ नकद न तेरह उधार।'

---

## ६—स्त्रीणां प्रियालोक-फलो हि वेषः ।

नारीणां सौन्दर्यस्य प्रयोजनं विशेषतः प्रियाणां लोभनमेव । कामो हि मनोभवः संकल्पमात्र-जन्यः । तस्य प्रथमाऽवस्था चक्षूरागः । चक्षुरिन्द्रियस्य विषयश्च रूपम् । यत्र लावण्यं सविशेषं नयनानामुत्सवः तत्रैव नयन-प्रवृत्तिरिति लोके दृश्यते । प्रसाधनैः सज्जा-विशेषेण भूषणादिभिश्च रूपस्योत्कर्षः साध्यते । अत एव साधारण-सौन्दर्य-सम्पदपि कामिनी चारुवयोवेशशालिनी वारमेकं यूना दृष्टिमामन्त्रयत्येव । शोभयितुमात्मानमेव दर्शनीयं वासो धार्यते । निर्विशेषा हि परेषामवलोकने कामं जीर्णकन्थाः परिदध्युर्नग्ना वा नृत्येयुस्तुल्यैव स्थितिस्तेषां कृते । परं यदा मनसि जायतेऽभिलाषः, 'अपि नाम स मयि दृष्टिपातं कुर्यात्, अप्यहं तस्मै रोचेय' इति, तदाऽधिकाधिका कामिन्याः शृंगारे प्रवृत्तिं जायते । उद्देश्यं च तस्य स्वाभिमतस्य प्रियस्य विलोभनम् तस्य प्रणयस्य च प्राप्तिः । अत एव न विधवानां तपस्विनीनां विरहिणीनां वा प्रसाधनमुचितमुक्तम्, वासक-सज्जानां पतिंवराणां कुमारीणां वेश्यानां च न प्रतिकूलम् । यदि कृतेऽपि शृङ्गारातिशये न प्रेयसो मोहनाय क्षमेत, वैफल्यमेव तस्य । अत एवोक्तम् 'प्रियेषु सौभाग्य-फला हि चारुता ।' 'किं वा हि तद् रूपं न येन चक्षुर्वशीक्रियते । 'योषा जारस्य चक्षसा विभाति ।'

---

## ७—किमिव हि मधुराणां मण्डनं नाकृतीनाम्

लोके भूषणानि स्वरूपमुज्ज्वलयितुमेव मार्यन्ते यथा साधारण्यप्याकृतिस्तैः सविशेष रोचना सम्पद्यते। अत एव लोकस्य मोहकाना वस्त्राणां कुसुमादिस्रजां भूषणानां च धारणे प्रवृत्तिः। परं बहुधा परिधातुर्वर्ण-रूप-वयो-वेषादीनित्यादि-सापेक्षता परिधाने परीक्ष्यते। अस्मिन्नवसरे कीदृशस्य वसनस्य मण्डनस्य चोपयोगिता स्यादिति विचारयन्ति लोकाः। क्वचिच्च सुन्दरमपि वासो न सज्जते, यथा श्यामा-शरीरे रक्तं वर्णोज्ज्वलं वा। परं गौराङ्ग्याः कपोलयोस्तिलकालकोऽपि रामणीयकमातनोति। शोभनाऽऽकृतिर्हि स्वयं मण्डनम्। अतिरिक्तं प्रसाधनं न साऽपेक्षते। धारितमपि तत् स्वयं कृतार्थता व्रजति। सर्वास्ववस्थासु हि तस्या रमणीयता। अतः किमपि परेषां दूषकमपि धारितं सुन्दरस्य चारुतामेवादधाति। यथोदितं कालिदासेन—

सरसिजमनुविद्धं शैवलेनापि रम्यं
  मलिनमपि हिमांशोर्लक्ष्म लक्ष्मीं तनोति।
इयमधिक-मनोज्ञा वल्कलेनापि तन्वी
  किमिव हि मधुराणां मण्डनं नाकृतीनाम्॥

उर्दूकविनाप्युक्तं केनापि—

'नहीं मोहताज ज़ेवर का जिसे ख़ूबी ख़ुदा ने दी।'

## ८—अनुत्सेकः खलु विक्रमालंकारः

प्रकृतिरियं प्रायः प्राणिनां यत्किमपि कृत्वोर्जितं कार्यं विकत्थन्तेतमाम्, गर्वातिशयस्तेषां जायते स्वस्मिन् पौरुषातिरेकं सम्भाव्य। परं विक्रमस्य सर्वथोत्कर्षो यदा वीरोऽपि जनो विनयालंकृतः स्यात्। उक्तं च 'क्षमा शक्तौ हि भूषणम्।' विक्रान्तोऽपि, गुणवानपि, विद्वानपि, धनवानपि, शीलवानपि श्लाघते चेदात्मानं, तस्य लाघवमेव तन्मन्यते। 'सम्पूर्णकुम्भो न करोति शब्दमर्धो घटो घोषमुपैति नित्यम्।' बल-दुर्मदा हि खलाः स्व-शक्ति-प्रदर्शनेन दुर्बलेभ्यातङ्कं विधित्सन्ति।

यथा—

विद्या विवादाय धनं मदाय शक्तिः परेषां परिपीडनाय।
खलस्य, साधोर्विपरीतमेतत् ज्ञानाय दानाय च रक्षणाय॥

अत एव न सज्जनाः पराक्रमे सत्यपि मुखेन वदन्ति, नात्मानं श्लाघन्ते, सत्यवसरे तु सिंहा इव तत्काल रिपूनभिभवन्ति। न ते परस्मादपि स्व-स्तुतिं शुश्रूषन्ति।

शरदि न वर्षति गर्जति, वर्षति वर्षासु निःस्वनो मेघः।
नीचो वदति न कुरुते, सुजनो न वदति करोत्येव॥ तथा

'यद्यपि दुर्निवारं स्तुतिं कन्या वहति कौमारम्। सद्भ्यो न रोचते सा सन्तस्तस्यै न रोचन्ते॥' अतएव विकत्थमानं रावणं प्रति लक्ष्मणस्योक्तिः—

'राजन् न गर्जन्ति महाप्रभावाः, किं कत्थसे प्राकृतवत् त्वमद्य॥'

सर्वथा शोभते वीराणां विनयोत्तरं शौर्यं प्रकर्षं।

---

## ६ — ज्वलितं न हिरण्यरेतसं चयमास्कन्दति भस्मनां जनः

यथा लोकाः शान्तं शीतलं भस्म-पुञ्जं निर्भयं लङ्घयन्ति परं ज्वलन्तं कृशानुं लंघयितुं नोत्सहन्ते, एवमेव तेजस्विनं शक्तिशालिनं वा जनं न कोऽप्यवमन्तुं समर्थः, निर्बलं क्षमा-शीलं नम्र-स्वभावं तु सर्वेऽपि तिरस्कर्तुं साहसं विदधति । कामं नरः सुशीलो दयालुः समवेदनाशीलो भवेन्न परं स्व-तेजः सर्वथा त्यजेत् । यथा पालितं शान्तं लालयन्तं च गृह-कुक्कुरं शिशवोऽपि पुच्छादि कर्षणेन पीडयन्ति, परमाखेट-कुक्कुरं तीक्ष्ण-प्रकृतिं योध्य वयस्का अपि शङ्कन्ते, का कथा पीडनस्य । सर्वथाऽतेजस्कस्य नात्र भुवि निर्वाहः । 'विषं भवतु मा वास्तु फटाटोपो भयंकरः ।' 'अवन्ध्य-कोपस्य विहन्तुरापदां भवन्ति वश्याः स्वयमेव देहिनः । अमर्ष-शून्येन जनस्य जन्तुना न जात-हार्देन, न विद्विषादरः ॥' पाण्डवाः शमशीलतयैव कष्टं सेहिरे ; ऋषयः शान्तास्तपः कृशा इति रक्षसां पीडनीया अभवन् । 'सिंहं नैव गजं नैववृकं नैव च नैव च । अजा-पुत्रं बलिदद्यात् देवो दुर्बल-घातकः ॥' मार्जारः श्वानं दृष्ट्वा भीतः पलायते, परं निकटे सन् रोषाकुले चक्षुषी दर्शयति चेत् सारमेयोऽपि त्रस्यति । विनयेनान्यायं सहमानं जनं सर्वोऽपि पीडयति । जगति प्रेमादरौ वा भयेनैव जायते । 'बसै बुराई जासु तन, ताही को सनमान । भले भले कहि छोडिये, खोटे ग्रह जप दान ॥'

( बिहारी )

विपदोऽभिभवन्त्यविक्रमं रहयत्यापदुपेतमायतिः ।
नियता लघुता निरायतेरगरीयान्न पदं नृप-श्रियः ॥

अतः सर्वैरपि स्वं तेजः प्रतिपत्तव्यम् ।

## १०—गुण-गृह्या वचने विपश्चितः

लोके सन्मार्ग-प्रदर्शका आचार्या गुरवो भवन्ति, सदा च ते मान्यन्ते। परं शिक्षा यतोऽपि लभ्येत, तत एव स्वीकार्या। न तस्मिन्नवसरे शिक्षयितुर्जातिर्वयो लिंग वा समीक्ष्यते। विद्वांस सदा कथने गुणानेव पश्यन्ति न योग्यताम्। यथाऽशुचिस्थाने पतितमपि काञ्चन ग्राह्य भवति, तथैवाशुचे कुत्सितादपि श्रेयस्कर वाक्य श्रोतव्यम्। न तत्र कोऽपि दोष। गुण-ग्राहिषु गुणा गुणत्व बिभ्रति नागुणज्ञेषु। 'गुणा गुणज्ञेषु गुणा भवन्ति ते निर्गुण प्राप्य भवन्ति दोषा। यथा किराती करि-कुम्भ-जाता मुक्ता परित्यज्य बिभर्ति गुञ्जाम्॥' 'बालादपि सुभाषित ग्राह्यम।' दत्तात्रेय श्वान मार्जार मूषकमपि च स्व-गुरुत्वेनामन्यत। महात्मा गाधी वानरस्य मूर्ति-त्रयादिमा शिक्षामगृह्णात्। १—परस्य दोषान्मा पश्यत। २—न पर-दोषान् शृणुत। ३—परच्छिद्र दृष्ट्वा श्रुत्वाऽपि न वदत। व्यासपुत्र शुको धर्मव्याधाज्ज्ञान प्राप। स्त्रियो नरो वा वृद्धा बाला वा नीचा उच्चैर्वा येऽपि गरीयासोगुणवन्त स्तम एव गुण ग्रहण विधेयम्। शत्रुरपि हित वदन्मानयितव्य। विधर्मिणामपि श्रेयास आदर्शा ग्राह्या। 'गुणा पूजा स्थान गुणिषु न च लिंग न च वय।' 'कनक-भूषण सग्रहणोचितो यदि मणिस्त्रपुणि प्रति बध्यते। न स विरौति न चापि स शोभते भवति योजयितु र्वचनीयता।' 'परीक्षका यत्र न सन्ति देशे नार्घन्ति रत्नानि समुद्रजानि। आभीरदेशे किल चन्द्र कान्त त्रिभिर्वराटै विपणन्ति गोपा॥'

———

## ११—सेवाधर्मः परम-गहनो योगिनामप्यगम्यः

संसारे परेषां सेवा परिचर्याऽतिप्रशस्ता, इह सन्त्यनेके जना असहायाः क्षुधिता अनाथा विपद्ग्रस्ता वा। तेषां साहाय्यं सर्वोत्कृष्टो धर्मः। सदुपयोगो ह्ययं प्राणिनां साधनानाम्, 'परोपकार-शून्यस्य धिङ् मनुष्यस्य जीवितम्। जीवन्तु पशवो येषां चर्माऽप्युपकरिष्यति॥' सेवा च केचिदर्थाऽऽशया केऽपि प्रसादाभिलाषेण धनिनां राज्ञां वा कुर्वन्ति। वस्तुतः सैव सेवा दास्य-वृत्तिरुदिता, 'सेवा श्ववृत्तिराख्याता,' तत्रैव मानवानां मानहानिः सत्त्व-भ्रंशो वा जायते। परमसहायानां निर्बलानाम-परिचितानां विनैव स्वार्थं या सेवा विधीयते, सैव सेवा। 'दरिद्रान् भर कौन्तेय मा प्रयच्छेश्वरे धनम्। व्याधितस्यौषधं पथ्यं नीरुजस्य किमौषधैः।' भवति सेवाभावे महत्कष्टम्। स्वार्थस्तत्रोपेक्ष्यते, व्याधिः क्षीयते। प्राणाः संकटे क्षिप्यन्ते। परं न ये तथाप्युद्विग्ना भवन्ति त एव परमार्थे सेवकाः। न तत्र प्रत्युपकारैषणा विधेया। 'इयमुन्नत-सत्त्व-शालिनां महतां काऽपि कठोर-चित्तता। उपकृत्य भवन्ति दूरतः परतः प्रत्युपकार-शंकया॥ न च कोऽपि जनो विचारयेत् 'किं मेऽन्य-साहाय्येन, न मम केनचित्प्रयोजनमिति।' सति काले सर्वैरपि पर-साहाय्यमपेक्ष्यते। 'दन्तस्य निष्कोषणकेन नित्यम् कर्णस्य कण्डूयनकेन वापि। तृणेन कार्यं भवतीश्वराणां किमङ्गवाग्घस्तवता नरेण।' सेवा-व्रती न पराक्षेपेण कष्टैर्वाक्षुभ्यति, नात्म-सौख्य-मसौविध्यं वा गणयते, परीक्षा नाम सा सत्त्वस्य। तत्रोत्तीर्णोनरो विश्वमेव जयति। भूमिरपि सेविता रत्नं प्रयच्छति तरवो मधुराणि फलानि लताश्च सुमनांसि वितरन्ति। परं योऽविचलः सेवा-व्रते, स सेवकः। अत एव योगिनामपि सेवा-धर्मो दुर्लभ उक्तः।

---

## १२—इन्द्रियाणां प्रसंगेन दोषमृच्छत्यसंशयम्

संसारः खलु विषवृक्ष उक्तो विषयासक्त्या । ज्ञानेन्द्रियाणि हि प्राणिनां मनांसि विषयानभिवर्तयन्ति । 'इन्द्रियाणि प्रमाथीनि हरन्ति प्रसभं मनः ।' इन्द्रियाणां हि चरतां यन्मनोऽनु विधीयते । तदस्य हरति प्रज्ञां वायुर्नावमिवाम्भसि ॥' अतएवेन्द्रिय-निग्रहेणानासक्त्या विषयोपभोगेन वा विरज्यते । विषयाऽऽसंगो हि आत्मनो विनिपात-हेतुः । 'सङ्गात्संजायते कामः कामात्क्रोधोऽभिजायते । क्रोधाद् भवति संमोहः, संमोहात्स्मृति-विभ्रमः । स्मृति-भ्रंशाद्बुद्धिनाशोबुद्धि-नाशात्प्रणश्यति ॥' ( गीता ) रूपरस-गन्ध-स्पर्श-शब्दा इन्द्रियाणां मात्रा । 'मात्रास्पर्शास्तु कौन्तेय शीतोष्ण-सुख-दुःखदाः । आगमापायिनोऽनित्यास्तांस्तितीक्षस्व भारत ॥' मृगो नादासक्ततया व्याधेन बध्यते । जिह्वा-लौल्येन वानरो निगृह्यते । भोगासक्त्या पुरुषा वाराङ्गनाभिः खिलीक्रियन्ते । रूपासक्त्या चक्षू रज्यते काम-यातना चानुभूयते । इन्द्रियाणीमानि शरीररथस्य हयाः । मनस्तु सारथिः । परं तत् खल्वसंयतेन्द्रियैर्बलाद् ह्रियते । तदैवात्मा भव-सागरे निमज्जति । वशीकृतानीन्द्रियाणि येन, मुक्तः स संसार-बन्धनात् । न स कर्मभि-र्लिप्यते । अन्यथेमानि जीवमेतं तथा वशीकुर्वन्ति यथा जन्म-शतेनापि न मुच्यते । अतो निग्राह्याण्येवेन्द्रियाणि ।

## १३—विकारहेतौ सति विक्रियन्ते येषां न चेतांसि त एव धीराः

जगति चपल-वृत्तयो धीर-प्रकृतयश्चोभय-विधा जनाः। स्वल्पेऽपि सङ्कटे समुपस्थिते कातर्यं प्रजन्त, रूपादिषु मनुभूत-मात्रेषु हृतेन्द्रिया प्रथम-विधाः। ये तु सत्यपि भयकारणे न बिभ्यति, विषादमूलेष्वपि समुपस्थितेषु न विषीदन्ति, विद्यमानैरपि विषयैर्न ह्रियन्ते ते खलु धीर-पद-वाच्याः। अन्ये तु विडम्बना-पात्राणि। 'ननु प्रवातेऽपि निष्कम्पा गिरयः।' साधारणीषु स्थितिषु तु सर्वेऽपि धैर्यं प्रदर्शयन्ति, क्षोभकारणे विद्यमानेऽपि न येषां विचलति मनः, अबिभ्यतस्तत्प्रतीकारायैव प्रयतन्ते, विदित्वाऽपि भय-कारणं साहमात्तत्र प्रवृत्तिर्विजयश्च तस्य सत्या धीरता। 'भग्निरणा भिन्न सन्धाने भिषजा सान्निपातिके। कर्मणि व्यज्यते प्रज्ञा, स्वस्थे को वा न पण्डितः।' जातमात्रेऽपि विकारे ते नियच्छन्ति तम्। तत्रोषित्वाऽपि निर्लिप्तता तु विस्मयकारिणी।

> प्राणानामनिलेन वृत्तिरुचिता सत्कल्पवृक्षे वने
> तोये काञ्चन पद्म-रेणु-कपिशे पुण्याभिषेक क्रिया।
> ध्यानं रत्न-शिला-तलेषु, विबुध-स्त्री-सन्निधौ संयमः
> यद् वाञ्छन्ति तपोभिरन्य-मुनयस्तस्मिंस्तपस्यन्त्यमी॥ (शा ७।१२)

अतः साधूक्तम्—विकारहेतौ सति विक्रियन्ते येषां न चेतांसि त एव धीराः।

---

## १४—कामार्ता हि प्रकृति-कृपणाश्चेतनाऽचेतनेषु

कामो नाम प्राणिनामचिन्तित उपप्लवः, सहसोपनतो वात्याऽऽघातः, अनभ्रः करकापातो येन सहसैव मथ्यन्ते तेषामिन्द्रियाणि, लुप्यते विवेकः, वशीक्रियते मानसम्, नाश्यते धैर्यम्, विफलतां नीयते ज्ञानम्, विडम्ब्यते तपः, चाल्यते समाधिः। न स्फुरति मतिः कृत्येऽकृत्ये वा। रागासङ्गेन हुतासनेव निर्वास्यते लज्जा, सन्तोऽपि तेन खलीक्रियन्ते। संकल्प-प्रभवोऽयं कल्पते महतोऽपि खिलीकर्तुम्।

'शम्भु-स्वयम्भु-हरयो हरिणे-क्षणानां येनाक्रियन्त सततं गृहकुम्भदासाः।'
वाचामगोचर-चरित्र-विचित्रिताय तस्मै नमो भगवते मकर-ध्वजाय।'

अस्य बलादनुतिष्ठन्ति ते दुःसाहसानि, तरन्ति जलधिम्, लंघयन्ति गिरीन्, विशन्ति पातालम्। विकार-हृत-विवेका पूज्यानगम्यानपि गच्छन्ति। पराशरस्य धीवर-सुतायाम्, प्रजापते स्व-दुहितरि, विभाण्डकस्य मृग्याम्, बृहस्पतेः स्वभ्रातृ-जायायामभिलाषः। नार्यपि वशीकृतानेन पितरं भ्रातरम् अन्यं वा न विचारयति 'यः पार्श्वतो भवति लतेव तं परिवेष्टयन्ति।' हृत-विवेकाः काम-विकला सजल-जलदानपि प्रहर्तुं न बुध्यन्ते, लता अपि प्रेयसी-भुज-वदाचरन्ति। तरु-शाखा अपि विलासिनी-देह-यष्टीरिवालिङ्गन्ति। पुष्पाण्यपि वल्लभा-करतलमिव वक्षसि धारयन्ति। राक्षस्यपि देवाङ्गनायते तेषां कृते। महिष्यपि प्रौढेव रमयति तान्। काक-रुताद् भीताऽपि प्रमदा गहनान्धकार-मलीमसे पथि निर्भयं व्रजति काम-सहाया।

मात्रा स्वस्रा दुहित्रा वा न विविक्तासनो भवेत्।
बलवानिन्द्रिय-ग्रामो, विद्वांसमपि कर्षति॥
दिवा काकरुताद् भीता रात्रौ तरति नर्मदाम्।
तत्र सन्ति जले ग्राहा मर्मज्ञा सैव सुन्दरी॥

बलीयान् रिपुः कामः प्राणिनाम्।

---

## १५—सर्वनाशे समुत्पन्ने अर्धं त्यजति पण्डितः

सर्वेषां प्रवृत्तिरिह जगति भवति प्रियस्य वस्तुनः संग्रहेऽप्रियस्य च हाने। न कोऽपि वाञ्छति त्यक्तुमिष्टम्, सत्यवसरे नश्यत् च रक्षितुं प्रयतते। परं बहुधा समापतति संकटे न सम्भवति सर्वथा रक्षणम्, प्रतिभाति प्रत्यक्षं सर्वस्वहानिः। किमत्र प्रतिविधेयम्? तत्र केचिदबुद्धिमन्तो हठादखिलमपि त्रातुं प्रयतमानाः स्वयमपि नश्यन्ति। अन्ये च न शक्नुमो वयं प्रतिकर्तुम्, गच्छति चेद् गच्छतु' इति सर्वस्वमपि नाशयन्ति। परं न नीतिमतामयं पन्थाः। तेषां यावच्छक्यं भवति प्रयत्नो रक्षणे, यदा तु न समस्तस्य रक्षा सम्भवति तदाऽंशत्यागेनापि त्रायन्ते शिष्टम्। फल्गुनस्त्यागेन सारवतो ग्रहणं तत्र क्रियते। यथा जलयाने ब्रुडति सागरे लघूकरणाय तस्य, प्राण रक्षार्थं वस्तुसंभारा जले क्षिप्यन्ते। रत्नानां समक्षं धातवस्त्यज्यन्ते। परं बहुधा धर्मं विचार्य स्वात्मनाऽपि दीनाः परिपाल्यन्ते। यथा पोताद् रिक्तीक्रियमाणात् पूर्वं स्त्रियः शिशवश्चावतार्यन्ते। दुर्गाद् वाऽवरुद्धात् तेषां कर्मचारिणामाश्रितानां च निष्क्रामणमर्हम्। आपदर्थं धनं रक्षेद् दारान् रक्षेद् धनैरपि। आत्मानं सततं रक्षेद् दारैरपि धनैरपि॥ त्यजेदेकं कुलस्यार्थे, ग्रामस्यार्थे कुलं त्यजेत्। ग्रामं जनपदस्यार्थे आत्मार्थे पृथिवीं त्यजेत्॥ सर्वनाशे समुत्पन्ने अर्धं त्यजति पण्डितः। अर्धेन कुरुते कार्यं सर्वनाशो हि दुःसहः॥ राष्ट्र-रक्षार्थं राजा पुत्रस्यापि त्यागं विदध्याच्चेत्तदपि कल्याणाय कल्पते।

---

## १६—न्याय्यात्पथः प्रविचलन्ति पदं न धीराः

विद्वांस प्रकृत्या सन्मार्गमनुरुन्धते, खलाश्चासन्मार्गम्। कोकिलाना रसाले काकाना तु कटुनिम्बे रुचि। न च सरल साधु पथ, प्राय. कण्टकाऽऽकीर्णोऽयम्। अनुभूयन्ते तत्र महान्ति कष्टानि, अर्ज्यते खल-विरोध, सह्यन्ते प्रायेण परेषामाक्षेपाः। पर न सख्यावन्त कदाचित् सत्पथान विवेक स्वदृढता वा त्यजन्ति। 'तुङ्गत्वमितरा नाद्रौ नेद सिन्धावगाहता। अलघनीयताहेतुरुभय तन्मनस्विनि॥' एव मनस्विनस्ते नीतिमार्गमनुरुन्धाना राज्ञामपि विरोधमुपेक्षन्ते। 'नरपति-हित-कर्ता द्वेष्यता याति लोके जन-पद-हित-कर्ता त्यज्यते पार्थिवेन्द्रै। इति महति विरोधे वर्तमाने समाने नृपति-जनपदाना दुर्लभ कार्यकर्ता।"

वस्तुतो न्याय-मार्ग स एव य सन्तोऽनुसरन्ति, यतो ह्युदयतेरवि सैव प्राची। न स जातु दिगधीन उदेति। "वयमिह पदविद्या तर्कमान्वीक्षिकी वा यदि पथि विपथे वा वर्तयाम स पन्था। उदयति दिशि यस्या भानुमान्, सैवपूर्वा, नहि तरणिरुदीते दिक्पराधीन-वृत्तिः॥

'तर्कोऽप्रतिष्ठ श्रुतयो विभिन्ना नैको मुनिर्यस्य मत प्रमाणम्। धर्मस्य तत्त्व निहित गुहाया महाजनो येन गत स पन्था॥ 'न जातु कामान्न भयान्न लोभाद् धर्मं त्यजेज्जीवितस्यापि हेतो·।' 'निन्दन्तु नीति निपुणा यदि वा स्तुवन्तु लक्ष्मीः समाविशतु गच्छतु वा यथेष्टम्। अद्यैव वा मरणमस्तु युगान्तरे वा न्याय्यात्पथ प्रविचलन्ति पद न धीराः॥'

# १७—बहु-प्रजा निर्ऋतिमाविवेश

लोके प्रजा सन्तानार्थिन्य, पाणिग्रहणस्य प्रयोजनमपि सन्ततेरधिगतिरेव चोदिता शास्त्रकारैः। पितॄणामृणान्मुक्तिरपत्याधीना। प्रकृत्याऽपि जनो वात्सल्य-निर्भरः। 'अपुत्रस्य गृहं शून्यम्' इति चोच्यते। परं बहु-सन्ततिः दोषायैव सम्पद्यते। धनिकानामपि बहवः पुत्राः पुत्रिका वा स्युश्चेत् सर्वदा दायविभजनैर्गोत्रश्री शीघ्रमेव क्षयमेति, पुत्रीणां वा विवाहे यौतुकादिना गच्छति। दरिद्रस्य तु बह्वपत्यता कुष्ठे पामेवातिशयेन कष्ट-प्रदा। यतस्तेषां भरण-पोषणे शिक्षणे च भूयसोऽर्थस्य व्ययोऽपेक्ष्यते। परम् 'भोजने यत्र सन्देहो धनाशा तत्र कीदृशी।' तत्रापि सन्ततिः सद्गुणा स-विद्या च स्याच्चेत् तोषोऽपि क्रियेत। परं रासभीसूनाविव च बाल्ये रूपेण पित्रोर्मनो मोदयति पश्चाच्च दुर्व्यसनैर्दुश्चरितेन च कुलं कलङ्कयति सुते शल्याविद्धमिव हृदयम्। एकेनापि पुत्रेण कुलं समुन्नीयते, बहुभिरपि किंशुकैरिव निर्गुणैः शिशिर-समयैरिव बहुल-दोषैः, शूलैरिव मर्मवेधिभिः, सर्पैरिव कुटिलगतिभिर्वंशस्यापकीर्तिर्जायते। 'एकेनापि सुपुत्रेण सिंही स्वपिति निर्भयम्। सहैव दशभिः पुत्रैर्भारं वहति गर्दभी।' 'वरमेको गुणी पुत्रो न च मूर्खशतान्यपि। एकश्चन्द्रस्तमो हन्ति न च तारागणोऽपि तु॥' एवं निर्गुणाऽपि जायमानाऽधिका सन्ततिः केवलं क्लेशाय कल्पते। भारते चान्न-सङ्कटे सति प्रतिदिनमुपचीयमाना जनसंख्या कठिना समस्या। प्रतिवर्षं पञ्चाशल्लक्ष परिमाणा वृद्धिः। परिवार-नियोजनं कृत्रिमैरुपायैः साध्यते। तेनानाचारस्यैव वृद्धिः। कुमारीणामपि निःशङ्कतया सहवासे प्रवृत्तिः। स्त्रीणां स्वास्थ्यहानिः। विलास-प्रधानेऽपि काले नियन्त्रितोपभोगस्यैव व्यवस्था साधीयानुपायः।

---

## १८—कर्म कः स्वकृतमत्र न भुङ्क्ते

प्राणिनो जीवन्त शुभान्यशुभानि वा कर्माणि नित्यमनुतिष्ठन्ति । शुभानि सत्परिणामानि । तद् विपरीतानि चाशुभानि । केषां चित्फलमिहैव जन्मनि । इतरेषां चान्यस्मिन् । 'पूर्वजन्म कृत कर्म तद्दैवमिति कथ्यते ।' इत्थ स्वय कर्म-बलात्स्व-भाग्य निर्माण क्रियते । भारतीय दर्शनानुसारेणात्मन शरीरधारण तत्कर्म फलानु-रोधादेव । सत्कर्मणा फल नासाधु जायते । 'नहि कल्याणकृत्कश्चिद् दुर्गति तात गच्छति ।' अवश्यमेव भोक्तव्य कृत कर्म शुभाशुभम् ।' स्वोद्यमस्य परिणतिर्यथा सुखे तथैव सत्कर्माऽऽचरणेन निःश्रेयस-सिद्धि । सकलस्य जीवनस्य विनैव क्लेश यापनाय शुभाना कर्मणामेवानुष्ठानम् । पापकर्मणः फल तद्विपरीतमेव प्रच्छन्नस्यापि कर्मण परिणामो नापलाप्यते । 'त्रिभिर्वर्षैस्त्रिभिर्मासैस्त्रिभि पक्ष स्त्रिभिर्दिनै । अत्युत्कटै पाप-पुण्यैरिहैव फलमश्नुते ॥' पुरुषाणा कुष्ठाद्युपभोग स्त्रीणा च वेश्या वृत्या दुरन्तस्य दुष्कर्मणा सूचका । अद्य कर्मफलशका-हीना जना यथेच्छ पापानि कुर्वन्ति । पर पीडन ममता गतम् । पर नोपेक्षया कोऽपि परिणत्या रक्ष्यते । अतो यथा साध्य शुभमेव कर्मानुष्ठेयम् ।



## १६—उपनतमवधीरयन्त्यभव्याः

लोकेऽस्मिन् प्राणिना जीवने सर्वेषामपि सम्पदा विपदा च काल आयाति ।

> कल्याणी बतगाथेय लौकिकी प्रतिभाति मे ।
> एति जीवन्तमानन्दो नर वर्षशतादपि ॥

बहूना सम्पद् विपद् वा स्वयमर्जिता भवति । यथाऽवसर च निखिलोऽपि जनो लभते साधनानि सुविधाश्च यासा प्रयोगेण सकलमपि जीवित सुखमित प्रभवेत् । बुद्धिमन्त. ता अभिनन्दन्ति, कृत्वा सदुपयोगमायतिमुज्ज्वला विदधति । परे चालस्येनोपेक्षया गर्वेण वा काले ता अनादृत्य पश्चात् प्रत्यानतु चेष्टन्ते । न खलु गत समयो भूय उपलभ्यते । यथा कोऽपि पुरस्य भोजन निराहत्यान्यत्र भोक्तुमाशास्ते, पर न लभते स क्वापि । उपनतस्यावसरस्य साधनाना व सदुपयोग कार्य । न तानि पुनरावर्तन्ते । बुद्धिमन्तो ऽभिज्ञाय तत्र गृहीत क्षणा जायन्ते । जीवितमपि नेद सामान्यम् । नैतदुपयुज्य सन्मार्गे वृथैव यापयन्ति ये, तेषा पश्चात्ताप एव शिष्यते । अन्धो यथा गले निधीयमाना स्रज सर्प-शङ्कया धुनोति, पश्चाच्च लब्धु कामयते । तथैव अभद्रा अकल्याण दर्शिन , अनात्मज्ञा समक्षमागत शुभ तिरस्कुर्वन्ति । 'Time once gone cannot be recalled' इत्याङ्ग्लोक्तिरपि तत् समर्थयते । अत समुपागतस्य भद्रस्य सावधानमभिनन्दन विधेयम् । यत श्रीर्निहिता तत्र ।

---

## २० — सुखमुपदिश्यते परस्य

जीवितेऽस्मिन् सकलोऽपि जनोऽनुभवति सशय शतानि। जायन्ते प्राय स्खलितानि तस्य। समापतन्ति पुरत प्रमादावसरा। अभिभवन्ति त व्यसनासगा। न कोऽपि वञ्च्यते तदनुभूतिभि। पर दृश्यते, स्व प्रमादे विषाद, परस्य चोपहास। दुश्चरितोऽपि प्रतिवेशिनमाक्षिपति, तमुपदिशति साध्वाचरणाय, नात्मानमालोकयति। बहुधाऽन्य सकट उपहस्यते जनै। पर शूलाविद्ध एव तत्पीडा जानाति। 'न हि वन्ध्या विजानाति गुर्वीं प्रसव-वेदनाम्।' स्वय विपदि पतितो विकार-काले चाऽविकृत मना सत्य पण्डित। स एव परोपदेशे प्रभवति। आत्मना रोगातुर पर पथ्यमुपदिशन् विडम्ब्यत एव लोके। 'परोपदेशे पाण्डित्य सर्वेषा सुकर नृणाम्।' आत्मालोचन खलु विधेयम्।

'गच्छत स्खलन क्वापि भवत्येव प्रमादत। हसन्ति दुर्जनास्तत्र समादधति सज्जना॥' 'खल सर्षपमात्राणि परच्छिद्राणि पश्यति। आत्मनो बिल्वमात्राणि पश्यन्नपि न पश्यति॥' अत सुमतय स्वय साध्वाचरन्त एव परानपि तथोपदिशन्ति। तेषामेव शिक्षा दर्पण इवान्येषा मनसि प्रतिफलति। तत्रैव परीक्षा। 'मुखमस्तीति वक्तव्य दश-हस्ता हरीतकी।' को न क्षमत उपदेष्टुम्। 'ज्ञान भार क्रिया विना।' 'कथनी तज करनी करै पण्डित जानो सोय।'

अत स्वयमाचरण पथ्यम्। तत्रैव कष्टम्। सुखमुपदिश्यते परस्य।



# सहायक-ग्रन्थ-सूची (Bibliography)


| ग्रन्थ | रचयिता |
|---|---|
| (१) ऋक्संहिता | |
| (२) अथर्वसंहिता | |
| (३) यजुःसंहिता | |
| (४) शतपथब्राह्मणम् | |
| (५) ऐतरेयोपनिषद् | |
| (६) छान्दोग्योपनिषद | |
| (७) तैत्तिरीयोपनिषद् | |
| (८) ईशोपनिषद | |
| (९) कठोपनिषद | |
| (१०) बृहदारण्यकोपनिषद् | |
| (११) वैदिक माइथोलोजी | मैक्डानल |
| (१२) वाल्मीकि—रामायणम् | |
| (१३) महाभारतम् | |
| (१४) ओरिजिनल टैक्स्ट्स ऑफ संस्कृत | जे म्यूर |
| (१५) संस्कृत ड्रामा | कीथ |
| (१६) रघुवंश | कालिदास |
| (१७) कुमारसम्भवम् | ,, |
| (१८) हर्षचरितम् | बाण भट्ट |
| (१९) ऋतुसंहार | कालिदास |
| (२०) शाकुन्तलम् | ,, |
| (२१) विक्रमोर्वशीयम् | ,, |
| (२२) मालविकाग्निमित्रम् | ,, |
| (२३) मेघदूतम् | ,, |
| (२४) कादम्बरी | बाणभट्ट |
| (२५) काव्यमीमांसा | राजशेखर |
| (२६) काव्यप्रकाश | मम्मट |

| | |
|---|---|
| (२७) औचित्यविचार चर्चा | क्षेमेन्द्र |
| (२८) रसगङ्गाधर | जगन्नाथ |
| (२९) शिशुपाल-वधम् | माघ |
| (३०) किराताजुर्नीयम् | भारवि |
| (३१) काव्यतत्त्व समीक्षा | नरेन्द्रनाथ चौधरी |
| (३२) साहित्य दर्पण | विश्वनाथ |
| (३३) मालती माधवम् | भवभूति |
| (३४) संस्कृत-साहित्य का इतिहास | बलदेव उपाध्याय |
| (३५) संस्कृत-साहित्य की रूपरेखा | चन्द्रशेखर पाण्डेय |
| (३६) संस्कृत-साहित्य का इतिहास | कीथ |
| (३७) संस्कृत साहित्य का इतिहास | चिन्तामणी विनायक वैद्य |
| (३८) Riddles of Ramayana | " |
| (३९) महाभारत-मीमांसा | " |
| (४०) कालचक्र | सिद्धेश्वर वर्मा |
| (४१) महाभाष्यम् | पतञ्जलि |
| (४२) वाक्यपदीयम् | भर्तृहरि |
| (४३) वृत्ति—वार्तिकम् | अप्पयदीक्षित |
| (४४) गङ्गा वेदाङ्क | |
| (४५) वैदिक ज्योति | आचार्य वैद्यनाथ |
| (४६) उरु ज्योति | वासुदेवशरण अग्रवाल |
| (४७) वैदिक सलेक्शन ३य संस्करण, भाग १ | पीटर्सन |
| (४८) वैशेषिक सूत्रम् | |
| (४९) ध्वन्यालोक | आनन्द वर्धन |
| (५०) साहित्यदर्पण भूमिका | काणे |
| (५१) वैदिक संस्कृति और साहित्य | बलदेव उपाध्याय |
| (५२) भारतीय दर्शन | " |
| (५३) कुवलयानन्द | अप्पयदीक्षित |
| (५४) कालिदास एण्ड भवभूति | ज धी भट्टाचार्य |
| (५५) कालिदास का भारत वर्ष | भागवतशरण उपाध्याय |
| (५६) कालिदास | चन्द्रबली पाण्डेय |
| (५७) नैषधीय चरित | श्रीहर्ष |